श्रीः

उभयवेदान्तग्रन्थमाला

श्री कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-

श्रीमद्वेंकटनाथार्य-श्रीवेदान्तदेशिक-

विरचित-मणिप्रवालमय-

# श्रीमद्रहस्यत्रयसार-

# संस्कृतानुवादः

---

विद्वद्वरिष्ठैः दक्षिणोत्तरदेशद्वयप्रसिद्धैः (कों. न)

श्री. कृ. व. नीलमेघाचार्यैः कृतः

श्री बडोदा-चान्दोद-धर्मचक्रोदयमठपीठ मूर्धाभिषिक्तैः

श्री १००८ श्रीयुतस्वामिभिः

अनिरुद्धाचार्य वेंकटाचार्यैः संशोध्य

सुप्रसिद्धकलकत्ता मगनीरामबांगरधर्मद्रविणसाहाय्येन प्रकाशितः

मूल्यम्— 1968 रू. 10— 00

---

संपादकाः-अभिनवदेशिक (उत्तमूर् ति.) वीरराघवाचार्याः, मद्रपुरी

श्रीः

## उभयवेदान्तग्रन्थमाला

श्री कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-

श्रीमद्वेंकटनाथार्य-श्रीवेदान्तदेशिक-

विरचित-मणिप्रवालमय-

# श्रीमद्रहस्यत्रयसार-

## संस्कृतानुवादः

---

विद्वद्वरिष्ठैः दक्षिणोत्तरदेशद्वयप्रसिद्धैः (को. न)

**श्री. कू. व. नीलमेघाचार्यैः कृतः**

श्री बडोदा-चान्दोद-धर्मचक्रोदयमठपीठ मूर्धाभिषिक्तैः

श्री १००८ श्रीयुतस्वामिभिः

**अनिरुद्धाचार्य वेंकटाचार्यैः संशोध्य**

सुप्रसिद्धकल्कत्ता मगनीरामबांगरधर्मद्रविणसाहाय्येन **प्रकाशितः**

मूल्यम्— 1968 रू. 10—00

---

संपादकाः-अभिनवदेशिक (उत्तमूर् ति.) वीरराघवाचार्याः, मद्रपुरी

रामानुजार्यदिव्याज्ञा प्रतिवासरमुज्ज्वला ।
दिगन्तव्यापिनी भूयात् सा हि लोकहितैषिणी ॥

## गुरुपरम्परानुसंधानम् —

अस्मद्गुरूंस्तद्गुरूंश्च प्रणिपत्याखिलान् क्रमात् ।
वेदान्तदेशिकं वयं वादिहंसाम्बुदं गुरुम् ॥

श्रीमन्तं रङ्गराजार्यं रामानुजगुरूत्तमम् ।
प्रणतार्तिहराचार्यं श्रीमल्लक्ष्मणयोगिनम् ॥

महापूर्णं यामुनार्यं रामं पद्मविलोचनम् ।
नाथं शठारिं सेनेशं श्रियं श्रीशञ्च संश्रये ॥

यस्य वाग्भूतिपर्यन्ता यतिराजसरस्वती ।
तस्मै वेदान्तगुरवे भूयोभूयो नमोनमः ॥

विगाहे निगमान्तार्यविष्णुपादसमुद्भवाम् ।
रहस्यत्रयसाराख्यां त्रिस्रोतसमकल्मषाम् ॥

अविज्ञातं विजानतां विज्ञातमविजानताम् ।
रहस्यत्रयसाराख्यं परं ब्रह्मास्तु मे हृदि ॥

# श्रीदेशिकपर्यन्तगुरुपरम्परा

नारायणः

श्रीः

श्रीविष्वक्सेनः

श्रीशठकोपसूरिः

श्रीमन्नाथमुनिः

श्रीपुण्डरीकाक्षः

श्रीराममिश्रः

श्रीमद्यामुनमुनिः

श्रीमहापूर्णः

श्रीभगवद्रामानुजमुनिः

| | | |
|---|---|---|
| प्रणतार्तिहराचार्य | श्रीकुरुकेशसूरि- | गोविन्द-एम्बार |
| रामानुजार्य | श्रीविष्णुचित्तार्य | भट्टार्य |
| रङ्गराजगुरु | वात्स्यवरदाचार्य | नञ्जीयर् |
| | | नम्बिळ्ळै |

| | |
|---|---|
| श्रीवादिहंसाम्बुदाचार्य (श्रीरामानुजार्य) | वडक्कुत्तिरु वीथिप्पिळ्ळै |
| श्रीमद्वेदान्ताचार्य | लोकाचार्य |
| | तिरुवाय्मोळिप्पिळ्ळै |
| | मणवाळ मामुनि |

श्रीवेदान्तदेशिकसंप्रदायस्थानां श्रीभाष्यकारात् प्रणतार्तिहराचार्यादिद्वारा रहस्यार्थप्राप्तिः; कुरुकेशार्यादिद्वारा श्रीभाष्याद्यर्थप्राप्तिः। मणवालमामुनिसंप्रदायस्थानां गोविन्दसूर्यादिद्वारा। त इमे श्रीमन्तो वेदान्ताचार्याः वडकलैसंप्रदायस्थानां सर्वेषामपि सर्ववेदान्तरहस्यग्रन्थेष्वप्याचार्याः संप्रति तेन्कलैसंप्रदायस्थानामपि उपनिषद्ब्रह्मसूत्र श्रीभाष्य-गीताभाष्यादिवेदान्तप्रस्थाने आचार्याः।

श्रीभाष्यकाराणां श्रीमहापूर्णाः प्रधानाचार्याः ; रहस्यत्रय-संबन्धिकतिपयविशेषार्थोपदेशात् आचार्याः श्रीगोष्ठीपूर्णाः । दिव्य-प्रबन्धार्थोपदेशादाचार्याः श्रीमालाधरगुरवः ।

शुभमस्तु

श्रीः

श्रीमते निगमान्तगुरवे नमः

## प्रकृतग्रन्थविषयविभागः

श्रीमद्रहस्यत्रयसार इति प्रसिद्धोऽयं ग्रन्थः रहस्यत्रयार्थ-निरूपणैकपरः । रहस्यत्रयं तावत्—मूलमन्त्र इति श्रीमन्त्र इति च प्रसिद्धः श्रीमदष्टाक्षरमहामन्त्रः । इदं प्रथमं रहस्यम् । द्वयमिति मन्त्र-रत्नमिति शरणागतिमन्त्र इति च प्रसिद्धं द्वितीयम् । श्रीगीता-चरमश्लोकः तृतीयम् ।

अस्य ग्रन्थस्य भूमिकाभूतः गुरुपरम्परासारः ।

ग्रन्थेऽस्मिन् भागचतुष्टयम्; द्वात्रिंशदधिकाराः । तत्राऽऽदिमः उपोद्घाताधिकारः ।

प्रथमः अर्थानुशासनभागः द्वाविंशत्यधिकारात्मा । तत्र सर्व-वेदान्तप्रमेयनिरूपणेन परतत्त्व-परमहित-परमपुरुषार्थव्युत्पादनम् ।

द्वितीयः स्थिरीकरणभागः—तत्र यथावत् सिद्धसाध्योपाय-तत्प्रभावस्थिरीकरणम् ।

तृतीयः पदवाक्ययोजनाभागः—तत्र रहस्यत्रयघटकपद-तदर्थ-वाक्य-तदर्थनिरूपणम् ।

तुरीयः संप्रदायप्रक्रियाभागः । तत्र आचार्यशिष्यकृत्य-निरूपणम् । अन्ते निगमनाधिकारः ।

शुभमस्तु

श्रीः

# श्रीमद्रहस्यत्रयसारे कतिपयांशविशदीकरणम्

पु.

5. **क्षत्रबन्धुः**—एतच्चरितं विष्णुधर्मे 97

**पुण्डरीकः** भा. अनु. 106 ; इति. समु. 31. 128

9. **कठजाबालादिश्रुतिष्विति**। अत्र, 'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ । तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति श्वेताश्वतरश्रुत्यर्थोऽभिमतः । छान्दोग्ये जाबालसत्यकामस्य वाक्यम्, "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति ।

**सञ्जयेति** । 'शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्' इति, 'व्यासप्रसादात् श्रुतवान् एतद्गुह्यमहं परम्' इति च ।

**रैक्वेति** । छान्दोग्ये संवर्गविद्यायां रैक्वजानश्रुत्युपाख्यानम् ।

गुरुं प्रकाशयेदिति श्लोके उक्ते **संपदायुषी** उपरि शिष्यकृत्याधिकारे (421) 'ज्ञानवैराग्यपूर्विका भगवदनुभवसंपत्, आत्मसत्तानुवृत्तिहेतुः शेषत्वानुसंधानपूर्वकस्वनिष्ठा च' इति विवृते ।

12. **चतुर्विधायां भुवीति**। द्रामिडैः भूमिः पञ्चधा विभज्यते, कुरिञ्जि (पर्वतः), मरुदम् (केदारः), मुल्लै (वनम्), नेय्दल् (अर्णवादि), पालै (मरुप्रदेशः) इति । पर्वतादयः तत्तत्प्रान्तदेशविशिष्टाः ग्राह्याः । मरुप्रदेशस्य मनुष्यवासानर्हत्वात् तद्वर्जं भूभागचतुष्टयमिह गृह्यते ।

14. गुरुपरिषदुपज्ञमिति । उपज्ञायत इत्युपज्ञा । समासे क्लीबता । तदुपज्ञं यथा तथेति प्राप्तिक्रियाविशेषणात् गुरुमुखात् प्राप्ति-लाभः । यद्वा गुरुपरिषदुपज्ञं किङ्करत्वाधिराज्यं शास्त्रार्थनिर्णायकसूक्ति-सहितरहस्यं वा प्राप्येत्यर्थोऽस्तु ।

**सहस्रस्थूणेति** । तलवकारोपनिषदि, 'सहस्रस्थूणे दृढ उग्रे यत्र देवानामधिदेव आस्ते' (श्रु. प्र.) । अपराजिता पूरिति छान्दोग्ये दहरविद्यायाम् । कौषीतक्युपनिषदि पर्यङ्कविद्यायां विरजा नदी, अपरा-जितमायतनम्, विभुप्रमितमण्डपे अमितौजाः पर्यङ्क इत्यादि ।

24. **आत्माभिमानानुगुणेति** । तिरुवाय्- 9. 4. 4 दुर्ग्र-हपदविवृतौ (पिळ्ळै) अभियुक्तश्लोक उदाहृत एवम्, "आत्माभिमानानु-गुणपुरुषार्थव्यवस्थया । भगवत्पारतन्त्र्यादि प्रबुद्धस्य सुखायते" इति ।

47. पुरुषं मणिवरतयेत्यादि सर्वं श्रीविष्णुपुराणे (६) विशदम् ।

47. शाण्डिलीवृत्तान्तो भारते ।

142. **मूलभूतश्रुतिः** "न खलु भागवता यमविषयं गच्छन्ति । इहैवैषां केचिदुपप्लवा भवन्ति, काणा भवन्ति, खञ्जा भवन्ति अविधेय-पुत्रा भवन्ति, अविधेयभार्या भवन्ति" इत्यादिः ।

146. उषस्तिवृत्तं छान्दोग्ये 1-10

158. **कुण्डधारोपाख्यानम्** भा. शा. 277; हरिवंशे

167. अमानवसंज्ञेति । विद्युत्, विद्युत्पुरुषः, वैद्युतः । अमानवः, मानस इत्येवं बहुभिः पदैरुच्यमान एक एवाऽऽतिवाहिकः । स परमपदात् भगवता प्रेषितो नित्यसूरिः चन्द्ररूपातिवाहिकानन्तरमत्राऽऽगतः आब्रह्मप्राप्ति अविसृज्यातिवहति ।

श्रीनारायणीयम् भा. शा. 349

175. धर्मव्याधः वि. ध; भा. वन. 210

श्रमणी. शबरी. रा. आर.

193. ये नाथवन्तइति बलरामं प्रति सात्यकिवचनम् । ययातेः स्वर्गात् पतितस्य तद्दुहितृपुत्राश्चत्वारः शैव्यादयः स्वस्वसुकृतदानेनोद्गमयितार इति दृष्टान्तार्थः (आरण्यपर्वणि) ।

199. लयभोगार्चनेति । लयार्चा, भोगार्चा, काम्यार्चेति लक्ष्म्यर्चामूर्तित्रैविध्यम् । तत्र भगवद्वक्षसि अर्चा लयार्चा । भगवतः पार्श्वे अर्चा भोगार्चा । भगवन्तं विना पृथगालये प्राधान्येन स्थिता अर्चा काम्यार्चेति भेदः ।

207. विष्णुचित्ताः (एङ्गलाड्वान्), श्रीभाष्यकारशिष्यउभयवेदान्तसिंहासनाधीश. भगवद्विषयगाथाभाष्यकार. श्रीकुरुकेशाख्यदेशिकानां शिष्याः । श्रीवात्स्य वरदाचार्याः तच्छिष्याः (अम्माळ्), श्रुतप्रकाशिकाकाराणामाचार्याः । वादिहंसाम्बुदाः, तेषां वरदाचार्याणां शिष्याः श्रीमद्वेदान्तदेशिकानां साक्षादाचार्याः मातुलाश्च । एभिः प्रपत्तिमधिकृत्य विप्रतिपत्तिविधूननेन संग्रहग्रन्थाः न्यबन्धिषत ।

236. तुलाधार. जाजल्युपाख्यानं भा. शा. 267

242. **विष्णुहस्तप्रदानम्** । मन्त्रदीक्षाकाले शिष्यगात्रे मन्त्रविदाचार्यकरस्पर्शो विहितः विष्णुहस्तप्रदाननाम्ना व्यवह्रियते आगमेषु । तेन दीक्षातिशयः ।

**महाभागवतस्पर्शः** । "अधिवासादिकं कर्म यथावत् कर्तुमक्षमः । महाभागवतस्पर्शमेकं वा कारयेत् सुधीः" इति विहितो बिम्बस्पर्शः ।

258. **ऊनहीने**ति । 'तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः' इति पञ्च संस्काराः विहिताः । यागो भगवदाराधनम् । तत्र प्रवृत्तेषु **ऊनः** तापसंस्कारहीनः, **हीनः** पुण्ड्रसंस्कारहीनः, **परित्रस्तः** नामसंस्कारहीनः, नष्टः मन्त्रसंस्कारहीनः । यद्वा "तथा स्वकर्मशास्त्रेशगुरुसत्संगवर्जिताः । ऊनहीनपरित्रस्तनष्टाः ज्ञेयाः समाख्यया" इत्युक्तरीत्या स्ववर्णाश्रमधर्महीनः **ऊनः**, स्वसूत्रत्यागी **हीनः**, स्वगुरुदेवतात्यागी **परित्रस्तः**, सत्संगरहितः नष्टः इति वदन्ति । अन्ये तु ऊनहीनत्रस्तनष्टदग्धा ज्ञेयाः समाख्ययेति उत्तरार्धं पठित्वा, स्वकर्मत्यागी, सूत्रत्यागी, देवतात्यागी, गुरुत्यागी. सत्संगत्यागीति पञ्च क्रमेण ऊनादिनामभाज इत्याहुः । मूले दग्धेति पाठो न लक्ष्यते ।

319. **शास्त्रसिद्धमिति** । सकृदुच्चारः संसारविमोचनं भवतीति श्रुतिः । "अहो द्वयस्य माहात्म्यमहो वीर्यमहो बलम् । किं नु तस्य च मन्त्रस्य कर्मणः कमलासन । न लभ्यतेऽधिकारी वा श्रोतुकामोऽपि वा पुनः ।"....पाद्मे...."को मन्त्रः सर्वमन्त्राणां पुरश्चरणवर्जितः । सकृदुच्चारणात् नृणां ददाति परमं पदम् ।...मन्त्ररत्नं द्वयं

न्यासः प्रपत्तिः शरणागतिः । लक्ष्मीनारायणश्चेति हितं सर्वफलप्रदम् ।.... तस्योच्चारणमात्रेण परितुष्टोऽस्मि नित्यशः ।....शौनकादिमहर्षीणां नैमिशारण्यवासिनाम् । नारदः प्रददौ मन्त्रं प्रपत्तिं शरणागतिम्" इत्यादि ।

332. **दधिभाण्डेति** । दधिभाण्डनामा कश्चित् गोपः । कृष्णः स्वग्रहणार्थमनुद्रुतैः स्वयमग्राह्यत्वाय धावन् तद्गोपगृहं प्रविश्य दधिकटाहेन मामावृणु इति तं गोपमर्थयामास । स तथैवाकरोत् । अनुद्रुतेषु अबुध्वा अपगतेषु कटाहमपनेतुं कृष्णस्तमयाचत । स तु, मह्यं मोक्षमिह जन्मनि ददामीति ब्रूहि, अन्यथा नापनेष्यामीति निर्बबन्ध । कृष्णे प्रतिश्रुत्य पुनः प्रार्थितवति, 'न केवलं मह्यम्, अस्मै दधिकटाहायापि दास्यामीति ब्रूहीत्यवोचत् । अथ तस्मै इव दधिकटाहान्तर्गतजीवायापि मोक्षे संकल्पित एव कटाहमपसारयामासेति कथा ।

409. **पञ्चाग्निविद्या** । ब्रह्मात्मकस्य प्रकृतिविनिर्मुक्तस्य जीवात्मन उपासनरूपा छान्दोग्यादिगता ।

417. **कुलिङ्गशकुनिर्यथेति** । 'कुलिङ्गशकुनिर्नाम हरेर्दारितदन्तिनः । मुखादामिषमादत्ते; वक्ति 'मा साहसं कुरु' ॥ कुलिङ्गशकुनिमुखाद्भवन् शब्दः मा साहसंकुर्वित्येवंरूपः । तत्कार्यं तु जृम्भमाणसिंहमुखे प्रविश्य दन्तलग्नस्य दन्तिमांसस्य हठात् ग्रहणेन निष्क्रमणम् ।

426. **प्रत्येयस्त्विति** । प्रत्यगिति स्वात्मा कथ्यते । प्रत्यक्छब्दार्थ एव प्रत्येय इत्यनेनोच्यते । **प्रत्येयः** प्रतीपमञ्चनीयः । इदमिति ग्रहं विना अहमिति ग्राह्यस्तावत् जीवः इदमितिग्राह्यप्रकृतिप्राकृतविलक्षण इति प्रथमवाक्यार्थवर्णनं युक्तम् ।

430. **वान्ताशित्वम्** । उद्गीर्णभक्षकत्वम् । शिष्यक्षेमरूप-प्रयोजनमनुद्दिश्य भृत्या आर्जनार्थं प्रतिबोध्य लब्धद्रव्येण जीवनम् ।

430. **वसिष्ठव्यपदेशित्वन्यायः** । विष्णोरहं शेष इति वैष्णवत्वनिर्देशादतिशयितः, अस्य श्रीवैष्णवस्याहं शिष्य इति स्वाचार्यशेषत्वव्यपदेशः ।

1 इत्थं व्याख्येयभागेषु बहुष्वन्येषु सत्स्वपि ।
अवकाशानुरूप्येण केचिदंशाः प्रदर्शिताः ॥

2 अथाष्टाक्षरमन्त्रार्थयोजनारीतिरुच्यते ।
वाक्यैकत्वे द्वे, द्वितायां तिस्रः, त्रित्वे च पञ्च ताः ॥

3 नारायणे स्यादोंकारवाच्ये मे शरणागतिः ।
नारायणे स्यादोमर्थे कैङ्कर्यात्मा नमस्क्रिया ॥

4 आय नारायणायैवाहं न मे त्विति तत्त्वधीः ।
अहं समर्पितोऽस्म्याय तस्मै नास्मि भरो मम ॥

5 आय नारायणाय स्यां दासोऽनिष्टं न मे भवेत् ।
आयास्मि शेषो न मम, स्यां नारायणदास्यकृत् ॥

6 आयैवाहं माऽस्त्वनिष्टं दास्यं नारायणेऽस्तु मे ।
आयैवाहं ममानिष्टं क्षिप त्वद्दास्यदो भव ॥

7 आयार्पितोऽहं माऽनिष्टं स्यान्नारायणदासता ।
आयैवाहं प्रपद्ये तं तत्कैंकर्यं सदाऽस्त्विति ॥

8 एवं दशभिरर्थैस्तु दर्शिताः दश योजनाः ।
आदिमा योजना त्वासु स्यादुपायैकबोधिनी ॥

9 द्वितीया पुरुषार्थैकपरा तत्त्वपरा परा ।
अन्वयव्यतिरेकाभ्यां तुरीया त्वर्पणार्थिका ॥

10 पुरुषार्थप्रार्थनैव पञ्चम्यां क्रियते द्विधा ।
षष्ठ्यां द्वयं स्वरूपार्थं शेषेण च फलार्थना ॥

11 आद्यश्चाथ स्वरूपार्थं शेषाभ्यां द्विविधे फले।
आद्ये स्वरूपं शेषाभ्यां गोप्तृत्ववरणं द्विधा ॥
12 आद्ये समर्पणं शिष्टे फलार्थनपरे उभे।
तत्त्वोपायपुमर्थानां दशभ्यां बोधनं क्रमात् ॥
13 संपादको वात्स्यचक्रवर्ती श्रीवीरराघवः।
संगृह्यार्थान् मूलमन्त्रयोजनाश्च समग्रहीत् ॥

## श्रीरहस्यत्रयसाराधिकारक्रमः

गुरुपरम्परासारः ३. पु.

# श्रीमद्रहस्यत्रयसारानुवादशोधनिका

| | | | |
|---|---|---|---|
| 4-2 | भूताख्य | 34-15 | पिञ्छिकयातत्त्वा |
| 5-11 | गतिश्चासि | 38-8 | एतदेक- |
| 7-6 | प्रबन्धाः | 39-7 | क्रौर्य |
| -12 | तोड़प्पर् | 40-4 | प्रकारैः |
| 8-12 | गोष्ठी | 45-17 | धर्मभूतज्ञानं |
| 11-5 | दृप्ति | -18 | प्रत्येव |
| -22 | आलवन्दा | -21 | प्रकाशनशक्ति |
| 12-10 | हयवदन | 46-14 | शीलस्यास्य |
| -18 | हयवदन | 49-16 | कर्मोपाधिक |
| 13-19 | नालुमुहक्क | 59-11 | शरीरिणः |
| 14-6 | हृहयंगमः | 69-5 | श्रीशठकोप |
| -12 | वैकुण्ठे | 79-7 | परिपूर्ण |
| 15-4 | कुर्वाणे | 83-13 | निरन्तर |
| -6 | प्राप्त्यर्हे | 86-14 | स्थितंकर्म |
| -11 | अवलम्ब | 88-10 | विशिष्यमाणो |
| 16-16 | मतिशयित | 90-4 | संश्रयन्ते |
| 17-11 | षाकांक्षो | -13 | वश्यम्भवन |
| 21-8 | शाखानामुपरि | 91-17 | प्रातिकूल्य |
| 24-19 | प्रथमरहस्ये | 92-20 | प्रातिकूल्य |
| 25-2 | प्रपत्त्यनुष्ठा | 97-7 | प्रेप्साजनकं |
| -6 | नुष्ठानसमयेनुसंधे | -18 | श्रीवादिहंसा |
| 27-15 | त्रयसारे प्रधानप्रति-तन्त्रा | 98-8 | उपायार्थैक |
| | | 99-4, 5 | स्वल्पांशेनापि |
| 30-2 | दीप! | 102-21 | आत्मापहार |
| -14 | श्रुतं | 106-8 | सांगप्रपदनाधि |

| | | | |
|---|---|---|---|
| 114-11 | सम्यक् | 255-4 | प्रारब्ध |
| 123-14 | पादुकाभ्यां | 259-9 | अवैष्णव |
| 131-11 | कैङ्कर्यमपि | 274-5 | प्राप्तत्वात् |
| 133-17 | वर्धकं | 317-7 | टितः पदैस्त्रि |
| 137-14 | श्रीयामुना | 357-14 | धिकारं |
| 142-3 | सुहृदः | 366-16 | कर्माखिलं |
| 161-10 | आसीदित्येव | 378-22 | श्वरगत |
| 167-6 | अमानवसंज्ञ | 381-12 | मुपायत्वेन |
| 168-3 | पर्यायेण | 397-15 | तिशयं |
| 169-3 | मेतन्मनो | 412-19 | जगन्नाथः |
| 171-8 | आज्ञाधरै | 416-13 | संबन्धोऽपि |
| 173-22 | राजकुमारं | -15 | त्यत्रोक्तो यः |
| 177-6 | निर्व्यापारैः | 417-16 | वर्णाश्रमादि |
| -7 | पुत्रादिभिश्च | 428-12 | शिष्यकृता |
| 199-7 | षूपदेशानाम् | 431-17 | श्रुत्वा |
| 207-3 | वादिहंसा | 532-8 | षत्वानुसंधा |
| 217-21 | बहिष्का | -19 | श्रोत्रे |
| 238-6 | जन्मसिद्धाः | 438-16 | काशमुपविष्ट |
| 241-3 | निर्माल्यं | 4-3- | बहुसंस्कृत |

348 पुटे इयं गाथा—

“ओदुमिरण्डै यिशैन्दरुलालुदवुंतिरुमाल्
पादमिरण्डुं शरणेनप्पर्ट्रि नरुंपगयत्ताल्
नातनैनण्णि नलंतिकड़ नाट्टिलडिमैयेल्लाम
कोदिलुणर्च्चियुडन् कोल्लुमारु कुरित्तनमे”

349 पुटे इयं गाथा—

ओण्तोडियाल् तिरुमहळुं तानुमाकि
ओरुनिनैवालीन्र वुयिरेल्लामुय्य
वण्तुवरैनगर् वाड़ वसु देवर्काय्
मन्नवर्कुत्तेर्पाकनाकिनिन्र
तण्तुळवमलर्मार्षन् तानेशोन्न
तनित्तरुमं तानेमकाय् तन्नैयेन्ड्रुं
कण्डुकळित्तडिशाइविलकायुनिन्र
कण्पुदैयल विल्लैयाट्टैक्कड़िकिन्राने ॥

## कारिकातिरिक्तश्लोकाः

### श्रीरहस्यत्रयसारगताः

———

# भगवतां श्रीनीलमेघाचार्याणामाख्यानम्

अनन्तश्री श्रीभाष्यसिंहासनासीन आचार्य श्री सर्वतंत्रस्वतंत्र उभयवेदान्तप्रवर्तकाचार्य दयादिगुणसागर भगवान् श्रीनीलमेघाचार्यजीका अवतार सन् १९०१ में कोडिप्पाक्कम् गांव, दक्षिण आर्काट मण्डल, मद्रास राज्य में हुआथा। आपके पिताजी का नाम श्रीवरददेशिकाचार्य था। आप की प्रारंभिक शिक्षा तंजौर मण्डल के तिरुवैयार संस्कृतमहाविद्यालय में हुईथी। सन् १९२२ में आपने व्याकरण शिरोमणि परीक्षा प्रथम श्रेणी में पास की। अनन्तर तीन वर्षों में आपने श्रीपरमहंसपरिव्राजकाचार्य श्रीरङ्गरामानुज महादेशिक श्रीकोलियालम् स्वामीजी महराज के आश्रय में श्रीभाष्य गीताभाष्य इत्यादि वेदान्तग्रन्थों का अध्ययन किया।

अनन्तर रींवा राजगुरुके विद्यालय में २ वर्ष, पुष्करश्रीरमावैकुण्ठदिव्यदेशमे ३ वर्ष, श्रीलक्ष्मीनारायण संस्थान सौलापुर में ७ वर्ष वेदान्त और व्याकरण आदि शास्त्रों का अध्यापन करवाते रहे। अनन्तर तिरुपति में श्रीवेङ्कटेश्वर संस्कृत कालेज में १० वर्ष तक व्याकरण का अध्यापन करवाते रहे। अनन्तर वारणसी में श्रीरामानुजमठविद्यालय में 10 वर्ष तक और बृन्दावन के वैष्णवसंस्थान में २ वर्ष तक अध्यापन करवाते, अन्त में १९५९ में वाराणसेय संस्कृत विश्वविद्यालय में श्रीरामानुज वेदान्तके प्राध्यापक नियुक्त हुए। अन्त समयतक यहां ही कार्यकाल रहा। ग्रीष्मावकाश में जब आप

अपना जन्मदेश में विश्राम कर रहे थे, दिनांक २६ जून १९६४ को आपका अकस्मात् परमपद होगया।

तमिल भाषाके साथ ही साथ संस्कृत तथा हिन्दी भाषा पर भी आपकी अलौकिक अधिकार था। आपने वेदार्थसंग्रह, न्यासविंशति, न्यासतिलक, परमपदसोपान, यतिराजसप्तति के साथ ही साथ "न्यायसिद्धांजन" का भी हिन्दी अनुवाद किया है। ये ग्रन्थ प्रकाशित हो चुके हैं। इन के अतिरिक्त, आपने अष्टश्लोकी, श्रीगुरुपरंपराप्रभाव और वेदान्तकारिकावली का भी संपादन किया है। अनेक पत्र—पत्रिका ओं में आपके लेख प्रकाशित होते रहे हैं।

आपने श्रीविष्णुसहस्रनाम, श्रीरहस्यत्रयसार और गीतार्थसंग्रह का भी हिन्दीभाषा में विवर्त (अनुवाद) किया है। ये ग्रन्थ अभी प्रकाशित नहीं हुए हैं।

श्रीरहस्यत्रयसार का संस्कृतविवर्त—

संस्कृत—द्राविडभाषारूप मणिप्रवाल भाषा में लिखित श्रीरहस्यत्रयसार का आपने विशुद्ध संस्कृत भाषा में विवर्त किया था। जिसको मुद्रणकेलिए प्रेसकापीरूप में तयार करके आप अपनी जन्मभूमि तुण्डीरमण्डल में पदारेथे। वहाँ ही आपका अकस्मात् परमपद होजाने से माता जी श्रीलक्ष्मीअम्मालकी आज्ञा से इसका मुद्रण कराया गया है।

शिष्यसमुदाय

उत्तरापथ और दक्षिणापथ मे आपका शिष्य समुदाय व्याप्त है। उत्तरापथमें आपके शिष्यो में अनिरुद्धाचार्य वेंकटाचार्य, चान्दोद, गुजरात, श्रीवासुदेवाचार्य बम्बई, श्रीकौसलेन्द्र प्रपन्नाचार्यजी अयोध्या, श्रीत्रिदण्डी स्वामी वेदान्तश्रीरामनुजाचार्य जी त्रिदण्डी मठ प्रयाग आदि मुख्य हैं। श्रीरहस्यत्रयसार का हिन्दी और गुजराती अनुवाद भी शीघ्र ही प्रकाशित होगा।

उनके श्रीचरणोंका सेवक

अनिरुद्धाचार्य वेंकटाचार्य

**धर्मचक्रोदय मठ चान्दोद** बडोदा, गुजरात

दिनांक—4-4-1968.

## पुण्यश्लोक महभागवत

### श्री मगनीराम जी बांगड

पुण्यश्लोक महाभागवत श्रीमगनीरामजी बांगड का जन्म डीडवाणा राजस्थान श्रीवैष्णव घराने में श्रीमान् श्रेष्ठी श्रीरामप्रसादजी बांगड के यहां पुत्ररत्न के रूपमे हुआ। आपके पितामह का नाम श्रीमान् श्रेष्ठि श्री रामनारायणदासजी बांगड था। उसकाल में उपलब्ध शिक्षा प्राप्तकर दिनो दिन गुरुकृपा, भगवद्भक्तो

सन्तजनों और विद्वानों के सहवास से सत्संग द्वारा शास्त्रज्ञान एवं अनुभव मे बहुश्रुत होगए। भगवत्कथा के श्रवण मे आपकी अलौकिक निष्ठा और अभिरुचि थी।

मनुष्य का जन्म केवल शारीरक बौद्ध एवं नैतिक आवश्यकता ओं को तृप्त करने में भी परिपूर्ण नहीं होजाता। यथार्थ में आध्यात्मिक–प्रकाश प्राप्त करना यह उसकी सब से बडी आवश्यकता है। उसकी प्राप्ति श्रीगुरुकृपाद्वारा ही संभव है। आपने उसकी प्राप्ति श्रीमदित्यादिबिरुदभूषित शमदमदयासमतादिगुणगणार्णव जगद्गुरु श्रीमद्रामानुजाचार्य श्री स्वामीजी महाराज श्री 1008 श्रीबालमुकुन्दाचार्यजी महाराज के श्री चरणों के आश्रित होकर, उनकी कृपा से श्रीमन्नारायण के श्री चरणों मे आत्मसमर्पण किया। इस से एक आदर्श महागवत होकर मानवजीवनको सफल बनाया।

श्रीगुरुकृपा से प्राप्त भगवद्भक्ति और श्रीवैष्णव भक्ति और भागवत दिनचर्या के प्रभाव से आपकेलिए अर्थार्जन आदि का काल एवं भक्ति का काल भिन्नभिन्न न होकर सब काल और सब धर्म भक्तिरूप होगऐ। ऐसी भागवत जीवन कला का प्रतिपादन ही श्रीरहस्यत्रयसार ग्रन्थ मे है। आपने सब शास्त्रों के सारभूत श्रीरहस्यत्रयसार के उपदेशों को आचरण में लाकर यथार्थ में प्रपन्नों केलिए आदर्शभूत भागवतजीवन पद्धति से अपना जीवन सफल किया। भागवतधर्मका पालन ही मुमुक्षों को दिनचर्या हैं।

17 वर्ष की अवस्था में आप डीडवाना से कलकत्ता पधारे। जगन्माता श्रीमहालक्ष्मी की आप पर अमित कृपा हुई। गुरुकृपा, भगवत्कृपा, भाग्य और पुरुषार्थ इन चारों के संमेलन से आपकी गणना कुछली काल में धनकुबेरों मे हुई। 40 वर्ष तक निरन्तर कर्मयोगरूप भगवत्कैंकर्य से सतत श्रियः पति का मुखोल्लास करते रहे।

इस काल में भी आप सतत भगवद्भक्तों सन्तो विद्वानों और सत्पुरुषों के सत्संग द्वारा आध्यात्म विद्या का श्रवण मनन करते रहे, जिसके प्रभाव से अहंकार ममकार, मान, मद, मात्सर्य और असूया आदि प्राणिसुलभ दोषों से दूर रह सके। शास्त्रमर्यादा, भक्ति ज्ञान विराग श्रद्धा एवं अनासक्ति से संपन्न होकर स्वस्वरूप (आत्मस्वरूप) के यथार्थ ज्ञाता होगए।

प्राणिमात्र में भगवद्बुद्धि प्राप्त होजाने से जो कोई भी किसी मनोरथ को लेकर अपके पास पहुंचा, उसका अच्युत भाव से 'अच्युतः प्रीयताम्' कहकर सत्कार किया। आप भगवत्प्रेम शास्त्रमर्यादा सदाचार एवं भागवत जीवन की साक्षात् मूर्ति थे। क्षणमात्रकाल भी आपने व्यर्थ नहीं जाने दिया।

"सर्वभूतहिते रताः" होने के कारण आपने अपने धनका सदुपयोग प्राणिमात्र में भगवद्बुद्धिहोने से श्रियः पति की उपासना में किया। अनेक प्राचीनमन्दिरों दिव्यदेशों धर्मशालाओं

पाठशालाओं गोशालाओं एवं कूपों आदि के निर्माण तथा उनके जीर्णोद्धार में किया।

श्रीपुष्कर राजका श्रीरमावैकुण्ठदिव्यदेश डीडवाना का दिव्य देश तथा कलकत्ता का श्रीवैकुण्ठदिव्यदेश आपकी गुरुनिष्ठा और श्रद्धाके मूर्तिमान् स्वरूप हैं।

40 वर्ष तक निरन्तर कलकत्ता में भगवत्कैंकर्य करते हुए सेवास करनेके अनन्तर इस कैंकर्यके अपने प्रतिनिधि स्वरूप में पुत्र और पौत्रों को देकर आप श्रीपुष्कराज श्रीरमावैकुण्ठ में श्रीवैकुण्ठनाथको संनिधि में श्रीरहस्यत्रयसार आदिग्रन्थों का श्रवण और भगवच्चिन्तन करते हुए आजीवन निवास किया। संवत् 2007 की गुरुपूर्णिमा को आप श्रीगुरुचरणो का ध्यान करते हुए गुरुकृपासे श्रीवैकुण्ठ को प्राप्त कर श्रीवैकुण्ठनाथको नित्य कैंकर्य में संमिलित होकर मुक्त होगए। "तेनैव धन्यः पुमान्"। "अनावृत्तिः शब्दात, अनावृत्तिः शब्दात्"।

मितिवैशाखवदि 5 गुरुवार संवत् २०२५

अनिरुद्धाचार्य वेंकटाचार्य

मोहिनी महल, बंबई गुजरात

## विषयसूची

—o—o—

श्रीः

(श्रीमद्रहस्यत्रयसारसंस्कृतानुवादकीयमङ्गलाचरणादि)

श्रीमद्भिः शेषतार्क्ष्यप्रमुखसुरवरैरेकतः सेव्यमानं
सेनेशश्रीशठारिप्रभृतिभिरनघैश्चान्यतः सूरिवृन्दैः ।
श्रीभूनीलाभिजुष्टं प्रसृमरकरुणापाङ्गमानन्दरूपं
वन्दे पादारविन्दप्रणतपरवशं दिव्यधामाधिनाथम् ॥

सर्वाभीष्टफलप्रदानचतुरो भक्तव्रजानां सदा
धर्मादींश्चतुरः पुमर्थनिवहान् यो दातुकामो भृशम् ।
बिभ्राणश्चतुरो भुजान् करुणया जागर्ति शेषाचले
वन्दे तं हृदयाभिराममवपुषं श्रीवेङ्कटेशं हरिम् ॥

श्रीपादश्रितसद्गताखिलतमस्सूर्यायितानुग्रह-
प्राज्ञाग्रेसरनाथयोगियमुनाजन्मादिभिर्भूषितम् ।
श्रीरामानुजयोगिवर्यनिगमान्ताचार्यगोपालसू-
र्यादिश्रीगुरुवर्धितप्रथमहं वन्दे गुरूणां कुलम् ॥

दृप्यद्द्वैतुकवादिवर्गकुमतिक्षीबोक्तिसंक्षोभितं
वेदान्तार्थसुधापयोधिमतलस्पर्शं बुधानामपि ।
गाहन्ते सुधियोवगाह्य विमलं यत्सूक्तितीर्थान्तरं
तं रामानुजयोगिपुङ्गवमहं सेवे कृपावारिधिम् ॥

विद्यावित्तप्रदानव्रतहयवदनब्रह्मपादारविन्द-
द्वन्द्वध्यानैकतानस्तदमितकरुणावाप्तवैदुष्यभूमा ।
यस्ताद्दक्षस्वदाक्ष्यक्षपितबहुविधावद्यदुर्वादिपक्ष-
स्तं वन्दे वेदचूडागुरुवरमखिलोज्जीवनार्थावतारम् ॥

ब्रह्मज्ञानप्रदत्वादघपरिहरणादच्छसंविन्मयत्वात्
आनन्दैकाकृतित्वादमितशुभगुणालङ्कृतत्वाद्विभुत्वात् ।
नित्यं सत्यव्रतत्वात्सकलबुधकुलाभ्यर्चितत्वात् वशित्वात्
श्रीमच्छ्रीरङ्गरामानुजगुरुमनिशं विष्णुरूपं नमामि ॥

कवितार्किकपञ्चास्यैर्घण्टांशैर्वेङ्कटेशितुः ।
स्वतन्त्रैः सर्वतन्त्रेषु श्रीमद्वेदान्तदेशिकैः ॥

श्रीमद्वेङ्कटनाथार्यैर्लोकोज्जीवनहेतवे ।
रचितेषु रहस्येषु द्राविडीसंस्कृतात्मना ॥

रहस्यत्रयसाराख्यं रहस्यं लोकविश्रुतम् ।
सर्वशास्त्रार्थसारेण संभृतं परमाद्भुतम् ॥

श्रीरङ्गरामावरजयतीन्द्रचरणाश्रितः ।
वात्स्योऽहं नीलमेघार्यः संस्कृतेन विवर्तये ॥

—०—०—

(आदावनुसंधेयम् आचार्यविषयं-तनियन्)

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥
रामानुजदयापात्रं ज्ञानवैराग्यभूषणम् ।
श्रीमद्वेङ्कटनाथार्यं वन्दे वेदान्तदेशिकम् ॥

[1](गाथा) कल्याणगुणशालिना तूप्पुल् श्रीवेङ्कटनाथेनोक्तासु लोकहृदयंगमासु प्राचीनसूक्तिषु एकैकैव किं न पर्याप्ता धरण्यां जीवतां परमव्योमारोहगत्यन्तोज्जीवनलाभाय ।

श्रीः

श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः
श्रीमते शठकोपाय नमः
श्रीमते भगवद्रामानुजाय नमः
श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमन्निगमान्तमहादेशिकैरनुगृहीतो

# रहस्यत्रयसारः

श्रीवात्स्यनीलमेघाचार्यकृतसंस्कृतानुवादरूपः

—०—०—

## आदौ गुरुपरम्परासारः

गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राऽऽद्यौ दम्पती जगतां पती ॥

---

1 शीरोन्ऱु तूप्पुलतिरुवेंकटमुडैयान् पारोन्ऱचोन्न पड(ழ)मोडि(ழி)गुळ—ओरोन्ऱु ताने अमैयादो तारणियिल् वाड़्(ழ)वार्क्कु वानेर प्पोमळवुं वाड़्(ழ)वु ।

[1](गाथा) सरोमुनिः, भूताख्य(मुनिः), उन्मत्त(महदाह्वय)-दिव्यसूरिः शीतलताम्रपर्णीमागतः कुरुकेशः, विष्णुचित्तः, शुद्धः कुलशेखरः, अस्माकं प्राणनाथः, भक्ताङ्घ्रिरेणुः, महीसारागतं ज्योतिः, भुवि सर्वत्र वेदा यथा प्रकाशेरन् तथा खड्गकुन्तौ दधानो मङ्गै(नगर)निवासिनां स्वामी इत्येतैः सहर्षं गीताः ऋज्वीर्द्राविडसूक्तिमालाः वयं विशदमधीत्य विशदानवगतान् वेदप्रदेशान् विशदं जानीमहे ॥

[1](गाथा) आनन्दे, समाश्रयणे, अभ्युपगमनीयपुरुषार्थे, अप्रच्युत-बहुविधसंबन्धे, रागनिवृत्तौ, स्वसंबन्धापादने, कर्मनिवारणे, कृपोत्कर्षे, तत्त्वोद्बोधने, स्वस्वभावापादने च (विषये) भक्तार्थमेवावतीर्णे गोपाले स्थिते सति सूक्ष्मा(र्था)न् वेदान् द्राविडीकृतवतः (कुरुकेशस्य) चरणावेवावलम्ब्य दुःखरहितभूतेन मधुरकविना प्रदर्शितानादिमार्ग एव धैर्यवतां सन्मार्गाः ॥

---

1 पोय्हैमुनि बूदत्तार् पेयाड़्वार् तण् पोरुनल् वरुम् कुरुकेशन् विट्टुचित्तन्, तुय्य कुलशेकरन् नम पाणनादन् तोण्डरडिप्पोडि मड़िशैवन्दशोति, वैयमेलां मरैविलंग वाळ्वेलेन्दुम् मङ्गैयरकोन् पत्रिवरकल् महिड़न्दुपाडुं, शेय्य तमिड़्मालैकळ् नाम् तेलिय ओदि त्तेलियाद मरैनिलङ्गळ् तेळिकिन्नोमे.

1 इन्बत्तिल् इरैञ्जुदलिल् इशैयुम्पेत्तिल् इकड़ाद पलुरविल् इरागं मात्तिल् तन् पत्तिल् विनै विलक्किल् तहवोकत्तिल् तत्तवत्तै उणर्तुदलिल् तःमैयाक्किल् अन्बर्कें अवतरिक्कुमायन् निर्के अरुमरैकल् तमिड़्शेय्दान् ताले कोण्डु तुन्बत्त मदुरकवि तोन्नकाट्टु तोल्वड़िये नल्लैवड़िकल् तुणिबार्गट्के.

(मुमुक्षूणां सदाचार्यसंबन्धस्यावश्यकत्वसमर्थनम्)

"[1]पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत्। आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत् ॥" इति आचार्यवत्तैव सर्वेषां मोक्षकारणमिति निर्धारयामासुः ॥

(भगवत्पर्यन्ताचार्यपरम्परानुसन्धानकर्तव्यत्वम्)

मुमुक्षोराचार्यवंशोऽनुक्रमेण भगवत्पर्यन्तगामितयाऽनुसंधेय इत्याम्नातमस्ति।

(भगवतः परमाचार्यत्वसमर्थनम्)

[2]"तमिमं सर्वसंपन्नमाचार्यं पितरं गुरुम्", इति, [3]"ममाप्यखिललोकानां गुरुर्नारायणो गुरुः" इति, "त्वमेव बन्धुश्च गुरुस्त्वमेव" इति, "गुरुरसि गतिश्चसि जगताम्" इति चोक्तरीत्या सर्वस्यापि लोकस्य परमाचार्यः सर्वेश्वरो ब्रह्मणे आदौ वेदान् प्रदाय, तेषामपहारे जाते पुनस्तान् प्रत्यानीय प्रदाय, एतन्मुखेन शास्त्राणि प्रवर्त्य, एतत्पुत्रान् सनत्कुमारादीन् "स्वयमागतविज्ञानाः निवृत्तिं धर्ममास्थिताः" इत्युक्ताकारान् आपाद्य तन्मुखेन च हितप्रवर्तनं कारयित्वा, इत्थमन्यान्यनारदपराशरशुकशौनकादिबहुमहर्षिद्वारा च अध्यात्मसंप्रदायमविनश्वररूपेण प्रवर्त्य,

"कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्। को ह्यन्यो भुवि मैत्रेय महाभारतकृद् भवेत् ॥" इति, "महर्षेः कीर्तनात्तस्य भीष्मः प्राञ्जलिरब्रवीत्" इति चोक्तरीत्याऽवस्थितान् व्यासादीन् अनुप्रविश्य महाभारतशारीरकादीनि प्रवर्त्य च,

हंसमत्स्यहयग्रीवनरनारायणगीताचार्याद्यवतारैः स्वयमेवाविर्भूय च तत्त्वहितानि प्रकाश्य, स्वेनानुगृहीतानामर्थानां सर्वेषां श्रीभीष्मप्रभृतिभिर्ज्ञानाधिकैः संवादश्च कारयित्वा,

"पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" इत्युक्तरीत्याऽऽदौ स्वेनोपदिष्टं भगवच्छास्त्रं "[10]ब्राह्मणैः क्षत्रियैर्वैश्यैःशूद्रैश्च कृतलक्षणैः। अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु ॥ सात्त्वतं विधिमास्थाय गीतः संकर्षणेन यः। द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥" इत्युक्तरीत्याऽवसरेष्वाविष्कृत्य च, "पूर्वोत्पन्नेषु भूतेषु तेषु तेषु कलौ प्रभुः। अनुप्रविश्य कुरुते यत् समीहितमच्युतः ॥" इत्युक्तरीत्या पराङ्कुशपरकालादिरूपेणाभिनवान् विलक्षणान् दशावतारान् कृत्वा, यथा मेघाः समुद्रजलं गृहीत्वा सर्वोपजीव्यपानीयरूपेण प्रवर्षन्ति—तथा वेदार्थेष्वपेक्षितं सारतमांशं सर्वाधिकार्यया भाषया संगृह्य प्रकाश्य च, एवं स्वप्रवर्तितस्य सत्पथस्य प्रकटरूपेण प्रच्छन्नरूपेण चावस्थितैः पाषण्डिभिरुपरोधस्याप्रसक्त्यर्थम्, "[12]साक्षात् नारायणो देवः कृत्वा मर्त्यमयीं तनुम्। मग्नान् उद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥" इति. [1]"पीताम्बर उपकारको ब्रह्मगुरुर्भूत्वैत्य" इति चोक्तरीत्याऽगस्त्यसेविते देशेऽनेकदेशिकापदेशेनावततार।

इदमभिप्रेत्य "कलौ खलु भविष्यन्ति नारायणपरायणाः। क्वचित् क्वचिन्महाभागा द्रमिडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी। कावेरी च महाभागा प्रतीची च महानदी" इति महर्षिरनुजग्राह ॥

(गुरुपरम्परास्वरूपवर्णनम्)

एष्वाचार्येष्वीश्वरमुनीनां पुत्राः नाथमुनयः। एते न्याय-

1 "पीतहवाडै प्पिरानार् पिरमगुरुवाहि वन्दु" पेरियाड्वार् 5-2-8.

तत्त्वाभिधं शास्त्रं योगरहस्यं चानुजगृहुः । एषां श्रीमधुरकविमूलक-संप्रदायपरम्परया च श्रीमुखसूक्ताख्यदिव्यप्रबन्धमुखेन च योगदशापां साक्षात्कृततया च श्रीशठकोपदिव्यसूरय आचार्या बभूवुः । श्रीनाथमुनीनां पुत्राः ईश्वरभट्टाड़्वान्। (ईश्वरभट्टाड़्वान्) एषां पुत्रा आलवन्दार (श्रीयामुनाचार्याः) । श्रीयामुनाचार्यानुगृहीताः प्रबन्ध आगमप्रामाण्यं पुरुषनिर्णयः, आत्मसिद्धिरीश्वरसिद्धिः संवित्सिद्धिरित्युच्यमानं सिद्धित्रयम्, श्रीगीतार्थसंग्रहः, स्तोत्रम्, चतुःश्लोकी चेत्यष्टौ । (आलवन्दार) एषां पुत्राः शोट्टैनम्बि । (शोट्टैनम्बि) एषां पुत्रा एन्नाचान् । (एन्नाचान्) एषां पुत्राश्चत्वारः । एष्वन्यतमाः पिळ्ळैयप्पर । (पिळ्ळैयप्पर्)एषां पुत्राः तोड़प्पर । (तोड़प्पर्)एषां पुत्र्यौ द्वे ।

श्रीमन्नाथमुनिश्रीचरणाश्रिताः शिष्याः उय्यक्कोण्डार् (श्रीपुण्डरीकाक्षस्वामिनः), कुरुहैकावलप्पन्, नम्बिकरुणाकरदासर्, एरुतिरुवुडैयार्, तिरुक्कण्णमङ्गैयाण्डान्, वानमादेवियाण्डान्, उरुप्पट्टूराच्चानपिळ्ळै, शोकत्तूराड़्वान् इत्यष्टौ ।

(उय्यक्कोण्डार्) पुण्डरीकाक्षस्वामिश्रीचरणाश्रिताः पञ्च । ते यथा—मणक्काल्नम्बि (श्रीराममिश्राः), तिरुवल्लिक्केणिप्पाण्पेरुमाळरैयर्, शेट्टलर् शेण्डलङ्कारर्, श्रीपुण्डरीकदासाः, उलहप्पेरुमाळ्नंगै ।

(मणक्काल्नम्बि) श्रीराममिश्रश्रीपादाश्रिताः पञ्च । ते च—आलवन्दार् (श्रीयामुनाचार्याः), देयवत्तुक्करशुनम्बि, गोमठत्तुत्तिरुविण्णकरप्पन्, शिरुप्पुल्लूरावुडैयपिळ्ळै, आच्चि इति ।

(आलवन्दार् )श्रीमद्यामुनमुनिश्रीपादाश्रिताः पञ्चदश— पेरियनम्बि (श्रीमहापूर्णाः) तिरुक्कोट्टियूरनम्बि (श्रीगोष्ठीपूर्णाः), तिरुमालैयाण्डान् (श्रीमालाधरस्वामिनः), आलवन्दाराड्वार् , तिरुमलैनम्बि (श्रीशैलपूर्णाः), ईशाण्डान् , दैववारियाण्डान् , शिरियाण्डान् , तिरुमोकूरप्पन् , तिरुमोकूर् निन्रान् , देवप्पेरुमाल् , तिरुमङ्गैयाळियार, पिळ्ळैतिरुमालिरुञ्चोलैदासर् , मारनेरनम्बि, आल्कोण्डि चेति ।

(पेरियनम्बि)श्रीमहापूर्णश्रीचरणाश्रिताः षट् । ते यथा— एम्बेरुमानार् (श्रीभगवद्रामानुजाचार्याः) मलैकुनियनिन्नार् , आर्यश्रीशठकोपदासर् , अणियरङ्गत्तमुदनार् तिरुवायूकुलमुडैयान्भट्टर् , तिरुकच्चिनम्बि (श्रीकाञ्चीपूर्णाः) चेति ।

श्रीभगवद्रामानुजाः श्रीगोष्ठीपूर्णश्रीचरणसंनिधौ रहस्यार्थान् शिशिक्षिरे । श्रीमालाधरश्रीचरणसन्निधौ श्रीमुखसूक्तदिव्यप्रबन्धं शुश्रुवुः । आलवन्दाराड्वारश्रीचरणयोः श्रीमुखसूक्तदिव्यप्रबन्धमधीत्य स्तोत्रादिकं कृपाकार्याः सद्वार्ताश्च शुश्रुवुः । तिरुमलैनम्बिश्रीचरणसन्निधौ श्रीमद्रामायणं शुश्रुवुः । एतदनुगृहीताः प्रबन्धाः **श्रीभाष्यम्**, **दीपः**, **सारः**, **वेदार्थसंग्रहः**, **श्रीगीताभाष्यम्**, लघुगद्यम्, पृथुगद्यम्, **श्रीवैकुण्ठगद्यम्** , **नित्यं** चेति नव ।

एतच्छ्रीचरणाश्रिताः शिष्याः स्वस्वसंप्रदायानुसारेण ज्ञातव्याः ॥

(गुरुपरम्परानुसन्धानफलत्वयम्)

15"गुरुं प्रकाशयेद्धीमान् मन्त्रं यत्नेन गोपयेत् । अप्रकाशप्रकाशाभ्यां क्षीयेते संपदायुषी ॥" इत्यूचुः । **गुरोः** केनचित्**प्रकाशनं**

केनचिदप्रकाशनञ्च गुरुभक्तौ तारतम्यात् किल भवति। भगवद्विषय इव गुरुविषयेऽपि परां भक्तिमावहते अपेक्षितार्थाः सर्वेऽपि प्रकाशेरन् इत्येतत् कठजाबालादिश्रुतिषु सञ्जयादिवृत्तान्तेषु च प्रसिद्धम्। अनेवंविधानामेवंविधा ज्ञानसंपत् न सिद्ध्येदित्येतत् शिष्याणां ज्ञान-तारतम्येन ज्ञातुं शक्यम्। अत्यन्तं गुणाधिकानां शिष्याणामपि झटिति अध्यात्मविषयान् अप्रकाशयतां निष्ठा न हीयत इत्येतद् रैक्वादिवृत्तान्तेषु प्रसिद्धम्। (शिष्य)लाभं गुणत्वेन मत्वोपदेशे कृते सति, "शिष्यपापं गुरोरपि" इत्युक्ते राचार्यस्य निष्ठा हीयेतेत्येतत्, भविष्यदविचार्यैव इन्द्रस्योपदेशेन स्वयं विस्मृतब्रह्मविद्यस्य स्वशिष्य-भगवन्नारदद्वारा सर्वेश्वरेण प्रबोधनीयतयास्थितस्य चतुर्मुखस्य निकटे द्रष्टव्यम्। इत्थं तावत् "अप्रकाशप्रकाशाभ्याम्" इत्युक्तयोर्द्वयोः "क्षीयेते संपदायुषी" इत्युक्तं फलद्वयमौचित्यप्रमाणप्रसिद्धिभ्यां क्रमेणोदाहृतम्। द्वयोः (प्रत्येकं) फलद्वयस्यान्वयेऽपि वाक्ये आपतन् कश्चिदपि विरोधो नास्ति। अतः सर्वावस्थासु गुरुभक्ति-परीवाहात्मना गुरोः प्रकाशनम्, महारत्नगर्भमाणिक्यसंपुटा-यमानश्रीमन्त्रसमुत्कर्षस्य स्वनिष्ठायाश्चाविनाशार्थं क्षुद्रप्रयोजनोद्देशेन शिष्यगुणपूर्तिरहितेभ्यश्चपलेभ्योऽप्रकाशनेन मन्त्रस्यातीव गोपनं च कर्तुं युक्तम्। अत्र गुरुशब्दः परमगुरूणामप्युपलक्षकः; सामान्यवाची वा। मन्त्रशब्दो मन्त्रार्थप्रभृतीनां रहस्यानां प्रदर्शनपरः।

स्वेनैषां रहस्यानामनुसंधानसमयेषु सर्वेषु आचार्यपरम्पराया अनुसन्धानमपि विधिबलप्राप्तम्।

एषामाचार्याणामनुसंधानं "संभाष्य पुण्यकृतो मनसा ध्यायेत्" इत्युक्तरीत्या प्रतिषिद्धसंभाषणस्य प्रायश्चित्तमपि भवति ॥

—०—०—

(गुरुपरम्परानुसंधानप्रकारस्य गाथया निरूपणम्)

[1](गाथा) मम प्राणं दत्त्वा रक्षितवन्तं शरणमेत्याहं क्रमेण तद्गुरुपंक्तिं प्रणम्य ततः, कृपया महाभूतपुर्यामाविर्भूतः परमोदारः, महापूर्णः, यामुनमुनिः, राममिश्रः, सन्मार्गं तस्योपदिष्टवान् पुण्डरीकाक्षः, नाथमुनिः, शठकोपः, सेनानाथः, भोग्यामृतश्रीदेवी इत्येतान् पुरस्कृत्य अस्मत्स्वामिनः श्रीचरणावाश्रयामि ॥ ३ ॥

(गुरुपरम्परासारान्ते आचार्यैरेव कृतानि पद्यानि)

(अधिकपाठः) प्रपदनमये विद्याभेदे प्रतिष्ठितचेतसः
प्रतिपदमिह प्रज्ञादायं दिशन्तु दयाधनाः ।
शठरिपुशुकव्यासप्राचेतसादिनिबन्धन —
श्रमपरिणमच्छ्रद्धाशुद्धाशया मम देशिकाः ॥)
एते मह्यमपोढमन्मथशरोन्माथाय नाथादयः
त्रय्यन्तप्रतिनन्दनीयविविधोदन्ताः स्वदन्तामिह ।

---

1 एन्नुयिर् तन्दलित्तवरै च्चरणम्बुक्कि यानडैवे अवर् गुरुकळ् निरै वणंगि, पिन्नरुळाल् पेरुम्बूदूर् वन्द वळ्ळल् पेरियनम्बि आळवन्दार् मणक्कालनम्बि, नन्नेरियै अवर्कुरैत्त उय्यक्कोण्डार् नातमुनि शडकोपन् शेनैनातन् इन्नमुदत्तिरुमहळ् एन्निवरै मुन्निट्टेम्बेरुमान् तिरुवडिहळ् अडैकिन्रेने ॥

श्रद्धातव्यशरण्यदम्पतिदयादिव्यापगाव्यापकाः
स्पर्धाविप्लवविप्रलम्भपदवीवैदेशिका देशिकाः ॥
हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष—
क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।
दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्त्व—
सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ॥

(ग्रन्थसुखनोपकारकाणां पूर्वाचार्याणां स्तवनम्)

(गाथा) वेदान्तशास्त्रमार्गार्जवं विनाशयतां हैतुकानां (विषये) अद्वितीयवारणीभूय तद्वादकदलीर्विनाशितवत उपकारकस्यानुरूपालंकारभूतकीर्तेः रामानुजमुनेर्भोग्यतमोक्तिसंगतगुणालंकृतचिन्ताः न चिन्तयेमहि इतः परं क्रूरकर्माणि ॥ ४ ॥

(गाथा) दीर्घकालात्संसरन्तोऽधुना विधिभेदात् बोधं प्राप्तवन्तो वयं प्रत्यावृत्य, इतःपरमपि कर्ममयशरीरेणैकीभूय निपत्य यथा न परिभ्रमेम तथा, रक्षार्थमागत इति प्रशस्येन जयेन कृपादानेन च विद्योतमानकल्याणगुणस्य श्रीयामुनार्यस्य दासभूता वयं न पठेमेतः परमपन्यायान् ॥ ५ ॥

---

4 आरणनूलॆवड़िच्चवै यड़िक्तिड्मैतुहर्कोर् वारणमाय् अवर् वादक्कदलिकल् मायत्त पिरान्, परणिकीर्ति इरामानुशमुनि इन्नुरैशेर् शीरणि शिन्दैयिनोम् शिन्दियोम् इनि त्तीविनैये.

5 नीळवन्दिन्ऱु विदिवहैयाल् निनैवोन्ऱिय नाम् मीळवन्दिन्नुं विनैयुडम्बोन्ऱि विड़ुन्दुड़लादु अळवन्दारेन वेन्ऱुळतन्दुविळङ्गियशीर् आळवन्दारडियोम् पडियोम् इनि अल्वड़क्के ।

एषामाचार्याणामनुसंधानं "संभाष्य पुण्यकृतो मनसा ध्यायेत्" इत्युक्तरीत्या प्रतिपिद्धसंभाषणस्य प्रायश्चित्तमपि भवति ॥

—०—०—

(गुरुपरम्परानुसंधानप्रकारस्य गाथया निरूपणम्)

[1](गाथा) मम प्राणं दत्त्वा रक्षितवन्तं शरणमेत्याहं क्रमेण तद्गुरुपंक्तिं प्रणम्य ततः, कृपया महाभूतपुर्यामाविर्भूतः परमोदारः, महापूर्णः, यामुनमुनिः, राममिश्रः, सन्मार्गं तस्योपदिष्टवान् पुण्डरीकाक्षः, नाथमुनिः, शठकोपः, सेनानाथः, भोग्यामृतश्रीदेवी इत्येतान् पुरस्कृत्य अस्मत्स्वामिनः श्रीचरणावाश्रयामि ॥ ३ ॥

(गुरुपरम्परासारान्ते आचार्यैरेव कृतानि पद्यानि)

(अधिकपाठः) प्रपदनमये विद्याभेदे प्रतिष्ठितचेतसः
प्रतिपदमिह प्रज्ञादायं दिशन्तु दयाधनाः ।
शठरिपुशुकव्यासप्राचेतसादिनिबन्धन —
श्रमपरिणमच्छुद्धाशुद्धाशया मम देशिकाः ॥)
एते मह्यमपोढमन्मथशरोन्माथाय नाथादयः
लय्यन्तप्रतिनन्दनीयविविधोदन्ताः स्वदन्तामिह ।

---

1 एन्नुयिर् तन्दलित्तवरै च्चरणम्बुक्कि यानडैवे अवर् गुरुकल् निरै वणंगि, पिन्नरुळाल् पेरुम्बूदूर् वन्द वळ्ळल् पेरियनम्बि आलवन्दार् मणक्कालनम्बि, नन्नेरियै अवर्कुरैत्त उय्यक्कोण्डार् नातमुनि शडकोपन् शेनैनातन् इन्नमुदत्तिरुमहळ् एन्रिवरै मुन्निट्टेम्बेरुमान् तिरुवडिहळ् अडैकिन्रेने ।

श्रद्धातव्यशरण्यदम्पतिदयादिव्यापगाव्यापकाः
स्पर्धाविप्लवविप्रलम्भपदवीवैदेशिका देशिकाः ॥
हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष—
क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।
दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्त्वत्—
सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ॥

(ग्रन्थमुखेनोपकारकाणां पूर्वाचार्याणां स्तवनम्)

(गाथा) वेदान्तशास्त्रमार्गार्जवं विनाशयतां हैतुकानां (विषये) अद्वितीयवारणीभूय तद्वादकदलीर्विनाशितवत उपकारकस्यानुरूपालंकारभूतकीर्तेः रामानुजमुनेर्भोग्यतमोक्तिसंगतगुणालंकृतचिन्ताः न चिन्तयेमहि इतः परं क्रूरकर्माणि ॥ ४ ॥

(गाथा) दीर्घकालात्संसरन्तोऽधुना विधिभेदात् बोधं प्राप्तवन्तो वयं प्रत्यावृत्य, इतःपरमपि कर्ममयशरीरेणैकीभूय निपत्य यथा न परिभ्रमेम तथा, रक्षार्थमागत इति प्रशस्येन जयेन कृपादानेन च विद्योतमानकल्याणगुणस्य श्रीयामुनार्यस्य दासभूता वयं न पठेमेतः परमपन्यायान् ॥ ५ ॥

---

4 आरणनूलॆवड्च्चॆय्दै यड्त्तिड्मैतुहर्कोर् वारणमाय् अवर् वादकदलिकल मायत्त पिरान्, परणिकीर्ति इरामानुशमुनि इन्नुरैशेर् शीरणि शिन्दैयिनोम् शिन्दियोम् इनि त्तीविनैये.

5 नीळवन्दिन्ऱ विदिवहैयाल् निनैवोन्ऱिय नाम् मीळवन्दिन्नु विनैयुडम्बोन्ऱि विडुन्दुड्लादु अळवन्दारेन वॆन्ऱरुळतन्दुविळङ्गियशीर् आळवन्दारडियोम् पडियोम् इनि अल्वड्के ।

(गाथा) काहलीशङ्खसदृशयोः समीचीनभक्तयोर्दासयोः तालमुपदिश्य द्राविडवेदानां मधुरं गानमुपदिष्टवतः परमोदारस्य स्पृहणीयं तपोमार्गं प्रवर्तितवतो नाथमुनेश्चरणौ अनुदिनं प्रणम्योत्तमेम ; अस्माकं के वा सदृशाश्चतुर्विधायां भुवि ? ॥ ६ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीगुरुपरम्परासारः संपूर्णः ।
॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

—o—o—

श्रीमते हयवदनपरब्रह्मणे नमः
श्रीमते रामानुजाय नमः
श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥ १ ॥
रामानुजदयापात्रं ज्ञानवैराग्यभूषणम् ।
श्रीमद्वेङ्कटनाथार्यं वन्दे वेदान्तदेशिकम् ॥ २ ॥

---

6 काळ् वलम्बुरि यन्न नर्कादल् अडियवर्कुत् ताळं वङ्गित्तमिड्मरैयिन्निशै तन्दवळल् मूलुंतवनेरिमूट्टिय नादमुनिकड्ले नाळुं तोडुदेड्वोम् नमक्कार् निगर् नानिलत्ते ॥

चतुर्विधायां—मरुदम्, नेय्दल्, कुरिञ्जि, मुल्लै इत्युच्यमानाः ग्रामसिंधुगिरिवनप्रदेशाश्चत्वारः । पञ्चमोऽप्यस्ति मरुप्रदेशः स निर्मनुष्यत्वादुपेक्ष्यते ।

श्रीः

# अथ श्रीरहस्यत्रयसारः

## प्रथम उपोद्घाताधिकारः

(मङ्गलाचरणम्)

आभगवत्तः प्रथितामनघामाचार्यसन्ततिं वन्दे ।
मनसि मम यत्प्रसादात् वसति रहस्यत्रयस्य सारोऽयम् ॥५॥
कर्मब्रह्मात्मके शास्त्रे कौस्कुतनिवर्तकान् ।
वन्दे हस्तिगिरीशस्य वीथीशोधककिङ्करान् ॥ ६ ॥

(ग्रन्थार्थसंग्रहगाथा)

[1](गाथा) रक्षेत् न्यासभूतान् अस्मानिति पङ्कजवासिनीवल्लभचरणयुगलमाश्रित्यास्माकमपि तद् दत्तवद्भिर्दयालुभिः,विजृम्भमाणानां तमसां विनाशनार्थमभिनिविश्योपदिष्टस्य (रहस्य)त्रयस्य तात्पर्यमनुदिनं सम्यगनुभवितुमत्रास्माकमसदृशो विधिरुपनतो भवति ॥ ७ ॥

(प्रथमाधिकारार्थसंग्रहश्लोकः)

मणिवर इव शौरेर्नित्यहृद्योऽपि जीवः
कलुषमतिरविन्दन् किङ्करत्वाधिराज्यम् ।

---

1 आलुमडैक्कलमेन्रेम्मै अम्बुयत्ताल् कणवन् ताळिणै शेर्न्दु एमक्कुमवै तन्द तहवुडैयार् मूळमिरुळ्क्कळ् विळ मुयन्रोदिय मून्रिनुळं नाळ्मुहक्कविंगे नमक्कोर् विधि वायकिन्रदे ।

विधिपरिणतिभेदाद्वीक्षितस्तेन काले
गुरुपरिषदुपज्ञं प्राप्य गोपायति स्वम् ॥ ७ ॥

(जीवात्मनः स्वाभाविकाकारनिरूपणम्)

श्रियः पत्युः सर्वेश्वरस्य श्रीकौस्तुभस्थानीयः सन्, हृदयंगमः "कुमार" इति "पुत्र" इति "प्रेष्य" इति "शेषभूत" इति "दासभूत" इति च तत्तच्छास्त्रेषु प्रतिपन्नोऽस्ति जीवात्मा।

(जीवात्मनः पूर्णपरतत्त्वानुभवार्हतानिरूपणम्)

अस्मिन्—

स्वस्य स्वभावप्राप्तशेषिणः, अज्ञानशून्यानाममराणामधिपतेः निरतिशयातिशयितानन्दवतः, अस्माकं पुष्पवासिन्याः पूर्णायाश्च स्निग्धस्य, भौमानां परमव्योमस्थानां च स्वामिनः सर्वेश्वरस्य, "वैकुण्ठे[1] तु परे लोके श्रिया सार्धं जगत्पतिः। आस्ते" इति, "[2]उज्ज्वलहस्तवलयायां श्रियां त्वयि चैव सुस्थितयोः" इति चोक्तरीत्या श्रीमहालक्ष्म्या सह निर्मले परमव्योम्नि "[3]याऽयोध्येत्यपराजितेति विदिता नाकं परेण स्थिता" इत्येवम् अयोध्यादिशब्दवाच्यायामक्षोभ्यमहानगर्यां सहस्रस्थूणादिवाक्याम्नाते श्रीमहामणिमण्टपे कौषीतकिब्राह्मणाद्याम्नाते पर्यङ्कविशेषे "[4]गमने छत्रं भवति आसिकायां सिंहासनं भवति" इति "निवासशय्यासन" इति चोक्तरीत्या सर्वदेशसर्वकालसर्वावस्थोचितानां सर्वविधकैङ्कर्याणां सर्वविधशरीरैरनुभवेन शेषत्वस्यैव स्वनिरूपकत्वादन्वर्थशेषाभिधाने, श्रीमदनन्तसूरिरूप-

---

2 'ओण् तोडियाळ्तिरुमहळुं नीयुमे निलानिर्प' (तिरुवाय् 4-9-10)

4 'शेन्राल् कुडैयाम् इरुन्दाल् शिंगाशनमाम्' (प्रथमान्तादि 53)

श्रीशय्याविशेषे परमव्योमयुवराजरूपेण विराजमानस्वपरिपाटीं सर्वात्मानोऽप्यनुभूय कृतार्था भवन्त्विति सहृदयतया स्थितस्य स्थितिं तां हेतुमवलम्ब्य नित्यानुभवं कुर्वाणैरनन्तमहानन्ददासैर्नित्यसूरिभिः सह अविशेषेण स्वयमपि स्वामिकैङ्कर्यस्य स्वरूपयोग्यतया (दायस्येव) सहजप्राप्त्यर्हेऽपि—

(जीवात्मनो विपरीताकारस्थितेर्निरूपणम्)

अनादिमायया सुप्ते, "[6]अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः ॥" इत्युक्तरीत्या प्रकृतिरूपे मरुकान्तारे निपत्य धावं धावं बहूनि जन्मानि प्राप्य पुरुषार्थमनासाद्य आवलम्ब्यमलब्ध्वा मालिन्यमुपेत्य ज्ञानहान्या तत्त्वहितविषययथावत्प्रकाशरहिते सति—

(राजकुमारदृष्टान्तवर्णनम्)

यथा कस्मिंश्चिद्राज्ञि अन्तःपुरेण सह मृगयार्थं निष्क्रम्य मृगयाविहारे विशेषसक्ते जाते भाषाज्ञानात्प्रागेव मार्गाद् भ्रष्टो राजकुमारो ग्रहीतृजनहस्तगतशिशुः सन् यस्मिन् कस्मिंश्चित् कुटीरे वर्धमानोऽस्वकीयां शबरत्वादिजातिं स्वस्मिन् आरोप्य "[7]माताऽप्येका पिताऽप्येको मम तस्य च पक्षिणः। अहं मुनिभिरानीतः स चानीतो गवाशनैः ॥ अहं मुनीनां वचनं शृणोमि गवाशनानां स वचः शृणोति। प्रत्यक्षमेतम् भवताऽपि दृष्टं संसर्गजा दोषगुणा भवन्ति ॥" इत्युक्तरीत्या व्याधश्रेणीस्थशुकवत्तदभ्यासितां वाणीमेव स्ववाणीत्वेन तदौरसवत् तद्भक्ष्यजीविके(वृत्ती) एव स्वभक्ष्यजीविकात्वेन श्रयन्, स्वजात्युचितेषु **भोगेषु आचारसंस्कारादिषु च प्राथमिकज्ञानेनापि शून्यो**

राजभोगविरुद्धेषु जुगप्सितविषयेषु स्वस्य लाभहानिभ्यां हर्षशोकौ आवहन्, अयं राजकुमारः इति स्वकीयां जातिं जानानेषु केषुचिद् ऋषिप्रायेषु सत्स्वपि तदुपसर्पणानर्हामवस्थां बिभ्रत्, एवं भ्रान्तिसिद्धशबरत्वाद्यवस्थया सह यावज्जीवं वर्तने उत्तरजन्मस्वपि योग्यताप्राप्तिविषये उपायशून्यः प्रतिबद्धपुरुषार्थश्चावतिष्ठेत—तथाऽस्मिन्नपि देहात्माभिमानादिभिः स्वस्वरूपं हित्वा पररूपमारोप्य स्थिते सति—

(राजकुमारदृष्टान्तेनैव जीवात्मनो धार्मिकसहवासतत्फलवर्णनम्)

यथा तस्य राजकुमारस्य लक्षणादिभिर्जातिविशेषमभिजानन्तः केचन धार्मिकाः केनचिदुपायेनैनं वशीकृत्य अभिमानं कृत्वा अस्याऽऽगन्तुकं जात्यन्तराभिमानं निराकृत्य दृष्टादृष्टसंस्कारादिभिरुत्तरोत्तरभोगतदुपाययोग्यतापादकमुपायं कृत्वा अस्मिन् स्वजात्यनुरूपाणि गुणवृत्तानि स्वोपदेशानुष्ठानाभ्यां सुस्थिरं निवेश्य अस्यानेकदोषदुष्टेषु शबरादिभोग्यक्षुद्रविषयेषु जुगुप्सामुपजनय्य राजादिभोग्यानामतिशायितपुरुषार्थानां विवेचनपूर्वकोपादानप्रयोजकं ज्ञानमुत्पाद्य स्थापयेयुः, तथा इममात्मानं केषुचित् धार्मिकेषु पित्रादिमुखेन संभाष्य, पुमान् न देवो न नरो न पशुर्न च पादपः। शरीराकृतिभेदास्तु भूपैते कर्मयोनयः॥" इत्युक्तरीत्या देहविलक्षणैतत्स्वरूपस्थितिं प्रबोध्य तदनुरूपपुरुषार्थतदुपायेष्वन्वयोपपादकमुपायं कृत्वा देहकबलीकृतस्वरूपस्वदशाहा[प]नपूर्वकं प्रकाशातिशयविशेषसंपन्नानां संभवन्ति गुणवृत्तान्युत्पाद्य हेयोपादेयविभागक्षमं कृत्वा स्थापितवत्सु सत्सु—

इदमीयां प्राथमिकस्थितिं धार्मिकविशेषसहवासप्रभवां योग्यतां बुद्धिमत्तां च स्वयं साक्षात्कृत्य परमकारुणिकेन परमशेषिणा प्रेरितैः स्वयं च कारुणिकोत्तमैः सद्भिः कैश्चिद्देशिकैः—

"ईश्वरस्य च सौहार्दं यदृच्छासुकृतं तथा। विष्णोः कटाक्षमद्वेषमाभिमुख्यं च सात्त्विकैः। संभाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः" इत्युक्तरीत्या यदृच्छया सन्निधाय,—यथा तस्य राजकुमारस्य कैश्चित् राजान्तरज्ञैर्यदृच्छया सन्निधाय जन्मतत्त्वमवगमय्य भावीनि प्रियतमानि हिततमानि च विशदं ज्ञापयित्वा केनचिदुपायविशेषेण तस्य राज्ञो राजकुमारस्य च परस्परसंश्लेषाकाङ्क्षोत्तम्भ्येत—तथाऽस्यापि "[10]नायं देवो न मर्त्यो वा न तिर्यक् स्थावरोऽपि वा। ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः॥" इति, "[11]दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः" इत्येवं च प्रमाणैः प्रतिपादितदिशा, जृम्भमाणसमुद्रपरिवृतां भुवं परमाकाशलोकं च निश्शेषं परिपालयता सत्प्रभुणा श्रियः पत्या नारायणेन सह स्वाभाविकसहजसंबन्धं विशदं ज्ञापयित्वा, अस्य तत्प्राप्त्युपायेषु प्रयस्य—

एतल्लभ्यं पुरुषार्थमेव स्वस्य कृत्स्नदिव्यविभूतिलीलाविभूतिपालनरूपमभिनन्द्य,

तन्मूलकं तदात्वप्रसूतवत्सगोचरवात्सल्यशालिक्षीरक्षरणोद्यतधेनुन्यायेन एभिर्देशिकैः (देशिकीभूयेत्यर्थः) अस्य जीवात्मनोऽज्ञानसंशयनिवृत्तिमभिसन्धाय अनतिविस्तरसंक्षेपं उच्यमानैः (आविर्भाव्यमानैः)वचनैः "[12]तत्त्वेन यश्चिदचिदीश्वरतत्स्वभाव" इत्याद्युक्तरीत्या ईश्वरस्येशितव्यानां च स्वरूपस्वभावसंबन्धाः भोगापवर्गौ त्याज्योपादे-

यैतदुपायाः एषां गतिप्रकाराः उक्तानुक्ता मोक्षविरोधिन इत्येतेऽर्थाः मुमुक्षुणा एनेनाऽऽत्मना ज्ञातव्याः ।

(एषामर्थानां रहस्यत्रयप्रतिपाद्यत्वोपक्षेपः)

एतेऽर्थाः सर्वेऽपि अध्यात्मविषयशब्दराशौ सारतमे रहस्यत्रये प्रतितन्त्रसारोद्धारेण संगृह्यन्ते (संगृहीताः सन्ति) ॥

(अधिकारार्थसंग्रहगाथा)

[1](गाथा) श्रिया सह आविर्भूतस्य श्लाघ्यमणेरिव [अस्माकं] लक्ष्मीवल्लभहृदयं सप्रेमवासस्थानमिति यथोच्येत, तथा चरणारविन्दोत्तंसनभाग्यं प्राप्तवन्तो वयम् आगर्भानुवृत्तक्रूरकर्मनद्यां निपत्य यथा न प्रोह्येमहि, तथा कृपां कर्तुं सूक्ष्मार्थेन सह पञ्चकज्ञाः समुपनताः सन्ति हि ॥ ८ ॥

(अधिकारार्थसंग्रहपद्यम्)

कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे
तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा ।
तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचित्
मुक्तैश्वर्यान्तसंपन्निधिरपि भविता कश्चिदित्थं विपश्चित् ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे उपोद्घाताधिकारः प्रथमः ॥
॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

तिरुवुडन् वन्द शेड्मणिपोल् तिरुमालिदयम् मरुविडमेन्न मलरंडि शूडुं वहै पेरुनाम्, करुवुडन् वन्द कडविनै यार्ट्रिल् विड्रुन्दोडहादु अरुवुडनैन्दरिवार अरुळ्शेय्य अमैन्दनरे ॥

श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

# सारनिष्कर्षाधिकारो द्वितीयः

(अधिकारार्थसंग्रहोपक्रमश्लोकः)

श्रुतिपथविपरीतं क्ष्वेलकल्पं श्रुतौ च
प्रकृतिपुरुषभोगप्रापकांशो न पथ्यः ।
तदिह विबुधगुप्तं मृत्युभीता विचिन्व-
न्त्युपनिषदमृताब्धेरुत्तमं सारमार्याः ॥

(रहस्यत्रयस्यैव मुमुक्ष्वादरणीयत्वम्)

अस्मिन् रहस्यत्रये श्रीमन्त्रस्य "[1]सर्वमष्टाक्षरान्तस्स्थम्" इत्युक्तरीत्या स्वार्थे ज्ञाते सर्वार्थज्ञापनस्वभावतयाऽवस्थानात्, चरमश्लोकस्य "[2]सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इति स्वोक्तस्योपायस्यैकस्यैवावलम्बने सर्वोपायफलसिद्धिर्भवतीत्यर्थस्थापकत्वात्, द्वयस्य च कठश्रुत्याद्युक्तरीत्या स्वं सकृदुच्चारितवतो विषये सर्वप्रकारकृतकृत्यत्वापादनौपयिकवैभववत्त्वाच्च रहस्यत्रयमेव मुमुक्षुणा आदरणीयम् ।

(असाराल्पसारादिविवेचनम्)

"असारमल्पसारञ्च सारं सारतरं त्यजेत् ।
भजेत् सारतमं शास्त्रे रत्नाकर इवामृतम् ॥"

परमपुरुषार्थस्य तदुपायस्य च प्रत्यक्षादिप्रमाणैर्दुर्ज्ञानतया, एतयोर्विषये "[3]शास्त्राद्वेद्मि जनार्दनम्" "[4]तस्मच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ" "[5]शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इत्युक्तरीत्या शब्द एव प्रमाणम् ॥

तत्र "[6]अनन्तपारं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः । यत् सारभूतं तदुपाददीत हंसो यथा क्षीरमिवाम्बुमिश्रम् ॥" इति श्लोके सारभूतमिति पदेन प्रतिपन्नः (न्नं) निरुपाधिकसारं विषयीकुर्वन् सारतम शब्द उपादेयः । बाह्यकुदृष्टिशास्त्राण्यत्यन्तासारत्वादनुपादेयानि । वेदे पूर्वभागे ऐहिकफलसाधनप्रतिपादकः प्रदेशोऽत्यल्पसारत्वादनुपादेयः । आमुष्मिकफलसाधनप्रतिपादकांशः ऐहिकफलातिशयितफलकत्वात केषाञ्चित् सारत्वेन सुवचोऽपि दुःखमूलत्वादिदोषदुष्टत्वादनुपादेयः । आत्मतत्प्राप्तितत्साधनमात्रप्रतिपादकः अंशोऽपि सारतरः सन्नपि ततोऽप्यत्यन्तातिशयितपरमात्मानुभवसापेक्षाणामनुपादेयः । परमात्मतत्प्राप्तितदुपायप्रकाशकः प्रदेशः सारतमत्वाद्विवेकिन उपादेयः ॥

(तत्रापि रहस्यत्रयस्यैवात्यन्तोपादेयत्वम्)

तत्राप्यंशे प्रधानप्रतितन्त्राणां तत्त्वहितानां संग्रहरूपत्वादत्यन्तं सारतमं भवति रहस्यत्रयम् । अतः "[7]बहुभ्यश्च महद्भ्यश्च शास्त्रेभ्यो मतिमान् नरः । सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥" इत्युक्तरीत्या रहस्यत्रयं मुमुक्षोरस्याऽऽत्मनोऽत्यन्तमुपादेयं भवति ॥

(अधिकारार्थसंग्राहकगाथा)

[1](गाथा) अपर्याप्तानीमानीत्याशया लोके (अभ्यस्यमानेषु) अष्टादशसु भारायमाणेषु विद्यास्थानेषु परितः (ग्राह्यत्वाय) समागतेष्वपि, संख्यापूरकाणीमानीति (निश्चित्य) अनिमेषैर्देवैः स्तुतमष्टकं द्वयं च गणयन्तोऽस्मत्समयाचार्याः चातुर्ययुतां विलक्षणां स्थितिं दिदिशुः ॥

(अधिकारार्थसंग्राहकपद्यम्)

शाखानामुपरिस्थितेन मनुना मूलेन लब्धात्मकः
सत्ताहेतुसकृज्जपेन सकलं कालं द्वयेन क्षिपन् ।
वेदोत्तंसविहारसारथिदयागुम्भेन विस्रम्भितः
सारज्ञो यदि कश्चिदस्ति भुवने नाथः स यूथस्य(स्स) नः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीरहस्यत्रयसारे सारनिष्कर्षाधिकारो द्वितीयः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

—o—o—

1 अमैयाविवै पन्नुमाशैयिनाल् अरुमूत्रलहिल् शुमैयान कल्विहल् शूड़वन्दालुम्, तोहै यिवै येन्र इमैयाविमैयवरेत्तिय एट्टिरण्डेण्णिय नम् शमयाशिरियर् शदिर्कुं तनिनिलै तन्दनरे ॥

श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

## ॥ प्रधानप्रतितन्त्राधिकारः तृतीयः ॥

(अधिकारार्थसंग्राहकश्लोकः)

आधेयत्वप्रभृतिनियमैरादिकर्तुः शरीरं
सत्तास्थेमप्रयतनफलेष्वेतदायत्तमेतत् ।
विश्वं पश्यन्निति भगवति व्यापकादर्शदृष्टे
गम्भीराणामकृतकगिरां गाहते चित्तवृत्तिम् ॥

(प्रतितन्त्रशब्दार्थः)

प्रतितन्त्रशब्दार्थस्तावत्—इतरसिद्धान्तिषु केनाप्यनभ्युपगतः स्वसिद्धान्तस्यैवासाधारणोऽर्थः । इह वेदान्तिनामस्माकं दर्शनस्यैव असाधारणाः प्रधानभूताश्चार्थाः के इति चेत्—चेतनाचेतनानामीश्वरस्य च संबन्धरूपशरीरात्मभावादयः ॥

(शरीरशरीरिभावनिरूपणम्)

तत्रेश्वरस्य शरीरित्वं नाम—चेतनाचेतनद्रव्यनिरूपितं नियमेन धारकत्वं नियन्तृत्वं शेषित्वं च । चेतनाचेतनानि प्रति धारकत्वं नियन्तृत्वं च नाम—स्वस्य स्वरूपेण संकल्पेन च यथार्हं सत्तास्थितिप्रवृत्तीनां प्रयोजकत्वम् । तत् कथमिति चेत्—ईश्वरः स्वकीयानां स्वरूपनिरूपकधर्माणाम्, निरूपितस्वरूपविशेषणानां गुणानां चैव स्वव्यतिरिक्तसमस्तद्रव्याणामपि

अव्यवधानेन स्वरूपेणाऽऽधारो भवति । तत्तद्द्रव्याश्रितानां गुणादीनां तत्तद्द्रव्यद्वाराऽऽधारो भवति । 'जीवैर्धार्यमाणानां शरीराणां जीवद्वाराऽऽधारो भवति' इति केचिदाहुः । जीवं द्वारीकृत्य, स्वरूपेण च आधारो भवतीति केचिदाचार्या आहुः । इत्थं सर्वेषामीश्वरस्वरूपं प्रति अपृथक्सिद्धविशेषणत्वात् एषां सत्तादीनि आश्रयसत्ताधीनानि । सर्ववस्तूनां सत्तायाः संकल्पाधीनत्वं नाम—अनित्यानामनित्येच्छयोत्पन्नत्वं नित्यानां नित्येच्छासिद्धत्वञ्च । इममर्थम् "[1]इच्छात एव तव विश्वपदार्थसत्ता" इति श्लोके अभियुक्ता विवेचयामासुः । एतेन सर्वस्यापि सत्तानुवृत्तिरूपायाः स्थितेरपीश्वरेच्छाधीनत्वात् सर्वमीश्वरसंकल्पाश्रितमित्युच्यते । गुरुद्रव्याणि संकल्पेन धृतानीति शास्त्रेषु प्रतिपादनम्, "[2]द्यौः सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः" इत्युक्तरीत्या तत्तद्देशविशेषेषु पतनप्रसक्तिराहित्येनावस्थापनरूपार्थमभिप्रेत्य । इत्थमिच्छाधीनसत्तास्थितिप्रवृत्तीनां वस्तूनां (विषये) परमात्मस्वरूपं किं करोतीति चेत्—परमात्मन इच्छा इमानि वस्तूनि परमात्मस्वरूपाश्रितत्वेन विविच्य स्थापयति । इत्थं सर्वं वस्तु ईश्वरस्वरूपाश्रितमीश्वरेच्छाधीनं च भवति ।

लोकेऽपि शरीरं शरीरिणः स्वरूपाश्रितं संकल्पाधीनं च सत् पश्यामः—जीवाधिष्ठानकालेऽवस्थानात् एतत्त्यक्ततादशायां विनाशाच्च स्वरूपाश्रितम् । अयमर्थः संकल्परहितसुषुप्त्याद्यवस्थासु विशदः । जागरादिदशासु संकल्पेन पतनप्रतिबन्धार्हं धारणसमये

संकल्पाश्रितमिति वक्तव्यम् । अत्र स्वरूपाश्रितत्वम् आधेयत्वमिति संकल्पाश्रितत्वम् नियाम्यत्वमिति च वदति(प्रमाणगणः) ।

(ईश्वरस्य सर्वशेषित्वनिरूपणम्)

ईश्वरस्य सर्वशेषित्वं नाम—"[3]उपादत्ते सत्तास्थिति-नियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी । उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ अतस्त्वां श्रीरङ्गेशय ! शरणमव्याजमभजम् ॥" इत्युक्तरीत्या स्वप्रयोजनार्थमेव पारार्थ्यैक-स्वभावानामेषामुपादानपूर्वकमेतज्जन्यातिशयभाक्त्वम् ।

(आधाराधेयभावादिफलितार्थनिरूपणम्)

एभिराधाराधेयभावादिभिरस्य चेतनस्य किं फलतीति चेत्—आधाराधेयभावेन तदीयज्ञानशक्त्यादीनामिवापृथक्-सिद्धस्वरूपलाभः, शेषशेषिभावेन आत्माभिमानानुगुण-पुरुषार्थव्यवस्थानुसारेण स्वरूपानुरूपपुरुषार्थरुचिः, शेषशेषि-भावेन नियन्तृनियाम्यभावेन च स्वरूपानुरूपपुरुषार्थानुरूप-निरपेक्षोपायविशेषावगमश्च फलति । तदेभिरयं चेतनोऽनन्याधारोऽनन्य-प्रयोजनोऽनन्यशरणश्चेति सिद्धम् ।

(रहस्यत्रयेऽनन्याधारत्वाद्यनुसंधानस्थलप्रदर्शनम्)

अस्यार्थस्य प्रथमरहस्ये स्थितत्वं कथमिति चेत्—नारायणशब्दे तत्पुरुषबहुव्रीहिसमासद्वयसिद्धधारकत्वव्या-पकत्वादिभिरनन्याधारत्वादिविशिष्टस्वरूपलाभः । पारार्थ्य-पारतन्त्र्यगर्भप्राक्तनपदद्वयेन अनन्यप्रयोजनत्वमनन्यशरणत्वं च

फलति। प्रपत्त्यनुष्ठानप्रकाशके मन्त्ररत्ने पूर्वखण्डेनानन्यशरणत्व-मुत्तरखण्डेनानन्यप्रयोजनत्वं भागद्वयेनानन्याधारत्वं च प्रकाश्यते। एवं शाब्दतया आर्थतया च चरमश्लोकेऽप्ययं विभागो द्रष्टव्यः।

एवं चरमश्लोके सिद्धोपायवशीकरणार्थविहितस्य साध्योपायविशेषस्य द्वयेनानुष्ठानसमयेऽनुसन्धेयतयाऽवश्यापेक्षितान् सर्वान् अर्थान्, अस्थूलदर्पण इव स्थूलपदार्थान्, संग्रहेण विशदं प्रकाशयति श्रीमन्त्रः॥

(श्रीवादिहंसाम्बुदाचार्योक्तं मन्त्रार्थानुसन्धानस्यानुकूलं निदर्शनम्)

अत्र प्रथमपदोदिता अर्था अर्जुनरथे, "[4]अग्रतः प्रययौ रामः" इति श्लोके च द्रष्टव्याः। द्वितीयपदे शब्दतोऽर्थस्वभावाच्च प्रतीयमानावर्थौ श्रीभरतस्य शत्रुघ्नस्य वृत्तान्तयोर्ज्ञातुं शक्यौ। "अहं त्वां विना नास्मि पश्य नारायण! त्वं मां विना नासि" इत्युक्त-नारायणशब्दार्थः कोसलजनपदस्थजन्तून् चक्रवर्तिश्रीकुमारं चोदाहरणीकृत्य द्रष्टव्यः। पूर्वपदद्वयप्रतिपन्नकाष्ठाप्राप्तपारार्थ्यपारतन्त्र्य-मूलकं तृतीयपदस्थचतुर्थीविवक्षितं प्रार्थनीयं शेष्यभिमतं कैङ्कर्यं बालस्वामिन[2] एतदवतारभूतपादुकायाश्च प्रवृत्तौ निवृत्तौ च विशदं ज्ञातुं शक्यम्। अयं श्रीमन्त्रार्थानुसन्धानस्योदाहरणतया श्रीवादिहंसाम्बुवाहाचार्यैरनुगृहीत उपायः॥ अनया रीत्या द्वये चरमश्लोके च निहिता अर्था विशदमनुसन्धेयाः।

---

1 'नान् उन्नै यन्रि इलेन् कण्डाय् नारणने नी एन्नै यन्रि यिलै' (नान्मुहन्तिरुवन्तादि-7)। 2 लक्ष्मणस्येत्यर्थः।

(शेषशेषिभावस्य दासस्वामिभावे विश्रमणम्)

अत्रेश्वरे प्रकाशितं शेषित्वं चेतनाचेतनसाधारणधर्मत्वात् चेतनैकान्ते स्वामित्वरूपे विशेषे पर्यवसाय्यानुसन्धातुमुचितम्। एवं स्वगतं शेषत्वमपि सामान्यरूपत्वात् दासत्वरूपे विशेषे विश्रमय्यानुसन्धेयम्। अत्र सामान्यभूतः शेषशेषिभावः प्रथमाक्षरे चतुर्थ्या प्रकाश्यः। एतद्विशेषौ दासत्वस्वामित्वे द्वयोरपि चेतनत्वेन प्रकाशमानत्वादर्थसिद्धौ। एवं नारायणशब्देऽपि सामान्यविशेषौ द्रष्टव्यौ।

(दासत्वस्वामित्वफलितार्थनिरूपणम्)

अत्र सामान्यभूतशेषत्वेन चेतनस्य प्राप्तः किञ्चित्कारो दासत्वरूपविशेषेण कैङ्कर्यरूपपुरुषार्थः संपद्यते। एवं शेषित्वप्रयुक्त ईश्वरस्यातिशययोगोऽपि स्वामित्वरूपविशेषेण तस्य पुरुषार्थरूपतया फलति। चेतनरक्षणे ईश्वरस्य प्राप्ततया (स्वतोधिकृततया) शक्ततया च तदधीनप्रवृत्तिकतां विना चेतनानामनधिकृततया अशक्ततया चावस्थितेर्निबन्धनम्, ऐश्वरं निरुपाधिकशेषित्वं निरुपाधिकनियन्तृत्वञ्च, चेतनानां निरुपाधिकशेषत्वं निरुपाधिकनियाम्यत्वं च। स्वामिना स्वीयवस्तुनो रक्षणं समर्थेनासमर्थस्य रक्षणं च प्राप्तं (उचितं) किल। रक्षणसमये कर्मवश्यानामुपायविशेषे प्रवर्तनपूर्वकरक्षणमीश्वरस्य स्वसंकल्पनियतम्॥

(अधिकारार्थसंग्राहकगाथा)

[2](गाथा) स्थितिप्रदःसन् धारकः, नियामकःसन् ईश्वरः, अस्वभूतं न किञ्चिदित्येवं सर्वं स्वकीयमित्यभिमन्ता सन् स्वामी च भवन् निरुपम इत्येवं स्थितो यः, तस्य तुलसीभूषितकिरीटस्य(मौलेः) शरीरभूता वयं मूल्यं(शुल्कं) विनैव दासभूता इति वैदिकाभिमतः तात्त्विकोऽर्थः ॥

(उपसंहारपद्यम्)

यद्येतं यतिसार्वभौमकथितं विद्यादविद्यातमः—
प्रत्यूषं प्रतितन्त्रमन्तिमयुगे कश्चित् विपश्चित्तमः ।
तत्रैकत्र झटित्युपैति विलयं तत्तन्मतस्थापना-
हेवाकप्रथमानहैतुककथाकल्लोलकोलाहलः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रये प्रधानप्रतितन्त्राधिकारः तृतीयः ॥

—०—०—

2 निलै तन्दधारकनाय् नियमिक्किऱवनुमाय् इलदोन्ऱिलावहै येल्लां तनदेन्नु मेन्दैयुमाय् तुलैयोन्ऱिलै येन निन्ऱ तुऴाय् मुडियानुडम्बाय् विलैयिन्ऱि नाम्अडियोमेन्ऱु वेदियर मेय्पोरुळे ।

श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

## ॥ अर्थपञ्चकाधिकारः चतुर्थः ॥

आदौ प्राप्यं परममनघं प्राप्तृरूपं च मादौ
इष्टोपायं त्वयननमसोरीप्सितार्थं चतुर्थ्याम् ।
तद्व्याघातं ममकृतिगिरि व्यञ्जयन्तं मनुं त
तत्प्रायं च द्वयमपि विदन् सम्मतः सर्ववेदी ॥

(अर्थपञ्चकस्वरूपम्)

नारायणादिशब्दविवक्षितं सम्बन्धविशेषं सिद्धान्तस्याऽऽधारं कृत्वा एतदनुबद्धमर्थपञ्चकं केचिद्विचारयांबभूवुः । अनेन संबन्धेन सह, षडर्था इति केचिदनुसंदधिरे । एतत्संबन्धवत् मुमुक्षोर्विशिष्य ज्ञातव्यत्वेन समुचितमर्थपञ्चकं किमिति चेत्—"[1]प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं चैव तथा प्राप्तिविरोधि च । वदन्ति सकला वेदाः सेतिहासपुराणकाः ॥" इति प्रतिपादितम् ।

(रहस्यत्रये प्राप्यानुसंधानस्थलप्रदर्शनम्)

एषु प्राप्यस्य ब्रह्मणः स्वरूपं श्रीमन्त्रे प्रथमाक्षरे नारायणशब्दे च, द्वये सविशेषणयोर्नारायणशब्दयोः, चरमश्लोके माम् अहं इति पदयोश्चानुसन्धेयम् ।

(प्राप्यस्वरूपनिरूपक श्रीवैशिष्ट्यादि)

तत्वानुसन्धानसमये, "[2]श्रिया सार्धं जगत्पतिः" "[3]एष नारायणः श्रीमान्" "[4]भवान् नारायणो देवः श्रीमाँश्चक्रधरो विभुः" "[5]श्रीवत्सवक्षाः नित्यश्रीः" "[6]विष्णोः श्रीरनपायिनी" "[7]सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत्", "[8]सीतामुवाचातियशा राघवं च महाव्रतम्", "[9]अलमेषा परित्रातुं राघवात् राक्षसीगणम्", "[10]भवेयं शरणं हि वः", "[11]भवांस्तु सह वैदेह्या", "[12]तया सहाऽऽसीन-मनन्तभोगिनि", "[13]कान्तस्ते पुरुषोत्तमः", "[14]स्वपरिचरणभोगैः श्रीमति प्रीयमाणे", "[15]श्रीमते निर्मलानन्दोदन्वते विष्णवे नमः", "[16]श्रियः कान्तोऽनन्तो वरगुणगणैकास्पदवपुः", "[17]ब्रह्मणि श्रीनिवासे", "[18]श्रियः पतिर्निखिलहेयप्रत्यनीककल्याणैकतान...... अनन्तज्ञानानन्दैकस्वरूपः", "[19]त्वञ्च श्रीदेवी च स्थितौ आश्चर्यम्" "[20]उज्ज्वलाग्रहस्ववलयायां श्रियां त्वयि चैव स्थितयोः", "[21]अलंकारशालिश्रीमहालक्ष्म्या सह त्वाम्", [22]तव श्रीकृपां पङ्कजाङ्गनायाः श्रीकृपां च", "[23]तव तामरसवधूः त्वं च [24]विश्लेष्टुं

19 नीयुम् तिरुमहळुं निन्रायाल् (प्रथमान्तादि 86.)
20 ओण्तोडियाळ्तिरुमहळुं नीयुमे निलोनिर्प
(तिरुवाय्-4-9-10)
21 कोलत्तिरुमामहळोडुन्नै „ (6-93-)
22 निन् तिरुवरुळुं पंकयत्ताळ् तिरुवरुळुम् „ (9-2-1)
23 उन्तामरैमङ्गैयुम् नीयुम् „ (9-2-3)
24 अहल किल्लेनिरैयुम् „ „ (6-10-10)

न शक्नोमि क्षणमपि" "[25]कात्स्न्येंन ज्ञानमानन्दः" "[26]अविनश्वरदीपः परिच्छेतुमशक्य" इति प्रमाणोक्तरीत्या सर्वप्रकारेण सर्वावस्थायां सहधर्मचारिण्या महादेव्याऽविनाभूतं कृत्स्नानन्दानन्तज्ञानस्वरूपं चानुसन्धेयम् ।

(तस्य हेयप्रत्यनीकत्वम्)

एवं "[27]समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" "[28]परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे" इत्युक्तरीत्या हेयप्रत्यनीकतयाऽनुसन्धेयम् ।

(तस्य कल्याणगुणाकरत्वम्)

[29]"तैर्युक्तः श्रूयतां नरः" [30]"तमेवं गुणसंपन्नम्" [31]"ज्येष्ठं श्रेष्ठगुणैर्युक्तम्" "[32]एवं श्रेष्ठगुणैर्युक्तम्" "[33]गुणैर्विरुरुचे रामः" "[34]तमेवंगुणसंपन्नमप्रधृष्यपराक्रमम्" "[35]बहवो नृप ! कल्याणगुणाः पुत्रस्य सन्ति ते" "[36]आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः । राघवं शोभयन्त्येते षड् गुणाः पुरुषोत्तमम् ॥" "[37]विदितः स हि धर्मज्ञः शरणागतवत्सलः" "[38]शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः" "[39]निवासवृक्षः साधूनामापन्नानां परा गतिः" "[40]तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः", "[41]सर्वभूतात्मभूतस्य विष्णोः को वेदितुं गुणान्", "[42]यथा रत्नानि जलधेरसंख्येयानि पुत्रक । तथा गुणाश्च देवस्य ह्यसंख्येया हि चक्रिणः ॥", '[43]वर्षायुतैर्यस्य

25 उणर् मुड् नलम् (तिरुवाय्-1-1-2)

26 नन्दाविळक्के अळत्तर्करियाय् (पेरियतिरु-3-8-1)

गुणा न शक्या वक्तुं समेतैरपि सर्वदेवैः," "[44]चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः। स ते गुणानामयुतैकमंशं वदेन्न वा देववर प्रसीद ॥," "[45]तवानन्तगुणस्यापि षडेव प्रथमे गुणाः। यैस्त्वयेव जगत् कुक्षावन्येऽप्यन्तर्निवेशिताः ॥" "[46]इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात्। मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥", "[47]प्रबलपापिनं मां बाधमानैर्गुणैर्युक्त", "[48]उच्छ्रायशून्यमुच्छ्रयदानन्दवान्" इत्युक्तरीत्या **प्राप्यत्वप्रापकत्वोपयुक्तैर्गुणैर्विशिष्टतयाऽनुसन्धेयम्।**

(तस्य दिव्यविग्रहवत्त्वम्)

"[49]सदैकरूपरूपाय", "[50]नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर। यस्यास्ति सत्ता हृदये तस्यासौ सन्निधिं व्रजेत् ॥" "[51]समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद् विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥" "[52]इच्छागृहीताभिमतोरुदेहः" "[53]न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" "[54]न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा" "[55]भुजैश्चतुर्भिः समुपेतमेतद्रूपं विशिष्टं दिवि संस्थितञ्च," "[56]रुक्माभं स्वप्नधीगम्यम्," "[57]तत्रैकस्थं जगत् कृत्स्नम्" "[58]पश्यामि देवांस्तव देव देहे" "[59]अस्त्रभूषणसंस्थानस्वरूपम्" "[60]भूषणास्त्रस्वरूपस्थं यथेदमखिलं जगत्" "[61]तमसः परमो धाता शङ्खचक्रगदाधरः" इत्युक्तरीत्या **सर्वजगदाश्रयाप्राकृत-**

---

47 वलविनैयेनै यीर्हित्र गुणंगळैयुडैयाय् (तिरुवाय-8-18)
48 उयर्वर उयर्नलमुडैयवन् " 1-1-1

दिव्यमङ्गलविग्रहविशिष्टतयाऽनुसन्धेयम् ॥ अस्य विग्रहस्य परव्यूहविभवहार्दार्चावताररूपेण पञ्चप्रकारत्वमेतद्गतविशेषाश्च भगवच्छास्त्रसंप्रदायतोऽवगम्यन्ते ॥

(तस्योभयविभूतियुक्तत्वम्)

"[62]विष्णोरेता विभूतयः", "[63]महाविभूतिसंस्थान" "[64]नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप" इत्यादीनां संग्रहभूतस्य, "यदण्डमण्डान्तरगोचरं च यत्" इत्यस्य श्लोकस्यानुसारेणानन्तविभूतिविशिष्टतयाऽनुसन्धेयम् । एतद्विविभूत्यन्तर्गताः चेतनाचेतनरूपा उभयविधा अप्यर्थाः लीलार्थतया भोगार्थतया च विभक्ताः सन्ति। आनुकूल्यमात्रे अविशिष्टेऽपि रसवैषम्येण लीलाभोगविभागो यथालोकं द्रष्टव्यः ।

(तस्य लीलारूपजगद्व्यापारवत्त्वम्)

तथैव, "[66]जन्माद्यस्य यतः" "[67]क्रीडा हरेरिदं सर्वम्" "[68]क्रीडतो बालकस्येव", "[69]बालः क्रीडनकैरिव" "[70]हरे विहरसि क्रीडाकन्तुकैरिव जन्तुभिः" "[71]लोकवत्तु लीलाकैवल्यम्" इत्युक्तरीत्या लीलारूपजगद्व्यापारलक्षणकतया चानुसन्धेयम् ॥

(उक्तार्थसंग्रहपूर्वकं प्राप्तृनिरूपणोपक्रमः)

इत्थं लक्ष्मीसहायमपरिमितज्ञानानन्दस्वरूपं हेयप्रत्यनीकं ज्ञानशक्त्याद्यनन्तमंगलगुणविशिष्टं दिव्यमङ्गलविग्रहोपेतं शरीरभूतविभूतिद्वययुक्तं जगत्सृष्ट्यादिव्यापारलीलं सत् प्राप्यं ब्रह्म प्राप्नुवतः प्रत्यगात्मनो बद्धमुक्तनित्यसाधारणं रूपम्, उपायाधिकारिणः स्वस्य साम्प्रतिकमसाधारणं रूपञ्चावगन्तव्यम् ।

### (बद्धमुक्तनित्यानां लक्षणानि)

एषु बद्धा नाम—अनादिकर्मप्रवाहेणानुवृत्तसंसाराः ब्रह्मादिस्तम्बपर्यन्तविभागभागिनः क्षेत्रज्ञाः। मुक्ता नाम—शास्त्रचोदितैरुपायविशेषैर्जनितेन भगवत्प्रसादेनात्यन्तनिवृत्तसंसाराः संकोचरहितभगवदनुभवेन निरतिशयानन्दाः स्थिताः। नित्या नाम—ईश्वरवदनादिसिद्धात ज्ञानसंकोचाभावात् "[72]सवयस इव ये नित्यनिर्दोषगन्धाः" इतिरीत्या अस्पृष्टसंसाराः सन्तो नित्यकैङ्कर्यं कुर्वाणाः अनन्तगरुडविष्वक्सेनादयः। एषां सर्वेषां साधारणं रूपमणुत्वज्ञानानन्दामलत्वादिकं भगवच्छेषत्वपारतन्त्र्यादिकञ्च। मुमुक्षोः स्वस्यासाधारणान् ज्ञातव्यान् आकारान् उपोद्घातेऽवोचाम। अग्रेऽपि द्रष्टव्यम्।

### (रहस्यत्रये प्राप्तृस्वरूपानुसन्धानस्थलप्रदर्शनम्)

अस्य प्राप्तुः स्वरूपं प्रणवनमस्स्थमकारेषु नारशब्देषु "प्रपद्ये" इत्युत्तमे "व्रज" इति मध्यमे "त्वा" इतिपदे "मा शुचः" इति वाक्ये चानुसन्धेयम्।

### (उपायफलस्वरूपानुसंधानस्थलप्रदर्शनम्।)

प्राप्त्युपायमेतत्परिकरान् फलस्वरूपं चोपरिष्टात् प्राप्तस्थलेषु विस्तरेण प्रतिपादयिष्यामः। एषूपायः श्रीमन्ते नमसि अयनशब्दे, द्वये पूर्वखण्डे, चरमश्लोके पूर्वार्धे चानुसन्धेयः। फलस्वरूपं चतुर्थ्यन्तपदेषु द्वये नमसि, "सर्वपापेभ्यो मोक्षयिष्यामि" इत्यत्र चानुसन्धेयम्।

(प्राप्तिविरोधिस्वरूपप्रदर्शनम्)

प्राप्तिविरोधी-अविद्याकर्मवासनादिरूपो मोक्षप्रतिबन्धकवर्गः । अत्र प्रधानभूतोऽनादिकालसन्तन्यमानाज्ञातिलङ्घनप्रभवो भगवन्निग्रहः । अयम्—

क्षेत्रज्ञानां ज्ञानसंकोचकरं त्रिगुणात्मकप्रकृतिसंसर्गविशेषमुपजनय्य,—एतत्प्रकृतिपरिणामविशेषैः शरीरेन्द्रियादिभिः सह संयोजनपूर्वकं "[73]दृढंसम्यक्बध्वा बहुकृतपापदृढरज्जुभिः, व्रणरूपमांसादिकमविदितमाच्छाद्य मां अपसरणयोग्यं स्थापितवानसि बहिरेव" इति, "[74]तद्दिने त्वद्दत्तस्य शरीरस्य वर्त्मनि भ्रमामि" इति चोक्तरीत्या देहेन्द्रियादिपरतन्त्रमापाद्य,—तस्यामवस्थायामपि शास्त्रवश्यतानर्हतिर्यगादिदशासु स्थापयित्वा,—शास्त्रयोग्येषु मनुष्यादिजन्मसु बाह्यकुदृष्टिमतैर्व्यामोह्य,—तत्राप्रविष्टानपि "[75]भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीम्" इत्युक्तरीत्या मूलप्रकृतिप्रभृतिमोहनपिच्छिकया तत्वाज्ञान-विपरीतज्ञान-विषयप्रावण्यान्युपजनय्य,—एतन्मूलकतया "[76]आत्मा व्याकुलो यथा भवेत् तथा पञ्चेन्द्रियपीडाफलमल्पसुखं बहु प्रदर्श्य क्लेशयितुं किं ते साम्प्रतम्" इत्युक्तरीत्या सुखलवार्थमकृत्यकरणादिरूपमा-

---

73 तिण्णमऴुन्दक्कट्टिप्पलशेय्विनै वन्कयिट्राल् पुण्णै मरैय वरिन्दु एन्नैप्पोर वैत्ताय् पुरमे (तिरुवाय्-5-15)

74 अन्नाळ् नी तन्द वाक्कैयिन् वऴियुऴल्वेन् ( ,, 3-2-1)

76 आवि तिहैक्क ऐवर् कुमैक्कुं शिर्रिन्बम् पाविये नैप्पल नी काट्टि प्पडुप्पायो ( ,, 6-9-9)

ज्ञातिलङ्घनं कारयित्वा,—"[77]पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः। नष्टप्रज्ञः पापमेव पुनरारभते नरः ॥" इत्युक्तरीत्या अग्रेऽपि अपराधपरम्परासु प्रवर्तनपूर्वकं तत्फलतया "[78]क्षिपाम्यजस्रमशुभान्' इत्याद्युक्तरीत्या गर्भजन्मजरामरणनरकादिचक्रपरिवृत्तौ परिभ्रमय्य,—क्षुद्रसुखसाधन-राजस-तामसशास्त्रार्थैः "[79]यक्षरक्षांसि राजसाः। प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥" इत्युक्तरीत्या स्वेन साकमविशेषेण दीर्घशृङ्खलायां बन्धमुपेत्य भ्रमतां क्षेत्रज्ञानां चरणयोर्निपात्य,—तत्प्रत्नजुगुप्सावहक्षुद्रपुरुषार्थैः क्रिमीणामिव कृतार्थतामोहमुपजनय्य, योगप्रवृत्तानामपि क्षुद्रदेवतायोगेषु नामाद्यचेतनोपासनेषु वा प्रवृत्तिमुपजनय्य क्षुद्रफलैर्योगमवनतशिरस्कं (फलितं) कृत्वा,—आत्मप्रवणानामपि प्रकृतिसंसृष्टत्वप्रकृतिवियुक्तस्वरूपविषाद्वयेऽपि ब्रह्मदृष्ट्या वा स्वरूपतो वोपासने प्रवर्तनपूर्वं तादृशचतुर्विधोपासनफलभूताल्पास्वादप्रदानेन पुनरावृत्तिमापाद्य—ब्रह्मात्मकस्वात्मचिन्तनप्रवृत्तानां स्वात्मशरीरकपरमात्मचिन्तनपराणां चापि अन्तरायभूतेन आत्मानुभवेन वा, अष्टैश्वर्यसिद्धिभिर्वा, निर्दिष्टाभिषेकदिनस्य राजकुमारस्य कारायां दूरतः शुश्रूषणाय प्रसारितहस्तायाश्चेट्या विषये यथा (यदि) चक्षुःपातो भवेत्, तथा प्रारब्धकर्मफलभूतेषु देहेन्द्रियेषु, तदनुबन्धिपरिग्रहेषु, तन्मूलभोगेषु च आसक्तिजननेन वा अन्यपरतामापाद्य,—

इत्थं बहुभिर्मुखैर्भगवत्प्राप्तेर्विरोधी भवति।

द्वात्रिंशत्पदमितवापीलङ्घनोद्युक्तानां प्रथमपदे पतनस्य[एक]त्रिंशपदे पतनस्य चाविशेषवत् यस्मिन् कस्मिंश्चिदपि **पर्वणि अन्तराये** उपनते अयं **संसारं** तीर्णवान् न भवति । **कर्मयोगादिषु प्रवृत्तस्य** "[80]नेहाभिक्रमनाशोऽस्ति" इत्युक्तरीत्या कृता चितिः शिलाचितिरिति, यस्मिन् कस्मिंश्चिद्दिने **फलसिद्धिर्भवेदे**वेत्युक्तमपि **कल्पान्तर-मन्वन्तर-युगान्तर-जन्मान्तरादिषु** कस्मिन्निति निर्धारयितुमशक्यम् । **आनुकूल्येऽ**तिशयिते सत्यपि **वसिष्ठादीनामपि विलम्बं** पश्यामः । **प्रातिकूल्ये**ऽतिशयिते सत्यपि **वृत्रक्षत्रबन्धुप्रभृतीनां** झटिति **मोक्ष**सिद्धिं पश्यामः । अतो **विलम्बरहितमोक्षहेतवः सुकृतविशेषाः** केषां समीपे सन्तीति ज्ञातुमशक्यम् । **विलम्बहेतोर्निग्रहस्य कारण**भूता **दुष्कर्मविशेषाः** केषां समीपे सन्तीत्यपि ज्ञातुमशक्यम् ।

(ईदृशभगवन्निग्रहपरिहारसाधनम्)

इत्थम**निष्टपरम्परामूलभूतैराज्ञातिलंघनै**र्जनितस्य **भगवन्निग्रहविशेषरूपस्य प्रधानविरोधिनः** कर्तव्यं परिहारप्रकारं "[81]तस्य च वशीकरणं तच्छरणागतिरेव" इति **वशीकार्यपरम्परानिरूपण**प्रसङ्गे **श्रीभाष्यकारो**ऽनुजग्राह ।

(विरोधिवर्गानुसंधानस्थलस्य अनुसंधानप्रयोजनस्य च प्रदर्शनम्)

इमं **विरोधिवर्गं** सर्वं **रहस्यत्रये** विधीयमानानामर्थानां व्यवच्छेदशक्त्या **नमसोर्यकारोत्तरषष्ठीभ्याम्, सर्वपापशब्देन** चानुसंधाय **संसारे** [संतप्तसैकतरूपे] चरणसंतापेन पुरुषार्थहेतुभूतमार्गेषु त्वरितुं युक्तम् ॥

(अधिकारार्थसंग्राहकगाथा)

[1](गाथा) पुरुषार्थ एक इति स्थितः पुष्पपुत्नीनाथः, तत्पादौ प्राप्य कृपया एकीभूतो भक्तः, तेन स्वीक्रियमाण उपायः, अनुरूपं फलम्, अज्ञानसंपृक्तकर्मरूपदृढश्रृङ्खलेत्येतान् पञ्च (अर्थान्) जानानाः—तमः किमपि यथा न स्यात् तथा, मन्मनो यथा दृढं स्यात् तथोपदिष्टवन्तः ॥

(उपसंहारपद्यम्)

प्राप्यं ब्रह्म समस्तशेषि परमं प्राप्ताऽहमस्योचितः
प्राप्तिर्दायधनक्रमादिह मम प्राप्ता स्वतः सूरिवत् ।
हन्तैनामतिवृत्तवानहम् अहंमत्या विमत्याश्रयः
सेतुः संप्रति शेषिदम्पतिभरन्यासस्तु मे शिष्यते ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे अर्थपञ्चकाधिकारः चतुर्थः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

—o—o—

---

पोरुळोन्रेन निन्र पूमहणातन् अवनडि शेर्न्दु अरुळोन्रुमन्बन् अवन् कोळुपायम् अमैन्द पयन् मरुळोन्रिय विनैवल्विलङ्गेनविवैये-न्दरिवार इरुळोन्रिरावहै येन्मनम् तेर इयम्बिनरे ।

श्रीः

## ॥ तत्त्वत्रयाधिकारः पञ्चमः ॥

प्रकृत्यात्मभ्रान्तिर्गलति चिदचिल्लक्षणधिया
तथा जीवेशैक्यप्रभृतिकलहस्तद्विभजनात् ।
अतो भोक्ता भोग्यं तदुभयनियन्तेति निगमै-
र्विभक्तं नस्तत्त्वत्रयमुपदिशन्त्यक्षतधियः ॥

(तत्त्वत्रयनिरूपणप्रयोजनम्)

संबन्धोऽर्थपञ्चकं चेति षट्स्वर्थेषु ज्ञातव्येषु सत्सु एतदक-देशभूतं तत्त्वत्रयम्, मुमुक्षुणा विशिष्य ज्ञातव्यमित्युपदिशता-माचार्याणामस्य संप्रदायस्य किं मूलमिति चेत्—अस्य मूलं प्रकृत्यात्मभ्रम-स्वतन्त्रात्मभ्रम - तन्निदानानीश्वरवादरुचिरूपाणां महाविरोधिनां प्रथमतो निरसनस्य प्राप्तत्वमेव। एतदभिप्रेत्यैव भोक्तृभोग्यनियन्तृरूपेण शास्त्रेषु तत्त्वविवेकः क्रियते ।

(तत्त्वत्रयस्वभावनिरूपणम्)

एतन्मध्ये "अचेतना परार्था च नित्या सततविक्रिया । त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेः रूपमुच्यते ॥", "[2]अनादिर्भगवान् कालो नान्तो-ऽस्य द्विज विद्यते", "[3]कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः", "[4]ज्ञानानन्दमया लोकाः", "[5]कालं स पचते तत्र

न कालस्तत्र वै प्रभुः ।" इत्यादिषु त्रिगुणकालशुद्धसत्त्वरूपाणां त्रिविधाचेतनानां स्वभावोऽभ्यधायि । "[6]पुमान्न देवो न नरः" "[7]नायं देवो न मर्त्यो वा", "[8]क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते", यद्वै पश्यन्ति सूरयः" इत्यादिभिस्त्रिविधजीवानां प्रकारो व्यवेचि । "[10]सर्वज्ञः सर्वदृक् सर्वशक्तिज्ञानबलर्द्धिमान् । क्रमतन्द्रीभय-क्रोधकामादिभिरसंयुतः ॥" इत्यादिभिरीश्वरस्वभाव उपदिष्टोऽस्ति ।

(तत्त्वत्रयस्थितिप्रतिपादकपूर्वाचार्यवचनव्याख्या)

अस्येशेशितव्यरूपस्य तत्त्वत्रयस्यावस्थितिप्रकारम्, "[11]स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्" इति संगृह्यानुजगृहुः । **त्रिविधचेतनेत्युच्यन्ते बद्धा मुक्ता नित्याश्च ।** **त्रिविधाचेतनेति निर्दिश्यन्ते त्रिगुणद्रव्य-काल-शुद्धसत्त्वद्रव्याणि । स्वरूपं नाम स्वासाधारणधर्मेण निरूपितं धर्मि । स्थितिर्नाम-एतस्य कालान्तरानुवृत्तिः ।** इयं **नित्यवस्तूनां नित्या** वर्तते ; **अनित्यवस्तूनामीश्वरसंकल्पानुसारेणा**धिककाला न्यूनकाला च वर्तते । अत्र **प्रवृत्तिर्नाम प्रवृत्तिनिवृत्तिरूपो व्यापारः** । इदं सर्वं प्रतिवस्तु प्रमाणप्रतिनियतं वर्तते । प्रमाणानि वस्तुप्रदर्शनकाले तत्तद्वस्तूनां स्वरूपं **स्वरूपनिरूपकधर्मान् निरूपितस्वरूपविशेषणानि व्यापारांश्च** प्रदर्शयन्ति । तस्य तत्र स्वरूपं स्वरूपनिरूपकधर्मैर्विशिष्टमेव प्रदर्शयन्ति । स्वरूपस्य प्रतिपादनावसरे तत्तद्धर्मापुरस्कारेण प्रतिपादनमशक्यम् । तान् परिहृत्य दर्शने शशविषाणतुल्यं भवति ।

(जीवस्वरूपादिनिरूपणम्)

अतो जीवस्वरूपं ज्ञानत्वानन्दत्वामलत्वाणुत्वादिभिर्निरूपकधर्मैर्निरूप्य ज्ञानमानन्दोऽमलमणु इत्येवंप्रकारः व्यवहर्तव्यं भवति। इदं जीवतत्त्वं सर्वेश्वरस्य शेषभूतमेव वर्तते इति, तस्यैव निरुपाधिकशेषमिति चायोगान्ययोगव्यवच्छेदाभ्यां प्रतिपन्नस्य शेषत्वस्य सम्बन्धरूपत्वात् सम्बन्धिस्वरूपनिरूपणमन्तरा ज्ञातुमशक्यत्वात् जीवस्येदं निरूपितस्वरूपविशेषणमिति सुवचम्। अणुत्वे सति चेतनत्वमिव स्वतःशेषत्वे सति चेतनत्वमपि जीवलक्षणं भवितुमर्हतीति हेतोरिदं शेषत्वं जीवस्य स्वरूपनिरूपकमित्यपि कथनार्हम्। इत्थं विभुत्वे सति चेतनत्वम्, अनन्याधीनत्वनिरुपाधिकशेषित्वादीनि चेश्वरलक्षणानि। जीवेश्वररूपस्यात्मवर्गस्य सर्वस्यापि साधारणं लक्षणं चेतनत्वं प्रत्यक्त्वं च। चेतनत्वं नाम—ज्ञानाश्रयत्वम्। प्रत्यक्त्वं नाम—स्वस्मै स्वयंप्रकाशमानत्वम। तदा धर्मभूतज्ञाननैरपेक्ष्येण "अहम्" इति प्रकाशते। इत्थं चेतनत्वादीनामीश्वरजीवसाधारणत्वादीश्वराद् व्यावृत्तिं प्रत्याययितुं जीवलक्षणे स्वतश्शेषत्वादीनि निवेश्यन्ते। प्रथमाक्षरे चतुर्थीप्रतिपन्नस्य तादर्थ्यस्योपाध्यभावात् सर्वरक्षकस्य श्रियः पत्युर्जीवात्मा निरुपाधिकशेष एव भवतीत्येवं यावत्स्वरूपं संबन्धस्य प्रतिपादनमयोगव्यवच्छेदः। मध्यमाक्षरे अवधारणसामर्थ्येन "तस्यैव निरुपाधिकशेषः; अन्यस्य कस्यापि निरुपाधिकशेषो न" इति प्रतिपादनमन्ययोगव्यवच्छेदः। अस्य शेषत्वस्य भागवतशेषत्वपर्यन्ततयाऽभिवृद्धेः प्रकारमग्रे वक्ष्यामः।

एवंभूतानां चेतनानां प्रवृत्तिर्नाम—पराधीनं परार्थं च कर्तृत्वं भोक्तृत्वं च। ईश्वरेण स्वस्य भोक्तृत्वार्थमेषां कर्तृत्वभोक्तृत्वयोरुत्पादनादिमे परार्थे।

(त्रिविधचेतनानां प्रत्येकं स्वरूपस्थितिप्रवृत्तिषु भेदनिरूपणम्)

बद्धचेतनानामितरेभ्यो भेदः अविद्याकर्मवासनारुचिप्रकृतिसंबन्धयुक्तत्वम्। एषामन्योन्यं वर्तमानो ज्ञानसुखादिभेदो ब्रह्मादिस्तम्बपर्यन्तेषु विभागेषु द्रष्टव्यः। इमे बद्धचेतनाः स्वस्यस्वस्य कर्मानुरूपमीश्वरेणार्पितानि शरीराणि धर्मिस्वरूपेण धर्मभूतज्ञानेन च धारयन्ति। धर्मिनिबन्धनं धारणं शरीरसत्तायाः प्रयोजकं भवति। जाग्रदाद्यवस्थायां धर्मभूतज्ञानेन संपद्यमानं शरीरधारणं पुरुषार्थतदुपायानुष्ठानानाम्, कृतोपायस्य परमैकान्तिनो भगवदनुभवकैङ्कर्याणां चोपयुक्तं भवति। पापकृतामिदं शरीरधारणं विपरीतफलस्य हेतुर्भवति। इमे जीवाः इमानि शरीराणि त्यजेयुश्चेत्—एषां सङ्घातो विशीर्यत एव। शरीरोपादानभूतानि द्रव्याणि ईश्वरशरीररूपेण तिष्ठन्ति।

बद्धचेतनानामितरेभ्यः स्थितिभेदः संसारबन्धस्य यावन्मोक्षमनुवृत्तिः। प्रवृत्तिभेदः पुण्यपापानुभयरूपास्त्रिविधप्रवृत्तयः।

मुक्तानामितरेभ्यो भेदः प्रतिबन्धकनिवृत्त्याऽऽविर्भूतस्वरूपत्वम्। स्थितिभेदः पूर्वावधिमत आविर्भावस्योत्तरावधिराहित्येनावस्थानम्। एषामन्योन्यं स्थितिभेदः आविर्भावे पूर्वभावपरभावकृते पूर्वावधेराधिक्यन्यूनत्वे। प्रवृत्तिभेदोऽनादिकालप्रहीणप्रतिलब्धपरिपूर्णभगवदनुभवजनितप्रीतिकारित-यथाभिमत-कैङ्कर्यविशेषाः।

नित्यानामितरेभ्यो भेदोऽनाद्याविर्भूतस्वरूपत्वे सति पारतन्त्र्यम् । एषामितरेभ्यः स्थितिभेदोऽनाद्यनुवृत्तः शेषितत्त्वानुभवः । अयं नित्यानां सर्वेषामविशिष्ट इति एषामन्योन्यं स्थितौ न वैषम्यम् । प्रवृत्तिभेदोऽनादिप्रवाहनित्याः कैङ्कर्यविशेषाः ।

(मुक्तानां नित्यानां च सर्वविधकैङ्कर्यसिद्धेरुपपादनम्)

अनन्तगरुडादीनामधिकारविशेषेषु तदुचितकैङ्कर्येषु च व्यवस्थितेषु सत्सु नित्यानां मुक्तानां च सर्वविधकैङ्कर्यसिद्धिर्भवतीत्ययमर्थः कथं घटेतेति चेत्—(1)स्वाम्यभिप्रायानुसारेण स्वस्याभिमतेषु कैङ्कर्येषु दुर्लभस्य कस्याप्यभावात्, (2)एकैककार्यत्वेन व्यवस्थितेषु कैङ्कर्येषु स्वानुष्ठेयत्वाभिसन्धेः परेष्वनुदयात्, (3)येन केनाप्यनुष्ठीयमानस्यापि स्वामिप्रियत्वेन तदुचितकैङ्कर्याणां सर्वप्रियत्वेन कैङ्कर्यफले प्रीतौ विशेषाभावाच्च सर्वेषां सर्वविधकैङ्कर्यसिद्धिर्भवतीत्यर्थे न कश्चिद्विरोधः ॥

(धर्मभूतज्ञाननिरूपणम्)

एषामात्मनां सर्वेषां धर्मिस्वरूपवत् धर्मभूतज्ञानेऽपि द्रव्यात्मके सति तत्स्वरूपस्यात्र पार्थक्येनानुपादानं चेतनशब्दोपात्ते विशिष्टे विशेषणतयाऽन्तर्भावनिबन्धनम् ।

इदं धर्मभूतज्ञानं विषयप्रकाशनदशायां स्वाश्रयाय स्वयम्प्रकाशं भवति । इदमीश्वरस्य नित्यानां च नित्यविभु; अन्येषां संसारावस्थायां कर्मानुरूपबहुविधसंकोचविकासयुक्तं मुक्तावस्थायामेकविकासेन परस्तात् यावत्कालं विभु भवति ।

अस्य प्रवृत्तिस्तावत् विषयाणां प्रकाशनम्, प्रयत्नावस्थायां शरीरादीनां प्रेरणम्, बद्धदशायां संकोचविकासौ, आनुकूल्यप्रातिकूल्यप्रकाशमुखेन भोगरूपावस्थावत्त्वं च। भोगो नाम—स्वस्यानुकूलतया प्रतिकूलतया वा कस्यचिदर्थस्यानुभवनम्।

ईश्वरविभूतिभूतानां सर्वेषां वस्तूनां आनुकूल्ये स्वाभाविके सति, एवमीश्वरे नित्येषु मुक्तेषु चानुभवत्सु सत्सु, संसारिणां कालभेदेन पुरुषभेदेन देशभेदेन च अल्पानुकूल्यं प्रातिकूल्यमौदासीन्यमित्येते विभागाः सर्वेऽप्येषां वस्तूनां न स्वभावसिद्धाः भवन्ति; किंतु एतदीयकर्मानुसारेण सत्यसंकल्पेनेश्वरेण एषां विषये कृताः फलदानप्रकाराः।

(कर्मफलानुभवौपयिकयोग्यतानिरूपणम्)

एतत्कर्मफलानुभवविषये बद्धानां स्वरूपयोग्यता सहकारियोग्यता च स्तः। स्वरूपयोग्यता परतन्त्रचेतनत्वम्। सहकारियोग्यता सापराधत्वम्। नित्यानां मुक्तानां च परतन्त्रचेतनत्वात् स्वरूपयोग्यतासत्त्वेऽपि ईश्वरानभिमतविपरीतानुष्ठानाभावात् सहकारियोग्यता नास्ति। ईश्वरस्य सर्वप्रशासितृतयाऽनन्यशासनीयतया चावस्थानात् परतन्त्रचेतनत्वरूपा स्वरूपयोग्यताऽपि नास्ति; स्वतन्त्राज्ञातिलङ्घनरूपा सहकारियोग्यता च नास्ति।

(धर्मधर्मिभूतज्ञानयोरन्तरनिरूपणम्)

जीवेश्वररूपाणामात्मनां सर्वेषामपि स्वरूपं स्वस्मै स्वयंप्रकाशम्। बद्धानामप्यस्य धर्मिस्वरूपप्रकाशस्य न जात्वपि संकोचविकासौ भवतः। सर्वात्मनामपि धर्मभूतज्ञानं विषय-

नित्यानामितरेभ्यो भेदोऽनाद्याविर्भूतस्वरूपत्वे सति पारतन्त्र्यम्। एषामितरेभ्यः स्थितिभेदोऽनाद्यनुवृत्तः शेषितत्त्वानुभवः। अयं नित्यानां सर्वेषामविशिष्ट इति एषामन्योन्यं स्थितौ न वैषम्यम्। प्रवृत्तिभेदोऽनादिप्रवाहनित्याः कैङ्कर्यविशेषाः।

(मुक्तानां नित्यानां च सर्वविधकैङ्कर्यसिद्धेरुपपादनम्)

अनन्तगरुडादीनामधिकारविशेषेषु तदुचितकैङ्कर्येषु च व्यवस्थितेषु सत्सु नित्यानां मुक्तानां च सर्वविधकैङ्कर्यसिद्धिर्भवतीत्ययमर्थः कथं घटेतेति चेत्—(1)स्वाम्यभिप्रायानुसारेण स्वस्याभिमतेषु कैङ्कर्येषु दुर्लभस्य कस्याप्यभावात्, (2)एकैककार्यत्वेन व्यवस्थितेषु कैङ्कर्येषु स्वानुष्ठेयत्वाभिसन्धेः परेष्वनुदयात्, (3)येन केनाप्यनुष्ठीयमानस्यापि स्वामिप्रियत्वेन तदुचितकैङ्कर्याणां सर्वप्रियत्वेन कैङ्कर्यफले प्रीतौ विशेषाभावाच्च सर्वेषां सर्वविधकैङ्कर्यसिद्धिर्भवतीत्यर्थे न कश्चिद्विरोधः॥

(धर्मभूतज्ञाननिरूपणम्)

एषामात्मनां सर्वेषां धर्मिस्वरूपवत् धर्मभूतज्ञानेऽपि द्रव्यात्मके सति तत्स्वरूपस्यात्र पार्थक्येनानुपादानं चेतनशब्दोपात्ते विशिष्टे विशेषणतयाऽन्तर्भावनिबन्धनम्।

इदं धर्मभूतज्ञानं विषयप्रकाशनदशायां स्वाश्रयाय स्वयम्प्रकाशं भवति। इदमीश्वरस्य नित्यानां च नित्यविभु; अन्येषां संसारावस्थायां कर्मानुरूपबहुविधसंकोचविकासयुक्तं मुक्तावस्थायामेकविकासेन परस्तात् यावत्कालं विभु भवति।

अस्य प्रवृत्तिस्तावत् विषयाणां प्रकाशनम्, प्रयत्नावस्थायां शरीरादीनां प्रेरणम्, बद्धदशायां संकोचविकासौ, आनुकूल्यप्रातिकूल्यप्रकाशमुखेन भोगरूपावस्थावत्त्वं च। भोगो नाम—स्वस्यानुकूलतया प्रतिकूलतया वा कस्यचिदर्थस्यानुभवनम्।

ईश्वरविभूतिभूतानां सर्वेषां वस्तूनां आनुकूल्ये स्वाभाविके सति, एवमीश्वरे नित्येषु मुक्तेषु चानुभवत्सु सत्सु, संसारिणां कालभेदेन पुरुषभेदेन देशभेदेन च अल्पानुकूल्यं प्रातिकूल्यमौदासीन्यमित्येते विभागाः सर्वेऽप्येषां वस्तूनां न स्वभावसिद्धाः भवन्ति; किंतु एतदीयकर्मानुसारेण सत्यसंकल्पेनेश्वरेण एषां विषये कृताः फलदानप्रकाराः।

(कर्मफलानुभवौपयिकयोग्यतानिरूपणम्)

एतत्कर्मफलानुभवविषये बद्धानां स्वरूपयोग्यता सहकारियोग्यता च स्तः। स्वरूपयोग्यता परतन्त्रचेतनत्वम्। सहकारियोग्यता सापराधत्वम्। नित्यानां मुक्तानां च परतन्त्रचेतनत्वात् स्वरूपयोग्यतासत्त्वेऽपि ईश्वरानभिमतविपरीतानुष्ठानाभावात् सहकारियोग्यता नास्ति। ईश्वरस्य सर्वप्रशासितृतयाऽनन्यशासनीयतया चावस्थानात् परतन्त्रचेतनत्वरूपा स्वरूपयोग्यताऽपि नास्ति; स्वतन्त्राज्ञातिलङ्घनरूपा सहकारियोग्यता च नास्ति।

(धर्मधर्मिभूतज्ञानयोरन्तरनिरूपणम्)

जीवेश्वररूपाणामात्मनां सर्वेषामपि स्वरूपं स्वस्मै स्वयंप्रकाशम्। बद्धानामप्यस्य धर्मिस्वरूपप्रकाशस्य न जात्वपि संकोचविकासौ भवतः। सर्वात्मनामपि धर्मभूतज्ञानं विषय-

प्रकाशनवेलायां स्वाश्रयाय स्वयंप्रकाशं भवति। ज्ञानत्वं स्वयंप्रकाशत्वं च धर्मधर्मिणोः साधारणम्। धर्मभूतज्ञानस्य विषयित्वं विशेषः। धर्मिण आत्मस्वरूपस्य प्रत्यक्त्वं विशेषः। ज्ञानत्वं नाम कस्यचित् प्रकाशकत्वम्। तच्च स्वस्य वा परस्य वा यस्य कस्यचिद् व्यवहारानुगुण्यसंपादनम्। स्वयंप्रकाशत्वं नाम—स्वविषयीकारिज्ञानान्तरनैरपेक्ष्येण स्वयमेव प्रकाशमानत्वम्। धर्मभूतज्ञानस्य विषयित्वं नाम स्वव्यतिरिक्तार्थप्रकाशकत्वम्। आत्मनां प्रत्यक्त्वं नाम—स्वस्मै भासमानत्वम्। तच्च स्वप्रकाशं प्रति स्वयं फलित्वेनावस्थानम्। यस्य कस्यचिद्वस्तुनः प्रकाशस्य फलीति सामान्याकार एव स्वप्रकाशस्य स्वयं फलीति विशेष्यमाणः प्रत्यक्त्वं भवति। एतद्विशेषशून्यस्य वस्तुन इदं सामान्यमेतद्द्वयात्मं चेतनत्वं च न स्तः।

इमौ धर्मधर्मिणौ द्वावपि स्वयंप्रकाशौ सन्तावपि नित्यत्वादिधर्मविशेषविशिष्टरूपैर्ज्ञानान्तरवेद्यावपि भवतः। स्वकीयधर्मभूतज्ञानस्य स्वं प्रति ज्ञानान्तरवेद्यत्वसमये प्रसरणभेदमात्राद् ज्ञानान्तरव्यपदेशः॥

(त्रिविधाचेतननिरूपणम्)

त्रिविधान्यप्यचेतनानि परान् प्रत्येव प्रकाशमानानि भवन्ति। अचेतनत्वं नाम—ज्ञानाश्रयत्वाभावः। परान् प्रत्येव प्रकाशमानत्वं नाम—स्वप्रकाशं प्रति स्वस्य फलित्वाभावः। इदमुभयं धर्मभूतज्ञानादीनामपि तुल्यम्। त्रिविधाचेतनत्वेनोपात्तेषु प्रकृतिकालौ जडौ॥

शुद्धसत्त्वद्रव्यमपि जडमिति केचिदाहुः। जडत्वं नाम—स्वयंप्रकाशत्वाभावः। भगवच्छास्त्रादिपरामर्शिनस्तु ज्ञानात्मकत्वस्य शास्त्रसिद्धत्वात् शुद्धसत्त्वद्रव्यं स्वयंप्रकाशमित्याहुः।

(शुद्धसत्त्वस्वयंप्रकाशत्वसमर्थनम्)

इत्थं **स्वयंप्रकाशत्वे**, संसारिणां शास्त्रवेद्यत्वमन्तरैव स्वयं कुतो न प्रकाशत इति चेत्—**सर्वात्मनां स्वरूपस्य धर्मभूतज्ञानस्य** च स्वयंप्रकाशत्वेऽपि **स्वरूपं** स्वस्यैव स्वयंप्रकाशं सत् परेषां **ज्ञानान्तरवेद्यं** यथा भवति, **धर्मभूतज्ञानं स्वाश्रयस्यैव स्वयंप्रकाशं** सत् इतरेषां स्वयंप्रकाशं यथा न भवति, तथाऽस्यापि नियतविषयस्वयंप्रकाशत्वे न विरोधः। "[12]यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः। तं प्रणम्य हरिं शास्त्रं न्यायतत्त्वं प्रचक्ष्महे॥" इत्युक्तरीत्या **धर्मभूतज्ञानेन सर्वं साक्षात्कुर्वन्तमीश्वरं** प्रति **शुद्धसत्त्वद्रव्यस्य स्वयंप्रकाशता** कथमिति चेत्—एतदीये **धर्मभूतज्ञाने दिव्यात्मस्वरूपप्रभृतिकं सर्वं** विषयीकुर्वाणे सत्यपि इदं **दिव्यात्मस्वरूपं** यथा **स्वयंप्रकाशं** भवति, तथेदमपि स्वयंप्रकाशं भवितुमर्हति। अयं प्रकारो नित्यविषयेऽपि तुल्ययः। विषयप्रकाशनकाले एव धर्मभूतज्ञानं स्वाश्रयं प्रत्येव यथा स्वयंप्रकाशं भवति, तथा मुक्तान् प्रति तस्यामवस्थायामस्यापि स्वयंप्रकाशत्वे न विरोधः। **धर्मभूतज्ञानस्य स्वात्मप्रकाशनशक्तिर्विषयप्रकाशाभावकाले कर्मविशेषैर्यथा प्रतिबद्धा** भवति, तथा **शुद्धसत्त्वद्रव्यस्यापि** स्वात्मप्रकाशनशक्तिरपि **बद्धदशायां प्रतिबद्धेति** शुद्धसत्त्वं बद्धान् प्रति न प्रकाशते।

धियः स्वयंप्रकाशत्वं मुक्तौ स्वाभाविकं यथा ।
बद्धे कदाचित्संरुद्धं तथाऽत्रापि नियम्यते ॥

इयती अवस्थान्तरापत्तिर्विकारिद्रव्यस्य न विरुध्यते । अतः प्रमाणप्रतिपन्नार्थस्य युक्तिविरोधो वक्तुमशक्यः । एवमनङ्गीकृत्योपचारेण निर्वाहे चिन्त्यमाने, आत्मस्वरूपविषयेऽपि ज्ञानादिशब्दानामुपचारेणान्यपर्यकरणमापद्येत । स्वयंप्रकाशस्य रूपरसादिगुणाः, तन्निबन्धनः पृथिव्यादिविभागः, परिणामादयश्च कथं घटन्त इति चोद्यमपि, धर्मभूतज्ञानधर्मिज्ञानयोर्विद्यमानं वैषम्यं प्रतिबन्दीकृत्य प्रमाणबलेन परिहृतम् । इत्थं स्वयंप्रकाशस्य शुद्धसत्त्वद्रव्यस्य ज्ञातृत्वाभावात् त्रिविधाचेतनेति कोडीकारः ॥

(त्रिगुणद्रव्यस्वरूपस्थितिप्रवृत्तिभेदनिरूपणम्)

एषु त्रिगुणद्रव्यस्य स्वरूपभेदो गुणत्रयाश्रयत्वम् । सततपरिणामशीलस्यास्य द्रव्यस्य सत्त्वरजस्तमसामन्योन्यं साम्यापत्तौ महाप्रलयः ; वैषम्यावस्थायां सृष्टिस्थिती । गुणवैषम्यवति प्रदेशे महदादयो विकाराः । अत्राविकृतं प्रदेशं विकृतं प्रदेशं च प्रकृतिमहदहंकारतन्मात्रभूतेन्द्रियाणीति चतुर्विंशतितत्त्वात्मना शास्त्राणि विभज्य प्रतिपादयन्ति । कैश्चिद्विवक्षाविशेषैः कचित्स्थलेषु तत्त्वानि अधिकतया न्यूनतया च प्रतिपाद्यन्ते । एषु तत्त्वेषु अवान्तरविभागाः, तदभिमानिदेवताश्च तत्तदुपासनाधिकारिभिर्वेदितव्याः । आत्मनस्तेभ्यो व्यावृत्तिज्ञानमत्रास्माकं प्रधानम् ।

एषां सर्वेषां सर्वेश्वरेऽस्त्रभूषणादिरूपेणावस्थितेः प्रकारः—

[1](गाथा) पुरुषं मणिवरतया, अविनश्यन्तीं मूलप्रकृतिं (श्रीवत्स) लक्ष्मतया, महान्तं गदात्वेन, ज्ञानमज्ञानञ्च खड्गतया कोशतया, (सात्त्विकतामस) अहंकारौ शार्ङ्गशङ्खतया मनः चक्रतया हृषीकपञ्चके द्वे शरतया द्वे भूतमाले वनमालात्वेन (धारयन्) गरुडशरीरभूतानां वेदानामर्थभूतः कृष्णः करिगिरेरुपरि स्थित्वा सर्वं रक्षति—

इत्येवंविवेकेन ज्ञातुं युज्यते ।

चतुर्विंशतेस्तत्त्वानामन्योन्यं स्वरूपभेदस्तत्तल्लक्षणैः सिद्धः । तेषु कार्यभूतानां त्रयोविंशतेस्तत्त्वानां एतदारब्धानां च स्थितावुपनमन्त्यौ आधिक्यन्यूनते पुराणप्रसिद्धरीत्या द्रष्टव्ये । "[13]स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणम्", "[14]तमसः परमो धाता", "[15]अप्राकृतं सुरैर्वन्द्यम्" इत्यादिभिस्तमस उपरिष्टाद्देशविशेषस्य सिद्धेः "[16]अनन्तस्य न तस्यान्तः संख्यानं वाऽपि विद्यते । तदनन्तमसंख्यातप्रमाणं चापि वै यतः" इत्यादीनि नित्यविभूत्यनवच्छिन्नप्रदेशमादाय मूलप्रकृतेरानन्त्यं प्रतिपादयन्ति ।

---

1 पुरुषो मणिवरोऽस्य भवति, प्रकृतिः श्रीवत्सो भवतीत्येवं गरुडतनुभूतवेदप्रतिपाद्यभूतः कृष्ण इति वाऽनुवदितव्यम् ।

1 पुरुडन् मणिवरमाहप्पोत्रामूलप् प्रकृतिमरुवाहमान् तण्डाह, तेरुल्मारुल्वाणमेवाह वाङ्गारङ्गल् शार्ङ्ग शङ्गाह मनम् तिगिरियाह,
इरुडीकङ्गल् ईरैन्दुम् शरङ्गलाह इरुभूतमालै वनमालैयाह,
गरुडनुरुवामरैयिन् पोरुलाम् कण्णन्
करिगिरिमेल् निन्ननैत्तुं काक्किन्राने ।

त्रिगुणद्रव्यस्य प्रवृत्तिभेदः-बद्धचेतनानां भोगापवर्गार्थमीश्वरस्य लीलारसार्थं च समविषमपरिणामसन्ततिं प्राप्य देहेन्द्रियादिरूपेण तत्तद्व्यापाराणामपि करणम्। इदं रजस्तमोद्वारा बद्धानां तत्त्वयाथात्म्यच्छादनपूर्वं विपरीतज्ञानं जनयति भोगार्थम्। इदमेवापवर्गार्थं सत्त्वविवृद्ध्या तत्वानि यथावत् प्रकाशयति। इदं सर्वमीश्वरस्य लीलारसावहं भवति।

(शुद्धसत्त्वस्य स्वरूपस्थितिप्रवृत्तिभेदनिरूपणम्)

शुद्धसत्त्वस्य स्वरूपभेदो रजस्तमोगुणामिश्रसत्त्वगुणाश्रयत्वम्। अस्य स्थितिभेदो नित्येषु मण्टपगोपुरादिषु, ईश्वरस्य नित्यानां च विग्रहविशेषेषु नित्यो वर्तते। नित्यमुक्तेश्वराणामनित्येच्छासिद्धेषु विग्रहादिष्वनित्यो वर्तते। अस्य प्रवृत्तिभेदः एषामिच्छानुरोधिभिः परिणामादिभिः शेषिणो भोगोपकरणतया शेषभूतानां कैङ्कर्योपकरणतया चावस्थानम्।

(कालस्य स्वरूपस्थितिप्रवृत्तिभेदनिरूपणम्)

कालस्य स्वरूपभेदो जडत्वे सति विभुत्वम्। अस्य स्थितिः कालावच्छेदाभावान्नित्या भवति। प्रवृत्तिभेदः कलाकाष्ठादिविभागेन सृष्ट्यादीनामुपकरणतयाऽवस्थितिप्रकारे द्रष्टव्यः।

(द्रव्याणां नित्यत्वानित्यत्वव्यपदेशतात्पर्यम्)

इमानि द्रव्याणि सर्वाण्यपि स्वरूपेण नित्यानि भवन्ति। नामान्तरभजनार्हावस्थाविशेषविशिष्टतां पुरस्कृत्य केषांचिदनित्यतया व्यवहारः। विनष्टसजातीयानामवस्थान्तराणामग्रेऽपि अविच्छेदेनानुवृत्तेः प्रवाहनित्यत्वव्यवहारः॥

(सर्वेषामीश्वराधीनत्वनिरूपणम्)

निरुक्तसर्वपदार्थगतस्वरूपस्थितिप्रवृत्तिभेदानामीश्वराधीनत्वं नाम—ईश्वरसत्तामीश्वरेच्छां च विना एषां सत्ताद्यनर्हत्वम् । अतः समस्तवस्तूनां स्वभावसिद्धानुकूल्यमीश्वरेच्छायत्तम् । अत एव ईश्वरस्य नित्यानां मुक्तानां च सर्वमनुकूलं भवति; बद्धानां कर्मानुरूपं पुरुषभेदेन कालभेदेन चैतेषु प्रातिकूल्यमल्पानुकूल्यं च प्रवर्तते । एषां बद्धानामप्यात्मस्वरूपस्य सर्वदाऽऽनुकूल्यमीश्वरेच्छासिद्धम् । इत्थमनुकूलेनात्मस्वरूपेण सहैकत्वभ्रमात् कर्मवशाच्च किल हेयं शरीरं ज्ञानहीनानामनुकूलं भाति। एषां कर्मोपाधिकप्रातिकूल्यरूपेण मुमुक्षून् प्रति त्याज्यत्वम् ; स्वाभाविकानुकूल्यरूपेण मुक्तान् प्रति तेषामेवोपादेयत्वम् । अहंकारममकारयुक्तेन सता स्वार्थं स्वीक्रियमाणानि सर्वाणि प्रतिकूलानि भवन्ति । स्वरूपज्ञानोत्पत्त्युत्तरं स्वामिशेषमिति दर्शने सर्वमनुकूलं भवति । इममर्थं परिपूर्णब्रह्मानुभवाधिकारे विस्तरेण वक्ष्यामः ॥

(ईश्वरतत्त्वनिरूपणम्)

इत्थं स्वाधीनसर्वसत्तादिकस्य सत ईश्वरस्य स्वरूपं सत्यत्वादिभिः स्वरूपनिरूपकधर्मैः (युक्ततया) सत्यज्ञानानन्तानन्दामलरूपं भवति। इममर्थम् "[17]अनिर्वाप्यदीप! परिच्छेत्तुमशक्य !" "[18]कृत्स्न

---

नन्दा विळक्केयळत्तर्करियाय—पेरियतिरु-3-8-1

उणर्मुडुनलं— तिरुवाय्-1-1-2

ज्ञानानन्द:" "[19]अभिव्याप्य तदधिको(मुक्तादधिको)ज्ज्वल-ज्ञानानन्द" "[20]अमल:" इत्यादिभिर्दिव्यसूरयोऽनुसन्दधिरे । इतरे गुणाः दिव्यमङ्गलविग्रहादीनि चेश्वरस्य निरूपितस्वरूपविशेषणानि भवन्ति। एषु गुणेषु ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड् गुणाः परत्वोपयुक्ता भवन्ति । सौशील्यवात्सल्यादयः सौलभ्योपयुक्ता भवन्ति । इमे गुणाः सर्वेऽपि सर्वेष्वपि कालेषु स्वरूपाश्रिताः सन्ति । परव्यूहादिविभागेषु गुणनियमप्रतिपादकानि तु सर्वाण्यपि वचनानि, 'तत्तद्रूपानुसन्धानपराणां विषये सर्वेश्वरेणाविष्क्रियमाणास्ते गुणाः' इत्येतन्मात्रप्रतिपादनार्थानि । प्रत्यौपनिषदविद्याविशेषम् अनुसन्धेया गुणविशेषा यथा नियताः, तथा भगवच्छास्त्रोक्तरूपविशेषानुसंधानस्यापि गुणविशेषा नियताः ॥

तत्र पररूपे ज्ञानादयः षडपि गुणा वेद्याः । व्यूहाश्चत्वार इति त्रय इति च शास्त्राणि प्रतिपादयन्ति । चतुर्षु व्यूहेषु सत्सु, व्यूहवासुदेवरूपे पररूपादनुसन्धेयगुणभेदाभावात् त्रिव्यूहवादः प्रवर्तते । इमं पक्षं "[21]गुणैः षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुग युगलैर्हि त्रिभिरभु" इति श्लोके संजगृहुः । एषु परव्यूहेषु गुणक्रियाविभागाः—

"[22]षाड्गुण्याद्वासुदेवः पर इति स भवान् मुक्तभोग्यो बलाढ्यात्
बोधात् संकर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात ।

---

शङ्कन्दनिर्पैरिय शुडर्ज्ञानविम्बम् ,, 10-10-1
अमलं— अमलनादि-1

प्रद्युम्नः सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो
बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज ॥"

इति श्लोके समग्राहिषत । जाग्रदादिपदभेदगता विशेषाः सर्वेऽपि

"[23]जाग्रत्स्वप्नात्यलसतुरीयप्रायध्यातृक्रमवदुपास्यः ।
स्वामिन् तत्तद्गुणपरिबर्हश्चातुर्व्यूहं वहसि चतुर्धा ॥"

इति संगृहीता अभवन् । केशवादीनि द्वादश रूपाण्यपि व्यूहान्तराणि।

विभवा नाम—पद्मनाभादीनि त्रिंशत्संख्यातःकिंचिदधिक-संख्यायुक्तानि रूपाणि । एषु मत्स्यकूर्मादयोऽवताराः प्रयोजनविशेषेण केनापि विशिष्य परिगणिताः । एषु विभवेषु ईश्वरस्तत्तत्कार्यविशेषानु-गुण्येनापेक्षितानां गुणानां यथाच्छन्दं प्रच्छादनं प्रकाशनं च करोति। एषु अवान्तरभेदाः "[24]कृष्णरूपाण्यसंख्यानि" इत्याद्युक्तरीत्याऽनन्ताः । इत्थमेव विभवान्तराण्यपि द्रष्टव्यानि । कांश्चिज्जीवान् विग्रहविशेषेण शक्तिविशेषेण चाधिष्ठायातिशयितकार्याणां निर्वहणमपि विभवभेदः ।

परव्यूहादिरूपाणामेव आश्रितार्थं तदपेक्षितप्रकारेण "[25]बिम्बा-कृत्यात्मना बिम्बे समागत्यावतिष्ठते" इत्युक्तरीत्यावस्थितिरर्चावतारः ।

सर्वेषां हृदयेषु सूक्ष्मभूतरूपविशेषविशिष्टतयाऽवस्थान-मन्तर्याम्यवतारः । इदं सर्वान्तर्यामि दिव्यात्मस्वरूपमनुसन्धि-त्सूनां द्वारमिति "[26]अष्टाङ्गयोगसिद्धानां हृद्यागनिरतात्मनाम् । योगिनामधिकारः स्यादेकस्मिन् हृदयेशये ॥" इत्यादिषु प्रतिपादि-तमिति अन्तर्यामिरूपमित्युक्तम् । इत्थमवतररूपविधाः सर्वा अपि

शुद्धसत्त्वद्रव्यमय्यः कर्मतत्फलसंबन्धशून्याः प्रवर्तन्ते इत्यतः शुद्धसृष्टित्वेन व्यपदिश्यन्ते ।

(अवताररहस्यनिरूपणम्)

इमेऽवताराः सर्वेऽपि सत्या इति, एवमीश्वरस्य ज्ञानादि-संकोचो नास्तीति, इमे विग्रहाः शुद्धसत्त्वमया इति, एषा-मीश्वरेच्छैव कारणमिति, धर्मरक्षणार्थकाल एव काल इति, साधुपरित्राणादीन्येव प्रयोजनानीति इमान् अर्थान् विशदं विज्ञायानु-सन्दधानानामेकजन्मन्येव स्वाधिकारानुगुणसमीहितोपायपूर्त्या जन्मान्त-रानुभवमन्तरैव मुक्तीभाव इति च, "[27]बहूनि मे व्यतीतानि" इत्यारभ्य पञ्चभिः श्लोकैः गीताचार्योऽनुजग्राह । इदं स्वतन्त्र-प्रपत्तिनिष्ठस्य शरण्यगुणविशेषज्ञानमुखेनोपायानुष्ठानक्षणे महा-विश्वासादीनि स्थिरीकुर्वत् उपकारकं भवति । एवमेवार्चावतारोऽपि अनायासकरो मोक्षं ददातीत्येतमर्थं "[28]सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् । कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥ तामर्चयेत् तां प्रणमेत् तां यजेत् तां विचिन्तयेत् । विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥" इति भगवान् श्रीशौनकोऽनुजग्राह । दिव्यसूरयोऽपीदमवताररहस्यमर्चावतारवैलक्षण्यं च प्राचुर्येणानु-सन्धाय एतन्मूलबलत्वेन परं परत्वं पश्यन्तः स्थिताः ।

एवम्भूतेनेश्वरेण स्वानन्दपरीवाहतया क्रियमाणा व्यापाराः सकलजगत्सृष्टिस्थितिसंहारमोक्षप्रदत्वादयः ॥

## (लक्ष्मीतत्त्वनिरूपणम्।)

अयमीश्वरः, "[29]नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी" इत्याद्युक्तरीत्या **सर्वावस्थासु सपत्नीक** एव वर्तत इत्ययमर्थः, "[30]तत्त्वेन यः" "[31]माता पिता" इति श्लोकयो**रुपकारविशेषात्** (रातिशयात्) **सादरं विशिष्य** संकीर्तितयोः **पराशरपराङ्कुशयोः प्रबन्धेषु विशदं ज्ञातव्यः**। अत्र **दण्डधरत्वं** पुरुषकारत्वादयश्च सर्वेश्वरस्य लक्ष्म्याश्च भागतया **विभक्ताः व्यापाराः**। **"उपदिश्यमानधर्माधारादतिदिश्यमानधर्माधारस्य विशेषः स्वतःप्राप्तः"** इति मध्यस्थोक्तेरपि एवंभूत**विभाग**निबन्धनवै**षम्ये** तात्पर्यम्। इदं "[32]युवत्वादौ तुल्येऽपि" इति श्लोके **निर्णीतम्**। "[33]स्वामिनः स्थितिः(तत्त्वं)ज्ञातुमशक्या" इति दिव्यसूरिभि**रनुसंहिते** विषये कश्चिदपि **वृथानिर्बन्धो** न युज्यते। "[34]कृशान् अर्थांस्ततः केचिदकृशांस्तत्र कुर्वते" इत्युक्तरीत्या **तर्कपाण्डित्येनाभि**मतं सर्वं साधयितुं शक्ताः सन्तोऽपि हि वयं **प्रमाणशरणाः** प्रवर्तामहे। अत एतद् **ईश्वरतत्त्वमीशितव्यतत्त्वानि** च यथाप्रमाणमेव विशदं बोद्धुं साम्प्रतम्। अत्र सार्वज्ञ्यमपि नापेक्ष्यते। **अत्यन्तानुपयुक्ते**ष्विव **स्वल्पोपयुक्तेषु** अभिनिवेशोऽपि न कार्यः। **अपरिच्छेद्ये** समुद्रे नाविकाः मार्गप्रभृतिकमवश्यज्ञेयमर्थं यथा विशदं जानन्ति, तथाऽत्रैतावद्विवेचनमवश्यापेक्षितम्॥ अस्य प्रतिष्ठितत्वसिद्ध्यर्थमेतद्विस्तरा अभ्यस्यन्ते।

---

[1]ईरैनिलैयुणर्वरिदु— तिरुवाय्-1-3-6

(तत्त्वविभजनवैविध्यप्रयोजनम्)

इत्थं त्रीणि तत्त्वानीति विभज्य चिन्तयतामिव, सर्वविशिष्ट-वेषेणेश्वर एकं तत्त्वमित्यनुसंदधताम्, ईशेशितव्ये, आत्मानात्मानौ उपायोपेयौ इत्येवंरीत्याऽर्थद्वयं ज्ञातव्यतया विभजमानानाम्, रक्ष्यो रक्षको हेयमुपादेयं चेत्येवंप्रकारैरर्थचतुष्टयं ज्ञातव्यत्वेन संगृह्णानानाम्, पूर्वोक्तरीत्याऽर्थपञ्चकमिति अर्थषट्कमिति विवेचयताम्, रहस्यशास्त्रोक्त-रीत्या सप्तपदार्थीचिन्तादिकं कुर्वाणानां च तत्तज्ज्ञानानुष्ठानप्रतिष्ठारूपाः प्रयोजनविशेषा द्रष्टव्याः। "[85]शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम्। उपदेशात् हरिं बुध्वा विरमेत् सर्वकर्मसु॥" इत्युक्तिः, उपयुक्ततमं सारांशं तूर्णं श्रुत्वा—कृषिमन्तरैव भोक्तुमुपायमुपेयिवान् कृषिचिन्तां यथा त्यजति तथा—विस्तरेणाभ्यसनार्हशास्त्राभ्यासादिकर्मभ्य उपरतेन झटिति मोक्षोपाये प्रवर्तितव्यमित्येतत्परा।

उपयुक्तेषु वैशद्यं त्रिवर्गनिरपेक्षता।
करणत्रयसारूप्यमिति सौख्यरसायनम्॥

(अधिकारार्थसंग्राहकगाथा)

[1](गाथा) दृढप्रतिष्ठितं यथा स्यात् तथोपदिदिशुः—चिच्चाचिच्च स्वामी चेति विभिन्नानि विस्मयनीयानि तत्त्वानि त्रीणि, कर्ममयदेहे

---

नेरवियम्बिनर् चित्तमचित्तमिरैयुमेन
वेरुपडुम् वियन् तत्तुवमूत्रुम् विनैयुडम्बिल्
कूरुपडुम् कोडुमोहमुंतानिरैयाकुरिष्पुम्
मारनिनैन्दरुलाल् मरैनूल् तन्दवादियरे

भवन् क्रूरमोहः, अहं स्वामीति बुद्धिश्च निवर्तेतामिति विचिन्त्य कृपया वेदशास्त्रं ददा आद्याः ॥

आवापोद्वापतः स्युः कतिकति कविधीचित्रवत् तत्तदर्थे-
ष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः ।
तत्त्वालोकस्तु लोप्तुं प्रभवति सहसा निस्समस्तान् समस्तान्
पुंस्त्वे तत्त्वेन दृष्टे पुनरपि न खलु प्राणिता स्थाणुताधीः(दिः)॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे तत्त्वत्रयाधिकारः चतुर्थः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## परदेवतापारमार्थ्याधिकारः

आत्मैक्यं देवतैक्यं त्रिकसमधिगता तुल्यतैक्यं त्रयाणाम्
अन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराद्रियन्ते न सन्तः ।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च
श्रीमान्नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ॥

(परदेवतानिर्णयप्रयोजनम्)

उक्तवैधर्म्यैः सामान्यतः प्रकृतिपुरुषेश्वरविवेके कृतेऽपि "ओन्रुतेवुम्" ("[1]एकीभवन्त्या देवजातेः") इत्याद्युक्तरीत्या परदेवता-

विशेषनिश्चयस्याभावे "[2]स्मृत्वाऽन्यं कमपि देवं न श्रयेत्(सा)तं विना" इत्युक्तस्य परमैकान्तित्वस्यायोगात्, परमैकान्ति-व्यतिरिक्तस्य व्यवधानरहितमोक्षासिद्धेः ईश्वरोऽमुकदेवताविशेष इति निष्कर्षणीयम् ।

(आत्मैक्यदेवतैक्यादिपक्षनिराकरणम्)

तत्र चेतनाचेतनयोरत्यन्तभेदस्य प्रमाणसिद्धत्वात् सर्वं परदेवतात्मकब्रह्मद्रव्यमिति पक्षो न घटते । स्वभावसिद्धस्य जीवेश्वरभेदस्य तथा देवादिरूपाणां जीवानामन्योन्यभेदस्य च सुखदुःखादिव्यवस्थया प्रामणिकत्वात्, सर्वान्तर्यामिणि एकत्वे सत्यपि, ब्रह्मरुद्रेन्द्रादिसर्वदेवता ईश्वरेण सह स्वयंमिथश्च अभिन्ना (ऐक्यभाज) इति पक्षो न युज्यते । आसु देवतासु प्रधानत्वेन प्रतिपाद्यमानानां ब्रह्मरुद्रेन्द्रादीनां कार्यत्वकर्मवश्यत्वयोः प्रामाणिकत्वात् "[3]आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् । एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः ॥", "[4]आद्यो नारायणो देवस्तस्माद्ब्रह्मा ततो भवः ।", "[5]परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः । तस्माद्रुद्रोऽभवद्देवि" इत्यादिषु, "[6]ततस्त्वमपि दुर्धर्षस्तस्माद्भावात् सनातनात् । रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥" इत्युक्तरीत्या(यः)स्वेच्छावतीर्णः मूर्तिमध्यस्थो विष्णुनारायणादिशब्द-वाच्य(स्स)एव स्वपूर्वावस्थया सर्वस्य जगतः कारणमित्यभिधानात्,

---

ओन्रन्तेवुम्— तिरुवाय्-4-10

उन्नित्तु मट्रोरुदेयूवं तोड़ालवनैयल्लाल्—तिरुवाय-4-6-10

"[7]नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥" इत्युक्तरीत्या स एव नित्य इत्यभिधानाच्च, तिस्रो मूर्तयः समा इति, तिस्रो मूर्तयः एकतत्त्वमिति, त्रिमूर्त्युत्तीर्ण ईश्वर इति, तिसृषु ब्रह्मा वा रुद्रो वा ईश्वर इति प्रतिपाद्यमानाः साम्यैक्योत्तीर्ण-व्यक्त्यन्तरपक्षाः न घटन्ते ।

(ब्रह्मरुद्रादीनां कार्यत्वकर्मवश्यत्वे)

**ब्रह्मरुद्रादयः सर्वेश्वरस्य कार्यभूता** इत्येतत्—"[8]तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते" इत्यादिभिः, "[9]संक्षिप्य च पुरा लोकान् मायया स्वयमेव हि । महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥" "[10]क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान् ॥", "[11]अहं प्रसादजस्तस्य कस्मिंश्चित् कारणान्तरे । त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातने ॥" इति **प्रतिवादिहस्तलिखित** विवादत्यागपत्रनीत्या तेषामेव वचोभिश्च सिद्धम् ।

एते **कर्मवश्याः** सन्तः कैश्चित् कर्मविशेषैः **सर्वेश्वरमाराध्य** स्वस्वपदानि प्रापुरित्येतत्–' [12]सर्वे देवा वासुदेवं नमन्ते, "[13]सब्रह्मकाः सरुद्राश्च सेन्द्रा देवा महर्षयः । अर्चयन्ति सुरज्येष्ठं देवं नारायणं हरिम् ॥" "[14]चिन्तयन्तोऽपि यं नित्यं ब्रह्मेशानादयः प्रभुम् । निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ॥" "[15]पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितम् ॥ सोऽहं संन्यस्तभारो हि त्वामुपासे जगत्पतिम् । "[16]युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥"

"[17]विश्वरूपो महादेवः सर्वमेधे महाक्रतौ । जुहाव सर्वभूतानि स्वयमात्मानमात्मना ॥ [18]महादेवः सर्वमेधे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव । विश्वान् लोकान् व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान् कृत्तिवासाः ॥" "[19]यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ । स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः" **इत्यादिषु प्रसिद्धम्** ॥

**(ब्रह्मरुद्रादीनां भगवन्मायापरतन्त्रत्वभगवत्किंकरत्वे)**

एते **भगवन्मायापरतन्त्राः गुणवश्याः ज्ञानसंकोचविकासवन्तश्च** सन्तीत्येतत् **वेदापहारादिवृत्तान्तेषु**, "[20]ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा । विष्णुमायामहावर्तगर्तान्धतमसावृताः ॥" "[21]ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥" इत्यादिषु च सुव्यक्तम् ॥

एते **स्वेषामन्तरात्मना** तेन प्रत्तानि **ज्ञानादीन्यवलम्ब्य** तस्याऽऽज्ञाकैङ्कर्यं कुर्वन्तीत्येतत् "[22]एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ" इति प्रत्यपादि ॥

**(ब्रह्मरुद्रादीनां शुभाश्रयत्वाभावः)**

एषां **शुभाश्रयत्वं** नास्तीतीममर्थं "[23]हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः" इत्यारभ्य, "[24]अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" इति, "[25]आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः" इति, "[26]कर्मणां परिपाकत्वादाविरिञ्चादमङ्गलम् । इति मत्वा विरक्तस्य वासुदेवः परा गतिः" इति च **पराशर-शौनक-शुकादयः प्रतिपादयामासुः** ॥

(ब्रह्मरुद्रादीनां भगवदाश्रितत्वं भगवतोऽनन्याश्रितत्वं च)

एषां **भगवान् आश्रयणीय** इत्येतमर्थं **भगवतः** कश्चिदप्याश्रयणीयो नास्तीत्येतमर्थं च '[27]रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः । ब्रह्मा मामाश्रितो राजन् नाहं कञ्चिदुपाश्रितः । ममाश्रयो न कश्चित् तु सर्वेषामाश्रयो ह्यहम् ॥'' इति स्वयमेवानुजग्राह ॥

(ब्रह्मरुद्रादीनां भगवद्विभूतित्वम्)

इमौ **उभयविभूतिनाथस्य सर्वेश्वरस्य** विभूति**भूता**वित्येतत् ''[28]ब्रह्मा दक्षादयः काल.'' '[29]रुद्र कालान्तकाद्याश्च'' इतीतरनिर्विशेषं प्रत्यपादि ।

इत्थं वस्त्वन्तरवत् एतावपि **सर्वशरीरिणः सर्वेश्वरस्य प्रकारभूता**वित्येतत् वस्त्वन्तराणामेतयोश्चाविशेषेण नारायणादिशब्दसामानाधि करण्यात् सिद्धम् ।

एतयोः **शरीरतया** तस्या**त्मतया** चावस्थितिं'' [30]तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्' इति **ब्रह्मा रुद्रं** प्रति अवोचत् ॥

इमौ **शेषभूतौ** स **शेषी**त्येतमर्थं ''[31]दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः । अतोऽहमपि ते दास इति मत्वा नमाम्यहम् ॥ इति **मन्त्रराजपदस्तोत्रे सर्वज्ञो रुद्रः** स्वयमेवावोचत् ॥

(भगवतः समाधिकदरिद्रत्वम्)

इत्थं **सर्वैः प्रकारैर्नारायणः समाधिकदरिद्र** इत्येतमर्थं ''[32]न परं पुण्डरीकाक्षात् दृश्यते पुरुषर्षभ ।'' ''[33]परं हि पुण्डरीका-

क्षान्न भूतं न भविष्यति ॥" "[34]न विष्णोः परमो देवो विद्यते नृपसत्तम ।" "[35]न वासुदेवात् परमस्ति मङ्गलं न वासुदेवात् परमस्ति पावनम् । न वासुदेवात् परमस्ति दैवतं न वासुदेवं प्रणिपत्य सीदति ॥" "[36]त्रैलोक्ये तादृशः कश्चिन्न जातो न जनिष्यते ।" "[37]न दैवं केशवात् परम्" "[38]राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरं तं विजानीमः स पिता स प्रजापतिः ॥" इत्यादिभिर्बहुधा प्रतिपादयामासुः ॥

(जायमानदशायां भगवत्तदितरवीक्षणे वैलक्षण्यम्)

गर्भश्रीमन्तो जायमानदशायां रजस्तमःप्रशमहेतुमधुसूदनकटाक्षभाजो मुमुक्षवःस्युरित्येषोऽर्थः, "ब्रह्मरुद्रदृष्टा रजस्तमःपरतन्त्राः स्युरित्येषोऽर्थश्च "[39]जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥ [40]पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतम् ॥" इति व्यभज्यत ॥

(ब्रह्मरुद्रादीनां मुमुक्ष्वनुपास्यत्वम्)

एते मुमुक्षूणामनुपास्या इत्ययमर्थः एषां कारणभूतः सर्वेश्वर एव एषामन्येषाञ्च मुमुक्षूणामुपास्य इत्ययमर्थश्च "[41]संसारार्णवमग्नानां विषयाक्रान्तचेतसाम् । विष्णुपोतं विना नान्यत् किञ्चिदस्ति परायणम् ॥" इति, "[42]ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम् ॥" इति,

"[43]हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः । उपास्योऽहं सदा विप्रा उपायोऽस्मि हरेः स्मृतौ ॥" इति च मत्यपादि ॥

एतेनैतेषां मोक्षोपकारकत्वस्य प्रतिपादकानि वचनानि आचार्यादिवत् ज्ञानादिहेतुत्वपराणीति निर्णीतं भवति । अयमर्थः, "[44]सूर्यस्यैव तु यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन रुद्रभक्तः प्रजायते ॥ शंकरस्य तु यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन विष्णुभक्तः प्रजायते ॥ वासुदेवस्य यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन वासुदेवे प्रलीयते ॥" इत्यत्रापि विवक्षितः ॥ इत्थं **सूर्यभक्त्यादेः परम्परया भगवद्भक्त्यादावुद्बोजकत्वमपि, परावरतत्त्वेषु ऐक्यबुद्धिः व्यत्ययबुद्धिः समत्वबुद्धिरित्येवं** जायमानात् मतिव्यामोहात् आसुरस्वभावात् विषयविशेषे प्रद्वेषादिकं च विनैव, सूर्यादीन् आश्रयतां विषये एवेत्ययमर्थः—"[45]ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम् । ते वै पाषण्डिनो ज्ञेयाः सर्वकर्मबहिष्कृताः ॥" इत्यादिषु द्रष्टव्यः । इत्थं **ज्ञानादिष्वन्यथात्वं** प्राप्तवतां **देवतान्तरभक्तौ** सत्यामपि **भगवन्निग्रहेण प्रत्यवाय** एव फलम् । अतः, "[46]त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय । दर्शयित्वाऽल्पमायासं फलं शीघ्रं प्रदर्शय ॥" इत्युक्तरीत्या मोहनशास्त्रेषु दृष्टफलसिद्धेरुत्पादनमपि तद्द्वारा विमोह्य नरके पातनार्थमेव ।

सत्यसंकल्पे भगवति कंचिन्निग्राह्यतया संकल्पितवति सति; "[47]ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा । इन्द्रो

महेन्द्रः पुरनायको वा त्रातुं न शक्ता युधि रामवध्यम् ॥" इत्युक्त्या देवतान्तराणि रक्षितुं नैव शक्तानि ।

(देवैरपि भगवदाश्रितविरोधस्याशक्यत्वम्)

सर्वेषु देवेषु सुग्रीवमहाराजादिवत् स्वान्तरङ्गभूतेष्वपि च स्वाश्रितं कंचित् हिंसितुं संकल्पयत्सु सत्सु, "[48]सकृदेव प्रपन्नाय" इत्युक्तरीत्या सत्यप्रतिज्ञस्वव्रताभंगार्थं रावणादीनिव दुष्प्रकृतीन् निराकार्यान् निराकृत्य श्रीवानरवीरानिवानुकूलयितव्यान् अनुकूलान् संपाद्य च सर्वेश्वरो रक्षति ।

(देवतान्तराणां क्षुद्रफलप्रदत्वस्य भगवदधीनत्वम्)

देवतान्तरसमीपे "[49]काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः । क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा इत्युक्तरीत्या विषमधुतुल्यानि क्षुद्रफलानि झटिति सिध्यन्ति । तान्यपि, [50]लभते च ततः कामान् मयैव विहितान् हि तान्" "[51]एष माता पिता चापि युष्माकं च पितामहः । मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः । अस्य चैवानुजो रुद्रो ललाटात् यः समुत्थितः । ब्रह्मानुशिष्टो भविता सर्वभूत(सत्त्व)वरप्रदः" इत्याद्युक्तरीत्या भगवदधीनानि ।

(ब्रह्मरुद्रयोर्विलम्बेनापि मोक्षप्रदानासामर्थ्यम्)

"[52]यस्मात् परिमितं फलम्", "[53]सात्त्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्" इत्युक्ततया तत्सन्निधौ मोक्षो विलम्बेनापि न लभ्यते ।

(भगवतः सर्वफलप्रदत्वम्, अविलम्बेन मोक्षप्रदत्वञ्च)

सर्वेश्वरसन्निधौ, "[54]युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः। इत्याद्युक्तरीत्या अतिशयितान्यैश्वर्यादीन्यपि लभ्यन्ते। ततः श्रमपरिहारार्थेन गङ्गास्नानेन पापक्षयसिद्धिवत् विषयस्वभावेन आनुषङ्गिके पापक्षये उत्पन्ने रजस्तमसोरभिभवे जाते सत्त्वोन्मेषे संपन्ने जनकाम्बरीषकेकयादीनामिव क्रमेण मोक्षपर्यन्तता भवति। मोक्षोपायनिष्ठताविषये, "[55]बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते", "[56]ये जन्मकोटिभिः सिद्धास्तेषामन्तेऽत्र संस्थितिः।" "[57]जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥" इत्युक्तरीत्या विलम्बो भवति। मोक्षरुचौ जातायां शक्ये कस्मिंश्चिदुपाये प्रवृत्तौ संपन्नायाम्, "[58]तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भवामि नचिरात् पार्थ मय्यावेशितचेतसाम्॥" इत्युक्तरीत्या मोक्षसिद्धौ विलम्बो न भवति। स्वतन्त्रप्रपत्तिनिष्ठस्य स्वोद्दिष्ट एवावधिः। अन्यत् विलम्बाविलम्बगमकं नास्ति। इमे नियमाः सर्वेऽपि, "[59]स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः" इत्युक्तया निरङ्कुशस्वच्छन्दतया सिद्धा इति प्रमाणपरतन्त्राणां सिद्धम्।

(देवतान्तराणां अप्रबुद्धमात्रसेव्यत्वम्)

इमान् अर्थान् इत्थं विशदमप्रबुद्ध्यमानानामेवं देवतान्तराणि सेव्यानीत्ययमर्थः "[60]प्रतिबुद्धवर्जं सेव्यं तु" इति व्यवास्थाप्यत।

(देवतान्तरदत्तफलस्याल्पत्वम्)

इमानि **देवतान्तराणि** भगवच्छरीरत्वेनाबुध्वा आश्रयताम्—**चार्वाकेण** सता केनचित् **सेवकेन** राजशरीरे **चन्दनादौ** प्रयुक्ते सति, राजशरीरे यथाऽऽत्मा **प्रीतो** भवति—तथा वस्तुगत्या **सर्वेश्वरे आराध्ये** सत्यपि, "[61]ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥" इत्युक्तरीत्या **शास्त्रार्थवैकल्यस्य** जातत्वात् तत्रोक्तं फलमपि विकलं भवति। भगवच्छरीरतां बुद्ध्वा क्षुद्रफलानि झटिति प्राप्तव्यानि इति रागविशेषेण तानि (देवतान्तराणि) उपासीनानां तत्तत्फलानि पूर्णानि भवन्ति।

(भगवद्दत्तफलस्यातिशयितत्वम्)

एवं ज्ञाते सति **भगवन्तमेव** "[62]आर्तो जिज्ञासुरर्थार्थी" इत्युक्तरीत्या **फलान्तरार्थमपि** समाश्रयेच्चेत्, तानि **फलान्यतिशयितानि** भवन्ति।

(अनन्यप्रयोजनस्याप्यानुषङ्गिकी ऐश्वर्यप्राप्तिः)

**अनन्यप्रयोजनतया** आश्रयतामपि, "[63]शरीरारोग्यमर्थांश्च भोगांश्चैवाऽऽनुषङ्गिकान्। ददाति ध्यायिनां नित्यमपवर्गप्रदो हरिः ॥" इत्युक्तरीत्या **फलान्तराण्यप्यानुषङ्गिकतया** सिध्यन्ति। इममर्थ-**मनुषङ्गसिद्धैश्वर्यः** श्रीकुलशेखरस्वाम्यपि "[64]त्वामेवाभिलष्य महैश्वर्यमनभिलषन्तमेव स्वयमभिलषदैश्वर्यमिव" इत्यनुजग्राह ॥ "[65]अभिलषितदुरापा ये पुरा कामभोगा जलधिमिव जलौघास्ते विशन्ति स्वयं नः"

---

निन्नैये तान् वेण्डि नीळ्शेल्वं वेण्डादान् तन्नैये

तान्वेण्डुम् शेल्वम्पोल्— पेरुमाळतिरु-5-9

इति ईशाण्डान् इत्यारभ्योऽपि स्वानुगृहीते स्तोत्रे निवबन्ध । इदं विद्याविशेष-रागविशेषादिनियतम् ॥

(उक्तार्थेषु प्रमाणत्वेन दिव्यसूरिश्रीसूक्तीनामुदाहरणम्)

इत्थं **सर्वेश्वरस्य ब्रह्मरुद्रादीनां** च सिध्यतो विशेषान् "[66]असत्स्वामिभुक्तवान्तोच्छिष्टदेवव्यतिरिक्ता अपि किं सन्ति" इति, "[67]चतुर्मुखं नारायणः ससर्ज, चतुर्मुखोऽपि द्वारभूतः सन् स्वयं शंकरं ससर्ज" इति, "[68]आदृत्य प्रणमतां ब्रह्मशिवेन्द्रादीनां सर्वेषां नाभीकमलादिकन्द" इति "[69]तीर्थस्य लोकविक्रान्तरक्तचरणयोरुपरि सुन्दरपुष्पदाम समर्प्य तदेव शिवशीर्षे स्वयं दृष्ट्वा पार्थेन सुनिश्चितं तरुणशीतलतुलसीकस्य महत्त्वम्" इति, "[70]दिविषदामीशिता चतुर्मुखो जटामौलिस्वामी च आर्जवेन तत्पादपङ्कजं ध्यात्वा स्तुत्वा संचरन्ति" इति,

---

एम्बेरुमानुण्डुमिड्न्द एच्चिल् देवरल्लादार्
तामुलरे— पेरियतिरु-11-6-2
नान्मुकनै नारायणन् पडैत्तान् नान्मुकनुम्
तान्मुकनाय् शङ्करनैत्तान्पडैत्तान्—नान्मुकन्तिरु-1
मेवि त्तोड़ुम् पिरमन् शिवन् इन्दिरनादिकेल्लाम्
नाविकमलंमुदर्किड़ङ्ग—तिरुवाय्-10-10-3
तीर्तनुलंगलेन्द शेवडिमेल् पुन्दामम् शेर्ति अ ैये
शिवन्मुडिमेल् तान् कण्डु पार्तन् तेलिन्दोड़िन्द
पैन्तुड़ायान् पेरुमै— तिरुवाय्-2-8-6
"वानवर् तम्मैयालुमवनुम् नान् ुकनुम् श डैमुडिय ्णलुम्

"[71]ववतुं [योग्यतया] स्थितस्य शिवस्य ब्रह्मणोऽन्येषामपि नायकः स एव" इति, "[72]एकवृषभकश्चतुर्मुखश्च त्वां यथा न जानीतस्तथा माहात्म्ययुक्त" इति, "[73]वृषभध्वजो ब्रह्मेन्द्रोऽन्यः कश्चिदप्यस्य जन्मरूपस्य व्याधेरौषधं न जानाना अपि भवन्ति" इति बहुभिः प्रकारैरनुजगृहुः ।

(देवतापारमार्थ्यस्य रहस्यत्रयेऽनुसन्धानस्थलम्)

इदं **देवतापारमार्थ्यं** श्रीमन्त्रे **प्रथमाक्षरे नारायणशब्दे** च, **द्वये सविशेषणयोर्नारायणशब्दयोः, चरमश्लोके** मामहमिति शब्दयोश्चानुसन्धेयम् ।

(देवतापारमार्थ्यज्ञानशून्यस्यानन्यशरणत्वाभावः)

एतद्देवताविशेषनिश्चयशून्यानाम्, "[74]कृष्णात् रक्षकादन्यो रक्षको नास्ति" इति, "[75]निवर्तय दुःखम्, मा वा निवर्तय ; निवर्तका-

---

शेम्मैयाल्अवन् पादपङ्कयम् शिन्दित्तेन्ति त्तिरिवरे" ,,-3-6-4
पेशनित्र शिवनुककुम् पिरमन्तनक्कुम्
पिरर्कुम् नायकनवने— ,, 4-10-4

ओर्ट्रैविडैयनुम् नान्मुकनुमुन्नै यरियाप्
पेरुमैयोने— पेरियल्वार्-4-10-4

एरुत्तुक्कोडियुडैयानुम् पिरमनुमिन्दिरनुम्
मर्ट्रुमोरुत्तरुम् इप्पिरवियेन्नुम् नोयक्कु
मरुन्दरिवारुमिल्लै— 5-3-6

कण्णन् कण्णल्लदिल्लै योर्कण्णे—तिरुवाय्-2-2-1

कलैवाय् तुन्बङ्कलैयादोड़िवाय् कलैकण्मर्ट्रिलेन्—,, 5-8-8

न्तरशून्योऽहम्" इति "[76]प्राणस्यैकामवलम्बनशाखां त्वां विना न जानाम्यहम्" इति "[77]तरुतुयरंतडायेल्" (प्राप्तं दुःखं न निवारयसि चेत्—त्वच्चरणमन्तरा शरणं नास्ति)" इत्युपक्रमकश्रीसूक्तप्रभृतिषु च प्रतिपाद्यमाना अनन्यशरणत्वावस्था न सिद्ध्यति।

(परदेवतानिर्णयस्य सांप्रदायिकत्वनिरूपणम्)

इदं **परदेवतापारमार्थ्यं** श्रीमन्ते साक्षात्कृत्य **तदीयपर्यन्ततया देवतान्तरत्यागस्य तदीयपर्यन्ततया भगवच्छेषत्वस्य च प्रतिष्ठितत्वप्रकारम्**, "[78]अन्यत् किमपि दैवमस्तीत्यातिष्ठमानैः सह न संसृज्येय, अङ्गीकृतं च त्वद्दासदास्यम्" इति गाथायां **सर्वेश्वरसन्निधौ सर्वार्थग्राही** दिव्यसूरिरनुजग्राह। अयं "[79]पारुरुविल्लनीरेरिकाल्" (कठिनोर्वी जलमग्निर्वायुः) इति **गाथायां परिशेषक्रमेण विवाद-विषयान्** त्रीन् स्थापयित्वा तेषु त्रिषु **प्रमाणानुसन्धानेन द्वौ** निरस्य **परिशेषितं परज्योतीरूपमेकं** "मेघसदृशरूपमस्मत्स्वामिनो रूपम्" इति निश्चकर्ष। एतद्रूप**विशिष्टः परमपुरुष** एव **सर्ववेद-प्रतिपाद्यं** परतत्त्वमित्येतमर्थं **सर्ववेदसारभूतप्रणवप्रतिपाद्यतया**

---

आविक्कोर्पट्रुक्कोम्बुनिन्रलालरिकिन्रिलेन् यान्—10-10-3

तरुतुयरन्तडायेल्— पेरुमाळ्-4-1

मर्रुमोर् देय्वमुलदेन्रिरुप्पारोड्डर्रिलेन् उर्रदुम्

उन्नडियार्कडिमै—पेरियतिरु-8-10-3

पारुरुविल्ल नीरेरिकाल्—तिरुनेडन्ताण्डहम्-2

"[80]मूलभूतमेकाक्षरं त्रिमात्रोन्मेषगर्भमुच्चार्य समुद्रवर्णं भावयत चेत्" इति महादिव्यसूरिः (श्रीविष्णुचित्तसूरिः) अनुजग्राह ॥

(दिव्यदम्पत्योरेव प्राप्यत्वशरण्यत्वप्रतिपादनम्)

**तैत्तिरीये** श्रियः पतित्वेन चिह्नेन परमपुरुषस्य व्यावृत्तेराम्नान-प्रकारमनुसंधाय "[71]श्रियमद्राक्षं हिरण्मयविग्रहमद्राक्षम्" इत्युपक्रम्य "[72]शार्ङ्गुनमक्कु" (अपाश्रयोऽस्माकम्) इति गाथायाम्, 'प्रतिबुद्धा-नामस्माकं श्रीमहालक्ष्म्या सहावस्थाय (रक्षणे) व्याप्रियमाणमिमं विना **प्राप्यान्तरं शरण्यान्तरं** च नास्ति; इमौ **दम्पती** एव **प्राप्यौ शरण्यौ** च' इति न्यगम्यत ।

(दिव्यदम्पत्योः प्राप्यत्वादौ पराशरपराङ्कुशसूक्तिनिरूपणम्)

इममर्थं "[83]देवतापारमार्थ्यं च यथावद् वेत्स्यते भवान्" "[84]पुलस्त्येन यदुक्तं ते तत् तथैव (सर्वथैतत्) भविष्यति" इति **पुलस्त्यवसिष्ठप्रसादलब्धपरदेवतापारमार्थ्यज्ञानवान्**, श्रीभगवद्या-मुनपादैः "[85]तस्मै नमो मुनिवराय पराशराय" इत्याद्रियमाणः श्रीपराशरब्रह्मर्षिर्विस्तरेण प्रतिपाद्य, '[86]देवतिर्यङ्मनुष्येषु पुंनामा

---

मूलमागिय ओट्रैयेऴुत्तै मून्ऱुमात्तिरै युळ्ळेऴ
वाङ्गि वेळैवण्णनै मेय्युदिराहिल—पेरियाऴ्वार-4-5-4

1 तिरुक्कण्डेन् पोन्मेनि कण्डेन्—तृतीय अन्तादि-1

2 शार्ङ्गु नमक्कु— ,, ,, 100

भगवान् हरिः । स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥"
इति परमरहस्ययोग्याय सच्छिष्यायोपदिदेश ।

इममर्थम् अज्ञानराहित्येन ज्ञानभक्ती अनुग्रहेण प्राप्तवान् "आद्यस्य नः कुलपतेः" इत्युक्तरीत्या प्रपन्नजनसंतानकूटस्थः श्रीशठकोपसूरिरपि "88 उज्ज्वलाग्रहस्तवलयायां श्रियां त्वयि चाधिवसतोर्दृश्यं चातुर्यं दृष्ट्वा" इत्यनुजग्राह । अत्र विषये वक्तव्यं सर्वमपि चतुःश्लोकीव्याख्याने परपक्षप्रतिक्षेपपूर्वकं विस्तरेणावोचाम । तत्रैव द्रष्टव्यम् ॥

(अधिकारार्थसंग्राहिका गाथा)

(गाथा) वेदा यथा व्याकुला भवेयुः, साधुजनाः कात्स्न्र्येन यथा कम्पेरन् , तथा वादिनः स्थिरतर्कगर्वेण—पृथक् पृथक् (स स देवः) आदिरिति यथा न वदेयुः, तथा आरण्यकदेशिकाः पुष्पेस्थितया श्रीदेव्या सह स्थितं पुराण[पुरुष]मेव साधयामासुः ।

जनपदभुवनादिस्थानजैत्रासनस्थे-
ष्वनुगतनिजवार्तं नश्वरेष्वीश्वरेषु ।

---

3 ओण्तोडियाल् तिरुमगलुम् नीयुमे निलानिर्प
कण्डशतिरकण्डु – तिरुवाय-4-9-10

4 वादियर् मन्नम् तरुक्कचेरुक्किन् मरै कुलैय
शाडुजनङ्गलडङ्ग नडुङ्गत्तनित्तनियै
आदियेनावहै यारणदेशिकर् शार्ठरिनरनम्
पोदमरुन्तिरुमाडुडन् निन्र पुराणनैय-

परिचितनिगमान्तः पश्यति श्रीसहायं
जगति गतिमविद्यादन्तुरे जन्तुरेकः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
परमदेवतापारमार्थ्याधिकारः षष्ठः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## मुमुक्षुत्वाधिकारः

कालावर्तान् प्रकृतिविकृतीः कामभोगेषु दोषान्
ज्वालागर्तप्रतिमदुरितोदर्कदुःखानुभूतिम् ।
याथातथ्यं स्वपरनियतं यच्च दिव्यं पदं तत्
काराकल्पं वपुरपि विदन् कस्तितिक्षेत बन्धम् ॥

इत्थमिमान् अर्थान् अध्यात्मशास्त्रैर्विशदं ज्ञात्वा स्वयंप्रकाशत्व-ज्ञातृत्वकर्तृत्वभोक्तृत्वशरीरित्वाणुत्वनित्यत्वनिरवयत्व - च्छेद-नदहनक्लेदनशोषणाद्यनर्हत्व - वृद्धिह्रासरहितस्वरूपत्वादिभिरात्मनो विशेषणभूतदेहेन्द्रियादिवैलक्षण्यं दृष्ट्वा, अस्य परलोकगमनदेहा-

न्तारप्राप्तियोग्यत्वनिश्चयेन सामान्यतो लोकोत्तीर्णपुरुषार्थयोग्यतामापन्नाः नरकपतनादिजन्मान्तरक्लेशभयात् तत्कारणेभ्यः कर्मभ्यो निवृत्ताः—

आधेयत्वविधेयत्वशेषत्वाल्पशक्तित्वाणुत्व-अज्ञानसंशयविपर्ययदुःखादियोग्यत्व-अशुभाश्रयत्वादितो जातात् विशेष्यभूतेश्वरव्यावृत्तिनिचयात् भगवत्कैङ्कर्यरूपस्वरूपप्राप्तवैभवापेक्षणे योग्यतामापन्नाः–

(श्रीमन्त्रार्थज्ञानेन नानाविधाहंकारममकारनिवृत्तिः)

सर्वापेक्षितार्थसंग्रहभूतश्रीमन्त्रमुखेन सारतमार्थेष्वनुसंधीयमानेषु सत्सु—प्रथमपदे तृतीयाक्षरप्रतिपन्नज्ञानत्वाद्यनुसन्धानेन देहतदनुबन्धिविषयावहंकारममकारौ, प्रथमाक्षरे लुप्तचतुर्थीप्रतिपन्नेन तादर्थ्येन देहातिरिक्तात्मस्वरूपतद्गुणेषु "त्वं मेऽहं मे" इति श्लोकोक्तरीत्या स्वशेषत्वाभिमानरूपावहंकारममकारौ, मध्यमाक्षरेऽवधारणार्थेन "अन्यशेषभूतोऽहम्" इति "ममान्यः शेषी" इति च प्रवर्तमानावहंकारममकारौ, मध्यमपदप्रतिपन्नेन निषेधविशेषेण स्वरक्षणव्यापारविषये प्रवर्तमानौ निरपेक्षस्वातन्त्र्यनिरुपाधिकशेषित्वाभिमानरूपावहंकारममकारौ, एतन्निषेधसामर्थ्येनैव तृतीयपदे चतुर्थ्यभिप्रेते भाविनि कैङ्कर्यपर्यन्तानुभवरूपे फले विषये इदानीन्तनफलान्तरानुभवन्यायेन प्रवर्तमानौ स्वाधीनकर्तृत्वभोक्तृत्वस्वार्थकर्तृत्वभोक्तृत्वभ्रमरूपौ अहंकारममकारौ च यथार्हं स्वार्थविधया शाब्दविधया च समुन्मूल्य इत्थं प्रतिष्ठितज्ञानाः—

## (सदोषनिर्दोषफलविवेचनम्)

"[2]अल्पसारभूतान् आस्वाद्य दूरेऽभवम्" '[3]दृष्ट्वा श्रुत्वा स्पृष्ट्वा घ्रात्वा भुक्त्वा संचरद्भिः पञ्चभिरिन्द्रियैर्दृष्टमानन्दम्, ज्ञातुमशक्यं निरवधिकं क्षुद्रानन्दं(च)", "[4]तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते" "[5]अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्", "[6]अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्" "[7]महाबलान् महावीर्यान् अनन्तधनसंचयान्। गतान् कालेन महता कथाशेषान् नराधिपान्। श्रुत्वा न पुत्रदारादौ गृहक्षेत्रादिकेऽपि वा। द्रव्यादौ वा कृतप्रज्ञो ममत्वं कुरुते नरः॥" '[8]सर्वं दुःखमयं जगत्" "[9]स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः।" "[10]राज्ये गृध्नन्त्यविद्वांसो ममत्वाहृतचेतसः। अहम्मनमाहापानमदमत्ता न मादृशाः॥" "[11]आब्रह्मभवनादेते दोषाः सन्ति महामुने। अत एव हि नेच्छन्ति स्वर्गप्राप्तिं मनीषिणः" "[12]ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम्। शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुः॥ न तत्र मूढा गच्छन्ति पुरुषाः विषयात्मकाः। दम्भलोभमदक्रोधद्रोहमोहैरभिद्रुताः॥ निर्ममा निरहंकारा निर्द्वन्द्वाः संयतेन्द्रियाः। ध्यानयोगरताश्चैव तत्र गच्छन्ति साधवः॥" "[13]रम्याणि कामचाराणि विमानानि सभास्तथा॥

---

मुमुक्षुत्वाधिकारः—

अर्पशारङ्गलंवैशुवैत्तहन्त्रोडिन्देन्'—तिरुवाय्-3-2-6,
कण्डुकेट्टु उर्ट्रुमोन्दु उण्डु उडलुमैङ्करुवि
कण्डविन्बम्. तेरिवरिय अळविल्लाच्चिर्ट्रिन्बम्" 4-9-10

आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः ॥" "[14]एते वै निरयास्तात स्थानस्य परमात्मनः ।" इत्यादिप्रमाणैः अल्पत्वास्थिरत्व-दुःखमूलत्वदुःखमिश्रत्वदुःखोदर्कत्वविपरीताभिमानमूलत्वस्वा-भाविकानन्दविरुद्धत्वरूपाचिद्विषयानुभवदोषसप्तकम्, अत्र यथासंभवं घटमानान् **चेतनमात्रानुभवदोषांश्च, एतदनुभव** प्रतिकोटिभूतस्य **भगवदनुभवस्य वैलक्षण्यं** च विशदमनुसन्धाय—

"[15]परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" इत्युक्ता-**मवस्थां** प्राप्ताः, "[16]प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत्" इत्युक्तेभ्यः **प्रवृत्तिधर्मेभ्यो निवृत्ताः** "[17]निवृत्तिलक्षणं धर्मम् ऋषिर्नारायणोऽब्रवीत्" इत्युक्तेषु **निवृत्तिधर्मेषु प्रवृत्ता** ये, ते **मुमुक्षवोऽधिकारिणः**॥

(केवलतत्त्वज्ञानस्याफलत्वम् ।)

पूर्वोक्तरीत्या **परावरतत्त्वेषु पुरुषार्थेषु** सम्यग्ज्ञातेष्वपि इत्थं **वैराग्यपूर्वकं परमपुरुषार्थोपायानुष्ठाने** चेदप्रवृत्तः, "[18]शीलवृत्तफलं श्रुतम्", "[19]शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः । तस्मात् स सर्वशास्त्रज्ञो यस्य शान्तं मनस्सदा ॥" इत्युक्तं श्रुतफलमप्यलब्ध्वा, "[20]नाच्छादयति कौपीनं न दंशमशकापहम् । शुनः पुच्छमिवानर्थं पाण्डित्यं धर्मवर्जितम्" इत्येवं **हास्यो** भवति ।

अतः, "[21]वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च । वेषवाग्वृत्तिसारूप्यमाचरन् विचरेदिह" इत्युक्तरीत्या **श्रुतानुरूपे स्वोचिते परमपुरुषार्थोपायानुष्ठाने** त्वरमाणाः "[22](सति) स्वं कर्म

कुर्वाणे परेऽभिनन्दन्ति" इत्युक्तरीत्या "[23]तं देवा ब्राह्मणं विदुः" "[24]प्रणमन्ति देवताः" "इत्यादिषु प्रतिपाद्यमानं समुत्कर्षं प्राप्नुयुः ॥

(अधिकारार्थसंग्राहकगाथा)

(गाथा)—(श्रिया) स्थितपुराण(पुरुष)पादद्वन्द्वोत्तंसनरूपं नित्यफलम्, नाश एव स्वभाव इति कथनार्हतया जृम्भमाणं भवसमुद्रम्, सदिदं दुष्टमिदमित्युपदिष्टवतां समीचीनकृपया जितेन्द्रियाणि मोक्षमेवापेक्षेत महाफलम् ॥

विषमधु बहिष्कुर्वन् धीरो बहिर्विषयात्मकं
परिमितरसस्वात्मप्राप्तिप्रयासपराङ्मुखः ।
निरवधिमहानन्दब्रह्मानुभूतिकुतूहली
जगति भविता दैवात् कश्चिज्जिहासितसंसृतिः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे मुमुक्षुत्वाधिकारः सप्तमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

1 नित्रपुराणनडियिणैयेन्दु नेडुम्पयनुम् पोन्रुदले निलैयिन्रिडप् पोदंगुपवक्कडलुम् नन्रिडु तीयदिदेन्रनविन्रवर् नल्लरुळाल् अन्रपयन् तरुमारुमरिन्दवर् अन्दणरे ॥

श्रीः

## ॥ अधिकारिविभागाधिकारः ॥

मुमुक्षुत्वे तुल्ये सति च मधुविद्यादिषु यथा
व्यवस्था संसिध्यत्यधिकृतिविशेषेण विदुषाम् ।
विकल्प्येत न्यासे स्थितिरितरविद्यासु च तथा
नियत्या वैयात्यं नियमयितुमेवं प्रभवति ॥

(अधिकारिद्वैविध्यम्)

इत्थं परमपुरुषार्थोपायेषु निवृत्तिधर्मेषु प्रवृत्तावधिकारिणौ द्वौ, अद्वारकप्रपत्तिनिष्ठः सद्वारकप्रपत्तिनिष्ठश्चेति ।

स्वतन्त्राङ्गप्रपत्तिभ्यां प्रपन्नावत्र तावुभौ ।
फलसाधनभक्तिभ्यां भक्तावपि च दर्शितौ ॥

(उक्तिनिष्ठाचार्यनिष्ठयोः प्रपत्त्यन्तर्भावः)

"[1]स्नानं सप्तविधं स्मृतम्" इत्युक्तरीत्या यथाधिकारं मान्त्रमानसदिव्यवायव्यादयोऽपि यथा तुल्यफलाः स्नानभेदाः, एवमुक्तिराचार्यनिष्ठेति द्वे अपि प्रपत्तेर्मुखभेदौ ।

(उक्तिनिष्ठा)

अत्रोक्तिर्नाम—आनुकूल्यसंकल्पाद्यङ्गेषु ज्ञानवैशद्यरहितैः तं विनोपायान्तरशून्यतयाऽवस्थितिरूप मधिकारम्, अपेक्षायां कृतायां रक्षेदिति विश्वासं च वहद्भिः, शरण्यविदितत्वात् पूर्णप्रपत्तिगर्भेण आचार्योपदिष्टवाक्येन—धात्रुक्तं वाक्यमुक्त्वा सार्वभौमं शरणं

गच्छद्भिर्मुग्धैः, सामन्तकुमारैरिव 'मद्रक्षा त्वदेकभरत्वेन स्वीकर्तव्या' इति प्रार्थनम् । पदवाक्यादिवृत्तान्तानभिज्ञेन बालेन जातु, "भवति भिक्षां देहि" इत्युक्ते सति आढ्यानां सतां गृहेषु तदैवापेक्षितसिद्धिर्यथा भवति—तथा, "[2]ग्रहणेऽपि न्यूनताहीनो ऽपेक्षितं सर्वं ददत्" इत्युक्तस्वभावस्य परिपूर्णपरमोदारस्य विषयेऽस्याः उक्तेरपि फलाविनाभावो भवति । ज्ञानहीनानामिदमुक्तिमात्रमवलम्बमानानां विषये, "[3]येन केनापि प्रकारेण द्वयवक्ता त्वम्" इत्युक्तरीत्या इदमुक्तिमात्रमपि न जरयेत् शरण्यस्य कृपा । इममर्थं "[4]पापीयसोऽपि शरणागतिशब्दभाजः" इति, "[5]शरणवरणवागियं योदिता न भवति बत साऽपि धीपूर्विका" इति, "[6]प्रपत्तिवाचैव निरीक्षितुं वृणे" इति चाभियुक्ता आचचक्षिरे । अस्योक्तिमात्रनिष्ठस्य, आचार्यनिष्ठस्य च स्थिती द्वे अपि "[7]तव भरोऽहमकारिषि धार्मिकैः शरणमित्यपि वाचमुदैरिरम् । इति ससाक्षिकयन्निदमद्य मां कुरु भरं तव रङ्गधुरन्धर ॥" इति समुच्चित्यानुसंदधिरे । अत्राधिवयद्योतकेन अपिशब्देन एकैकमेव पर्याप्तमिति सूचितं भवति ।

(आचार्यनिष्ठा)

अनयोराचार्यनिष्ठः, "[8]पुत्रः प्रेष्यस्तथा शिष्य इत्येवं च निवेदयेत्" इति शाण्डिल्यस्मृत्याद्युक्तरीत्या आचार्यकृते आत्मात्मीयभरसमर्पणे स्वयमप्यन्तर्भूतः । "[9]सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम् । न संशयोऽत्र तद्भक्तपरिचर्यारतात्मनाम्" इत्युक्तन्यायेन

---

1 कोळ्ळक्कुरैविलन् वेण्डिट्टॆल्लां तरुम् तिरुवाय्-4-9-5

आचार्यनिष्ठस्य कैमुतिकन्यायेन फलसिद्धौ न सन्देहः । "एकस्मात् गिरेर्गिर्यन्तरं धावतः सिंहस्य शरीरे जन्तव इव भाष्यकारे संसारं लङ्घयति सति तत्सहजसंबन्धात् वयमपि उत्तीर्णा भविष्यामः" इति दाशरथिनाम्नः स्वामिनो (मुदलियाण्डान्) वाणी ।

"[10]अन्धोऽनन्धग्रहणवशगो याति रङ्गेश यद्वत्
पङ्गुर्नौकाकुहरनिहितो नीयते नाविकेन ।
भुङ्क्ते भोगान् अविदितनृपः सेवकस्यार्भकादिः—
त्वत्संप्राप्तौ प्रभवति तथा देशिको मे दयालुः ॥"

इति न्यासतिलकेऽवोचाम । येन केनापि वा प्रकारेण भवतु; येन केनापि च पुंसाऽनुष्ठिता भवतु; प्रपत्तिं विना तु सर्वेश्वरः परमपुरुषार्थदानार्थं न दयेतेति सिद्धम् ॥

(भागवताभिमानादेः साक्षादसाधनत्वम्)

इत्थं "[11]पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ॥" इति, "[12]ते वयं भवता रक्ष्याः भवद्विषयवासिनः । नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वर ॥" इति, "[13]समीचीनस्थानेऽयोध्यायां जीवितवन्ति चराचराणि सर्वाणि सत्स्वभावं प्रापितवन्तम्" इति, "[14]बलं नाम त्वदालय-

---

1 नर्पालयोत्तियिल् वाडुं चराचरं मुट्रवुं नर्पालुक्कुयृत्त नन्-तिरुवाय्-7.5.1.

2 वन्मैयावदु निन् कोयिलिल् वाड़ं वैट्टणवनेन्नुं वन्मै पेरिया 5.1.6

वासी वैष्णव इति बलम्" इत्युच्यमानानां भागवताभिमान-भगवद्विषयवासादीनां स्वकृतेन परकृतेन वा, पूर्वकृतेन पश्चात् करिष्यमाणेन वा केनचिदुपायेन संबन्धो भवति। कथमिति चेत्–इमानि उपासने प्रपत्तौ वा प्रवर्तनेन, उत्पन्नोपासनस्योत्तरोत्तरोपचयाऽऽपादनेन, स्वतन्त्रप्रपत्त्यनुष्ठानं कृतवतः ऐहिककैङ्कर्याभिवृद्धिसंपादनेन भगवत्प्राप्तौ त्वरोत्पादनेन चोपकारकाणि भवन्ति ॥

(अङ्गप्रधानप्रपत्तिफलभेदः)

एतयोरधिकारिणोः व्यासादिवत् उपायान्तरसमर्थत्वादाकिञ्चन्यमन्तरा, विलम्बक्षमत्वादनन्यगतिकत्वं च विना वर्तमानस्य सद्वारकप्रपत्तिनिष्ठस्य प्रारब्धकर्मपर्यवसानभाव्यन्तिमप्रत्ययावधिकस्योपासनरूपाङ्गिनो यथावन्निष्पत्तिपूर्वको मोक्षः फलम्। सर्वाधिकारां सर्वानिष्टनिवर्तनक्षमां सर्वेष्टसाधनभूतां सुकरां सकृत्कर्तव्याम् आशुकारिणीं प्रतिबन्धानर्हां ब्रह्मास्त्रवत् स्वफलविषये उपायान्तरप्रयोगमसहमानां प्रपत्तिं स्वाधिकारानुगुणमद्वारकं स्वीकृतवतः पुंसः—परिपूर्णानुभवप्रतिबन्धकस्यान्यस्य कस्याप्यभावात् प्रपत्तिक्षणमारभ्य, "[15]अत्र संचरतो मम हीनता का" इति "[16]इमं रसं विहायाहं गत्वेन्द्रलोकपालनजं रसं प्राप्यमपि नेच्छेयम्" इति "[17]अनुरूपं परिपूर्णं शरी

---

1 इङ्गे तिरिन्देर्कु इड्कुट्टरेन् 8.10.4.

2 इच्चुवै तविर यान् पोय् इन्द्रलोकामल्लुमच्चुवै पेरिनुम् वेण्डेन् तिरुमालै 2

3 एरार् मुयल् विट्टुकाक्कैप्पिन् पोवदे (शिरियतिरुमडल्)

हित्वा काकानुधावनं कुतः" इति "[18]स्नेहो मे परमो राजन् त्वयि नित्यं प्रतिष्ठितः। भक्तिश्च नियता वीर भावो नान्यत्र गच्छति ॥" इति चोक्त-रीत्या अनेन **शरीरेण** सह स्थित्वा **कैङ्कर्यानुभवः** कर्तव्य इत्यभिसन्धे-र्हेतुभूतादर्चावतारादिसङ्गादुपनतया **स्वानुमत्या स्थापितस्य शरीरस्या-**वसानेनैवावधिमान् **देशकालस्वरूप**परिच्छेदवता ऐहिकेन कैङ्कर्यफलोद्ग-मेन प्रथमेन सहितः परिपूर्णकैङ्कर्यपर्यन्तमोक्षः फलम् ॥

(प्रपत्तेर्यथाभिमतफलसाधनत्वम्)

[19]"वरं वरय तस्मात् त्वं यथाभिमतमात्मनः। सर्वं संपत्स्यते पुंसां मयि दृष्टिपथं गते ॥" "[20]किं वा सर्वजगत्स्रष्टः प्रसन्ने त्वयि दुर्लभम्", "[21]तस्मिन् प्रसन्ने किमिहास्त्यलभ्यम्" "[22]किं लोके तदिह परत्र चापि पुंसां यत् विष्णुप्रवणधियां न दाल्भ्य! साध्यम्", "[23]फलमत उपपत्तेः" इत्युक्तरीत्या **सर्वेश्वरस्य सकलफलप्रद-**त्वात् तच्चरणयोः **प्रपत्तेः सकलफलसाधनत्वा**देषामधिकारिणा-मुभयेषामियं सकलफलहेतुर्भवति ।

(भक्तेरिव प्रपत्तेश्चतुर्विधफलसाधनत्वम्)

"[24]चतुर्विधा भजन्ते माम्" इत्युक्ततयोपासनं यथा **चतुर्विधफलसाधनं** भवति, तथा "[25]तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् । यावन्न याति शरणं त्वामशेषाघनाशनम् ॥" इति प्रपत्तिरप्यस्य **चतुर्विधफलस्य साधन**मिति किल महर्षयः सिद्धान्तयन्ति। अत्र "अशेषाघनाशनम्" इत्युक्ते, "तावत्" इत्यस्य आदरप्रत्यायनाय प्रत्यधिकारमावर्तनाच्चैतदपेक्षितफलं सर्वमेत-न्निर्दिष्टकाले **यथामनोरथं** सिध्येत् (इति प्रतीयते) ॥

(स्वतन्त्रप्रपत्तिनिष्ठस्योत्कर्षः)

एवंविधं समुत्कर्षमभिसन्धायैव, "[26]सत्कर्मनिरताः शुद्धाः सांख्य-योगविदस्तथा। नार्हन्ति शरणस्थस्य कलां कोटितमीमपि ॥" इत्युच्यते।

(प्रपन्नस्यैहिककैङ्कर्यवैषम्ये हेतुः)

अस्येह जीवनकाले **कैङ्कर्ये वैषम्यं** स्वाभिप्रायवैषम्यात् प्राप्तम्। तस्य हेतुः **प्रारब्धसुकृतविशेषः**। अन्तिमशरीरानन्तरं प्राप्ये पुरुषार्थे किमपि **वैषम्यं** नास्ति। **पारतन्त्र्यमेकरूपम्**। "[27]पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धनः। स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते" इति **फलदशायामुच्यमानं स्वातन्त्र्यमपि** कर्मवश्यत्वापायविशिष्ट सर्वविधकैङ्कर्ययोग्यतारूपमिति फलपादे निर्णीतम् ॥

(अधिकारार्थसंग्राहिका गाथा)

(गाथा) अपेक्षणीयो महापुरुषार्थो मोक्ष इति विज्ञाय विधिभेदात् दीर्घतया ह्रस्वतया च स्थितयोर्निष्ठयोर्योग्या भक्ताः एकस्यां प्रवृत्त्य, मूलकर्मणां विनिवर्तने मुकुन्दचरणाश्रयणमन्तराऽन्यः कश्चिदुपायो नास्तीति स्थिताः ॥

---

1 वेण्डुं पेरुं पयन् वीडेन्ररिन्दु विदिवहैयाल नीण्डुंकुरुहियु निर्कुं निलै हळुकेकुंमन्बर् मूण्डोत्रिल् मूलविनै माट्रुदलिल् मुकुन्दनडि पूण्डत्रि मट्रोर् पुहलोत्रिलै येन निन्रनरे ॥

प्रपन्नादन्येषां न दिशति मुकुन्दो निजपदं
प्रपन्नश्च द्वेधा सुचरितपरीपाकभिदया ।
विलम्बेन प्राप्तिर्भजनसुखमेकस्य विपुलं
परस्याऽऽशु प्राप्तिः परिमितरसा जीवितदशा ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे अधिकारिविभागाधिकारोऽष्टमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

—o—o—

श्रीः

## उपायविभागाधिकारः

उपायः स्वप्राप्तेरुपनिषदधीतः स भगवान्
प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती ।
तदारोहः पुंसः सुकृतपरिपाकेन महता
निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः ॥

(उपायोपेयनिरूपणम्)

एषां कर्तव्य उपायस्तावत्—कश्चित् ज्ञानविकासविशेषः। अनेन साध्यः प्राप्तिरूप उपेयश्च तावत्—कश्चित ज्ञानविकासविशेषः। एतयोरुपायभूतो ज्ञानविकासविशेषः करणसापेक्षः शास्त्रविहितः सत्यत्वादिस्वरूपनिरूपकधर्मपञ्चकसंवलित-तत्तद्विद्याविशेषप्रतिनियतगुणादिनियतब्रह्मविषयश्च भवति। उपेयभूतो ज्ञानविकासविशेषः करणनिरपेक्षः स्वभावप्राप्तो गुणविभूत्यादिसर्वपरिपूर्णब्रह्मविषयो भवति।

उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया।

सा तत्क्रतुनयग्राह्या नाऽऽकारान्तरवर्जनम्॥

प्राप्तिरूपस्यानुभवस्य परीवाहात्मना कैङ्कर्यमुपेयम्।

(भगवत उपायत्वोपेयत्वे)

अस्योपायरूपस्य प्राप्तिरूपस्य च ज्ञानस्य विषयभूतस्य सत ईश्वरस्य फलप्रदत्वभोग्यत्वादिवेषेणोपायत्वोपेयत्वे भवतः। इदमीश्वरस्योपायत्वमद्वारकप्रपत्तिनिष्ठविषये उपायान्तरस्याननिवेशेन विशिष्टं भवति। अधिकार्यन्तरविषयेऽपि कर्मयोगारम्भकालप्रभृतौ उपासनपूर्तिपर्यन्ते काले अन्तरालकर्तव्येष्वत्यन्ताशक्यविषयेषु एतत्प्रपत्तिवशीकृत ईश्वरः प्रविश्य स्थित्वा तैर्दुष्करकर्तव्यैः साध्यां पापनिवृत्तिं सत्त्वोन्मेषादीनि चोत्पाद्य तमुपासनरूपमुपायं फलपर्यन्तं करोति॥

(कर्मयोगनिरूपणम्)

तत्र **कर्मयोगो नाम**—शास्त्रेण जीवपरमात्मयाथात्म्यज्ञाने निष्पन्ने स्वशक्त्यैः फलसङ्गादिरहितैः काम्यकर्मभिः नित्यनैमित्तिकैश्च सह सनियमं परिगृहीतः कर्मविशेषः । तत्रावान्तरभेदाः, "[1] दैवमेवापरे यज्ञम्" इत्युपक्रम्य गीताः देवार्चन-तपस्तीर्थ-दान-यज्ञादयः । **अधिकारिभेदेन** प्रपत्तिः स्वयं भक्तिं द्वारीकृत्य अद्वारीकृत्य च यथा मोक्षहेतुर्भवति, तथाऽयं कर्मयोगो ज्ञानयोगं द्वारीकृत्याद्वारीकृत्य च सपरिकरयोगमुखेनाऽऽत्मावलोकनसाधनं भवति ॥

(ज्ञानयोगनिरूपणम्)

ज्ञानयोगो नाम–कर्मयोगोत्पन्नान्तःकरणजयेन पुंसा प्रकृत्यादिविलक्षणस्य, ईश्वरं प्रति आधेयत्वविधेयत्वशेषत्वैः शरीरतया प्रकारभूतस्य स्वस्वरूपस्य निरन्तरचिन्तनकरणम् । आभ्यां योगमुखेनाऽऽत्मावलोकने निष्पन्ने सति—वैषयिकसुखवैतृष्ण्यावहे आत्मानुभवसुखरूपे आकर्षके अनिमग्नश्चेत् (अलग्नश्चेत्), तर्हि परमपुरुषार्थभूतस्य भगवदनुभवस्योपाये भक्तियोगे प्रवृत्तस्य तदा, अन्तरस्थरत्नदर्शनार्थं वस्त्रग्रन्थिदर्शनवत्, अन्तर्यामिदर्शनार्थं तच्छरीरभूतजीवात्मदर्शनमुपयुक्तं भक्तियोगाधिकारकोटौ निविशते ॥

(भक्तियोगनिरूपणम्)

भक्तियोगो नाम—अनन्यनिष्ठ अनन्याधीन-अनन्यशेषभूतभगवत्स्वरूपादिविषयको निरतिशयप्रीतिरूपो ध्यानविशेषः। स च तैलधारावन्निरन्तरस्मृतिरूपः साक्षात्कारतुल्यवैशद्यवान्

परमपदप्रयाणदिवसपर्यन्तमहरहरनुष्ठानेन वर्धमानोऽन्तिमप्रत्ययावधिको ज्ञानसन्ततिविशेषः। अस्य वर्णाश्रमधर्माः ज्ञानविकासहेतुभूतसत्त्वविवृद्धिप्रतिबन्धकरजस्तमोमूलभूतपापनिबर्हणद्वारा इतिकर्तव्यता भवन्ति। अयं भक्तियोगः, "[2]प्रत्ययार्थं च मोक्षस्य सिद्धयः संप्रकीर्तिताः" इत्युक्तरीत्या दुर्बलचित्तानां विश्वासजननार्थविहितोपायनीत्या कामनाभेदेनैश्वर्यादीनां साधनं भवतीत्ययमर्थः, "[3]चतुर्विधा भजन्ते माम्" इति गीतः। तत्र "[4]तेषां ज्ञानी नित्ययुक्तः एकभक्तिर्विशिष्यते" इत्युपक्रम्य गीतं ज्ञानिनः समुत्कर्षम्, "[5]चतुर्विधा मम जना भक्ता एव हि ते स्मृताः। तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः॥ अहमेव गतिस्तेषां निराशीःकर्मकारिणाम्। ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः। सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्॥" इति स्वयमेव प्रकाशयामास।

### (परभक्तिपरज्ञानपरमभक्तिनिरूपणम्)

इत्थं मोक्षोपायत्वेन विहितो भक्तियोगः परभक्तिरित्यभ्यधायि। एतद्धेतुभूतः सात्त्विकपरिशीलनादिजनितो भगवद्विषये प्रीतिविशेषः, 'सर्वेश्वरो विशदं ज्ञातव्यः' इत्यभिनिवेशस्य कारणं सन् भक्तिरिति समाख्यायते। अनेन, "[6]शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इत्युक्तरीत्या शास्त्रजन्यतत्त्वज्ञान-कर्मयोगादिपरम्परया जाता परभक्तिः साक्षात्कर्तव्य इत्यभिनिवेशमुत्पाद्य, "[7]योगेश्वर ततो मे त्वं

दर्शयाऽऽत्मानमव्ययम्", "[8]दर्शनोपायमनुगृहाण", "एकस्मिन् दिने दर्शनार्थमागच्छ" इति विलापदशामापाद्य एतदपेक्षामात्रनिबन्धनेन **भगवत्प्रसादविशेषेण** तत्कालनियतं परिपूर्णं साक्षात्कार-मुत्पादयति । एष साक्षात्कारः **परज्ञान**मित्यभ्यधायि । इत्थं **निरतिशयभोग्यभगवत्स्वरूपसाक्षात्कार**समनन्तरमेव अतिताप-श्रमार्तस्य जलाशयदर्शनेनेव जातः **प्रीत्यतिशयः परमभक्तिः** । इयं "मुने चतुर्मुख" इति दशकोक्तरीत्या असंकुचितानुभवमन्तराऽऽत्म-धारणस्याशक्यतामापादयन्तमभिनिवेशमुत्पाद्य अप्रत्याख्येयलक्ष्मीविषयक-शपथपूर्वं सनिर्बन्धाह्वानसाधनात् अस्य झटिति स्वप्राप्तिदानार्थं सर्वेश्वरस्य त्वरातिशयमुत्पाद्य एनमभिनिवेशोपशमनेन मोक्षं प्रापयति ।

(प्रपत्तेः परभक्तिस्थानापन्नत्वम्)

अयं भक्तियोगस्त्रैवर्णिकेतरेषाम्, **त्रैवर्णिकेष्वपि ज्ञानतः शक्तित उभयतोऽपि** वा न्यूनतावताम् **फलविलम्ब**सहनानिच्छापादक-तीव्रसंवेगवतां चायोग्य इति स्वस्थितीः विशदं विज्ञाय अद्वारकतया **प्रपत्तिं मोक्षोपायत्वेन** परिगृह्णतां विषये सर्वफलसाधनभूतायाः **प्रपत्तेः परभक्तिस्थाने** चोदितत्वात् उपासकस्य परभक्तेः परस्ताज्जायमाना अवस्था इव, अस्य स्वतन्त्रप्रपत्तिनिष्ठस्य प्रार्थनानुगुणमेतत्प्रपत्त्यनन्तरं जायमाना अनुकूलावस्था अस्याः फलभूताः ॥

---

| | |
|---|---|
| काणुमारुल्लेय् | तिरुवाय्-8-1-1 |
| ओरु नाळ् काणवाराय् | ,, 6-9-4 |
| मुनिये ! नान्मुकने ! | ,, 10-10-1 |

(भक्तिप्रपत्त्योर्विकल्पभेदादिनिरूपणम्)

इत्थं भक्तिप्रपत्त्योरधिकारिविशेषं प्रति तुल्यफलत्वात् विकल्पो भवति। एतयोः "[11]नाना शब्दादिभेदात्" इत्यधिकरणे भेदः सिद्धः; "[12]विकल्पोऽविशिष्टफलत्वात्" इत्यधिकरणे विकल्पः सिद्धः। उपासने विशेषा इव शाखाभेदेषु भगवच्छास्त्रसंहिताभेदेषु च प्रतिपाद्यमानाः न्यासविद्यायां मन्त्रादिविशेषा द्रष्टव्याः।

नमस्कारे वाचिकमानसकायिकविभागवत् प्रपत्तावपि एकैकं पुरस्कृत्येमे विभागा उक्ताः। एषां त्रयाणां समवाये पूर्णनमस्कारवत् पूर्णप्रपत्तिर्भवतीति प्रतिपादयतां वाचामपि वाचिककायिकव्यापारविशेषौ परीवाहयन्त्याः मानसप्रपत्तेः पूर्तौ तात्पर्यं ग्राह्यम्। यथाधिकारमेते सर्वेऽपि (विभागाः) फलप्रदा इत्येतमर्थं पूर्वमेवावोचाम ॥

(अधिकारार्थसंग्राहिका गाथा)

(गाथा) सिद्धस्वाधिकारानुरूपतया स्थितं कर्म, सूक्ष्मबुद्ध्या समीचीनमिति अन्विष्टं ज्ञानम्, सुखमयान्तर्दृष्टि वहद्भिरैदम्पर्यपरिगृहीतां भक्तिम्, अकिञ्चनानां त्वरमाणानां भगवत्कृपया तत्काल एव फलप्रदमुपायं च विजानन्तो ब्राह्मणाः ॥

---

निन्ऱनिलैक्कुर निर्कुङ्करुममुं नेर्मतियाल्
नन्ऱेन नाडिय ज्ञानमुं नल्हुमुट्कण्णुडैयार्
ओन्ऱिय पत्तियुमोन्ऱुमिलोविरैवार्करुलाल्
अन्ऱु पयन् तरुमारुमरिन्दवरन्दणरे ॥

कर्म ज्ञानमुपासनं च शरणव्रज्येति चावस्थितान्
सन्मार्गान् अपवर्गसाधनविधौ सद्वारकाद्वारकान् ।
एकद्व्याकृतियोगसंभृतपृथग्भावानुभावानिमान्
सम्यक् प्रेक्ष्य शरण्यसारथिगिरामन्ते रमन्ते बुधाः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे उपायविभागाधिकारो नवमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

—o—c—

श्रीः

## प्रपत्तियोग्याधिकारः

अर्थित्वेन समर्थता त्रिकतनुः संपिण्डिताऽधिक्रिया
सा चाष्टाङ्गषडङ्गयोगनियतावस्था व्यवस्थापिता ।
श्रौती सर्वशरण्यता भगवतः स्मृत्याऽपि सत्यापिता
सत्यादिष्विव नैगमेष्वधिकृतिः सर्वास्पदे सत्पथे ॥

इत्थमभिमतफलार्थमुपायान्तरनिस्स्पृहेण न्यासविद्यायां प्रवर्तमानेन अस्या विद्याया अधिकारविशेषादिकं यथावद्वेदितव्यम् ।

(सामान्यतः अधिकारनिरूपणम्)

अधिकारो नाम तत्तत्फलोपायेषु प्रवर्तमानस्य पुरुषस्य फलेऽर्थित्वम् उपाये सामर्थ्यञ्च। अत्र सामर्थ्यं नाम—शास्त्रार्थस्य ज्ञानं यथाज्ञानमनुष्ठाने शक्तिः शास्त्रानुमतजातिगुणादियोग्यता च। अयमधिकारः पूर्वमेव सिद्धो भवति।

एतद्वतः प्रयोजनं सत् साध्यत्वेनानूद्यमानं यत्, तत् फलम्। तदर्थं साध्यत्वेन विधीयमानोऽर्थः उपायः।

अत्र मुमुक्षुत्वे संपन्ने स्वतन्त्रप्रपत्तिरूपोपायविशेषनिष्ठस्य शास्त्रजन्यसम्बन्धज्ञानादिषु उपासकसाधारणेषु सत्सु विशिष्यमाणोऽधिकारः स्वस्याऽऽकिञ्चन्यमनन्यगतित्वं च। आकिञ्चन्यं नाम—उपायान्तरसामर्थ्याभावः। अनन्यगतित्वं नाम—प्रयोजनान्तरवैमुख्यम्। शरण्यान्तरवैमुख्यं वा; इदं प्रयोजनान्तरवैमुख्येनाप्यर्थसिद्धम्। अयमर्थः, "[1]ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः। प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम्॥" इत्यादिषु द्रष्टव्यः। तीव्रतमं मुमुक्षुत्वमन्तरा देहानुवृत्त्यादिप्रयोजनान्तरसक्तो मोक्षार्थं प्रपत्तिं परिगृहीतवांश्चेत्, तत्तत्प्रयोजनान्तरावध्यनुरोधेन मोक्षो विलम्बेत।

(प्रपत्त्यधिकारस्य निबन्धनम्)

अस्याऽऽकिञ्चन्यस्यानन्यगतित्वस्य च निबन्धनमुपायान्तरेष्वस्याधिकारिणोऽज्ञानाशक्ती फलविलम्बासहत्वं च। अत्र शरण्यान्तरवैमुख्यस्य निबन्धनम्, "[2]यथा वायोस्तृणाग्राणि

वशं यान्ति बलीयसः । धातुरेवं वशं यान्ति सर्वभूतानि भारत" इत्युक्तरीत्या स्वपरसाधारणस्य भगवदेकपारतन्त्र्यस्याध्यवसायः प्रयोजनान्तरवैमुख्यं च ॥

(तत्र प्रमाणम्)

अयं प्रपत्त्यधिकारविशेषः, "[3]स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः ॥", "[4]अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः", "[5]अकिञ्चनोऽनन्यगतिः शरण्य" "[6]अनागतानन्तकालसमीक्षयाऽप्यदृष्टसन्तारोपायः" "[7]तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः", "[8]शरणान्तरशून्यो दासोऽहम्" इत्येवमादिप्रमाणसंप्रदायाभ्यां सिद्धः । एतावत्यधिकारे लब्धे प्रपत्तेर्जात्यादिनियमाभावात् सर्वाधिकारत्वं सिद्धम् ॥

(अधिकारार्थसंग्राहिका गाथा)

(गाथा) ब्राह्मणान्त्यजावध्यन्तर्गताः (आब्राह्मणात् आ चान्त्यजात् स्थिताः) सर्वे लोका शोकाविष्टत्वरूपमुख्याधिकारेण, कृशाः अनन्या भूत्वा एत्य यथा आश्रयेयुः, तथा भक्ताः सुदृढकृपां धृत्वा प्रयस्यन्तमस्मदीयमनन्तमादिं विदित्वा उपदिदिशुः ॥

---

पुहलोन्रिलाविडियेन्-तिरुवाय्-6-10-10

अन्दणरन्दियरेल्लैयिल् निन्र अनैत्तुलहुम्
नोन्दवरे मुदलाक नुडङ्कि यनन्नियराय्
वन्दडैयुम् वहै वन्तहवेन्दिवरुन्दिय नम्
अन्दमिलादियै यन्बररिन्दरिवित्तनरे ॥

भक्त्यादौ शक्त्यभावः प्रमितिरहितता शास्त्रतः पर्युदासः
कालक्षेपाक्षमत्वं त्विति नियतिवशादापतद्भिश्चतुर्भिः ।
एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियाः संश्रयन्ते
सन्तः श्रीशं स्वतन्त्रप्रपदनविधिना मुक्तये निर्विशङ्काः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
प्रपत्तियोग्याधिकारो दशमः

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## परिकरविभागाधिकारः

इयानित्थम्भूतः सकृदयमवश्म्भवनवान्
दयादिव्याम्भोधौ जगदखिलमन्तर्यमयति ।
भवध्वंसोद्युक्ते भगवति भरन्यासवपुषः
प्रपत्तेरादिष्टः परिकरविशेषः श्रुतिमुखैः ॥

(न्यासविद्यापरिकरः)

अस्यां विद्यायाः परिकरस्तावत्—आनुकूल्यसंकल्पः प्रातिकूल्यवर्जनं कार्पण्यं महाविश्वासो गोप्तृत्ववरणं च ।

अत्र "[1]आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः" इत्यादिषूच्यमानं षाड्विध्यमपि अष्टाङ्गयोग-व्यवहारवत् अङ्गाङ्गिसमुच्चयनिबन्धनमित्ययमर्थः, एषु किञ्चिदेक-मेवाङ्गि इतराणि अङ्गानीत्ययमर्थश्च, "[2]निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः । संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि" इति श्लोकेन न्यायनिरपेक्षं सिद्धौ ।

(मुमुक्षुभरन्यासे फलत्यागरूपाङ्गान्तरम्)

अत्र, "[3]शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् । पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यथा । इत्यङ्गमुदितं श्रेष्ठं फलेप्सा तद्विरोधिनी ॥" इत्यहिर्बुध्न्योक्तं फलत्यागरूपाङ्गान्तरं मोक्षार्थे आत्मनिक्षेपे नियतम् ॥ फलसङ्गकर्तृत्वादित्यागस्य कर्मयोग-प्रभृतिषु निवृत्तिधर्मेषु सर्वेषु अनुवृत्तेः एतदनुसंधानं मुमुक्षोः साङ्गसमर्पणदशायां कर्तव्यम् ।

(आनुकूल्यसंकल्पाद्यङ्गानां निबन्धनं फलञ्च)

अत्र परिकरभूतेष्वानुकूल्यसंकल्पप्रतिकूल्यवर्जनयोर्नि-बन्धनं सर्वशेषिणः श्रियः पत्युर्विषये प्रवृत्तिनिवृत्तिभ्यामभि-मतानुवर्तनस्य कर्तव्यतायाः प्रयोजकमेतद्गतं पारार्थ्यज्ञानम् । एतेन, "[4]आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः" इत्युक्तरीत्या अपाय-परिहारः सिद्धः ।

कार्पण्यं तावत् पूर्वोक्तस्याऽऽकिञ्चन्यादेरनुसन्धानरूपं वा तन्निबन्धनगर्वहानिरूपं वा कृपाजनककृपणवृत्तिरूपं वा भवत् शरण्यकारुण्योत्तम्भनार्थं च सत् "[5]कार्पण्येनाप्युपायानां विनिवृत्तिरिहेरिता" इत्युक्तरीत्या पश्चादप्यनन्योपायताया उपयुक्तं भवति ।

महाविश्वासः, "[6]रक्षिष्यतीतिविश्वासादभीष्टोपायकल्पनम्" इत्युक्तरीत्या सहायान्तरनिरपेक्षानुष्ठानसिद्ध्यर्थः सन् पश्चात् निर्भरताया अपि प्रयोजको भवति ।

स्वरूपानुचितपुरुषार्थवत् स्वरूपप्राप्तोऽपवर्गोऽपि पुरुषार्थत्वात् पुरुषेणार्थितत्वे सत्येव दातव्य इत्यतोऽत्र गोप्तृत्ववरणमप्यपेक्षितम् । समीचीनमपि कञ्चिदर्थं पुरुषेऽर्थ्यमाने सत्येव ददातीत्यस्याभावे हि न पुरुषार्थं दत्तवान् स्यात् । अत एव हि "[7]अप्रार्थितो न गोपायेत्" इति, "[8]गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनम्" इति चोच्यते ।

इत्थमिमानि पञ्चापि एतद्विद्यानुष्ठानकाले उपयुक्तानीति इमानि अस्यात्मनिक्षेपस्याविनाभूतस्वभावानि ।

(एषां प्रपत्त्यविनाभावस्य त्रिजटाविभीषणशरणागत्योः प्रदर्शनम्)

अयमर्थः श्रीजानकीं शरणत्वेन वरीतुमागच्छतेति सात्त्विकप्रकृतिकया त्रिजटया राक्षसीः प्रति उच्यमाने वाक्येऽपि सुदर्शः । "[9]तदलं क्रूरवाक्यैर्वः" इति प्रातिकूल्यवर्जनमभ्यधायि । "[10]सान्त्वमेवाभिधीयताम्" इत्युक्तेः, मनःपूर्वकत्वमन्तरा वाक्प्रवृत्तेरसंभवात् आनुकूल्यसंकल्पाकर्षणं फलितम् । "[11]राघवाद्धि भयं घोरं राक्ष-

सानामुपस्थितम्" इत्यनन्यगतिकत्वावस्थायाः प्रतिपादनादधिकार भूतमाकिञ्चन्यम्, तदनुसन्धानमुखेन प्राप्तं गर्वहान्यादिरूपमङ्गभूत-कार्पण्यं चाभिहितं भवति। "[12]अलमेषा परित्रातुं राक्षस्यो महतो भयात्" इत्युक्तेः, एतद्विवरणतया "[13]अलमेषा परित्रातुं राघवाद्राक्ष-सीगणम्" इति श्रीहनूमताऽनुवादाच्च भगवति कंचिन्निजिघृक्षत्यपि तत्क्रोधं प्रशमय्येयं रक्षणे समर्थेति, रक्षिष्यतीति विश्वासोऽभ्यधायि।" "[14]अभियाचाम वैदेहीमेतद्धि मम रोचते" "[15]भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया" इत्युक्त्या गोप्तृत्ववरणमभ्यधायि। एषां पञ्चानामप्यङ्गिभूत आत्मनिक्षेपः, "[16]प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा" इति प्रसादकारणविशेषप्रतिपादकेन प्रणिपात-शब्देन विवक्षितः सिद्धः। अतः, "[17]न्यासः पञ्चाङ्गसंयुतः" इति शास्त्रार्थोऽत्र पूर्णः।

इत्थमुपदिष्टे सति राक्षसीनामनिवारणमेवोपघ्नीकृत्य श्रीजानकी स्वकीयवात्सल्यातिशयेन, "[18]भवेयं शरणं हि वः" इत्यनुजग्राह। अस्य वाक्यस्य सहृदयतां फलपर्यन्ततां च "मातर्मैथिलि राक्षसीस्त्वयि तथैवाऽऽर्द्रापराधास्त्वया रक्षन्त्या पवनात्मजाल्लघुतरा रामस्य गोष्ठी कृता" इत्यभियुक्ताः प्रकाशयामासुः। अत्र त्रिजटाया आत्मात्मीयसमर्पणे तस्या औत्पत्तिकसंबन्धात् अस्मदीया इति कटाक्षस्य विषयभूता राक्षस्योऽप्यन्तर्भूताः।

एवमेव श्रीविभीषणेन सहाऽऽगताश्चत्वारो राक्षसा अपि तदीयोपायेऽन्तर्भूताः। तत्रत्ये अभयप्रदानप्रकरणेऽप्ययमङ्गाङ्गिवर्गः

अन्तर्गमयितुं शक्यः । कथमिति चेत्—प्रातिकूल्ये व्यवस्थितस्य रावणस्यापि, "प्रदीयतां[20] दाशरथाय मैथिली", "[21]सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः" इति हितवचनात् आनुकूल्यसंकल्पः सिद्धः । इदं हितवचनं पित्तोपहतस्य तिक्ततयाभासमानं क्षीरमिव तस्योद्वेगहेतुः समपद्यत । "[22]त्वां तु धिक् कुलपांसनम्" इति धिक्कारे कृते सति, इतः परमस्मै नोपदेशो युक्तः, एतेनानुबद्धा विभूतयोऽपि नोचिताः, एतदधिष्ठितस्थाने निवासोऽपि न युक्त इति निश्चित्य "[23]त्यक्त्वा पुत्रांश्च दारांश्च", "[24]परित्यक्ता मया लङ्का मित्राणि च धनानि च" इति स्ववाक्योक्तरीत्या तत्रत्यसंबन्धविच्छेदेनावस्थानात् प्रातिकूल्यवर्जनाभिसन्धिः सिद्धः । "[25]रावणो नाम दुर्वृत्तः" इत्यारभ्य सर्वजिताराावणेन सह विरोधात् स्वस्यागतिकतयाऽवस्थितेर्वर्णनेन, पश्चादपि "[26]अनुजो रावणस्याहं तेन चास्म्यवमानितः । भवन्तं सर्वभूतानां शरण्यं शरणं गतः ॥" इत्युक्त्या च कार्पण्यं प्रत्यपादि । निर्भयमागत्योपसृत्य, "[27]सर्वलोकशरण्याय राघवाय महात्मने ।" इत्येवं प्रार्थनस्य प्रयोजको महाविश्वासः, "[28]विभीषणो महाप्राज्ञः" इति कारणमुखेन प्रत्यपादि । प्राज्ञताविशेषकेन महच्छब्देन विश्वासातिशय एव विवक्षित इति वा । "[29]राघवं शरणं गतः" इत्युक्त्या उपायवरणान्तर्नीतं गोप्तृत्ववरणमुक्तं भवति । उपायवरणशब्देन व्यञ्जितत्वमात्रातिरेकेण, "[30]निवेदयत मां क्षिप्रं विभीषणमुपस्थितम्" इत्युक्त्या घटकपुरस्सर आत्मनिक्षेपः प्रतिपादितो भवति । अस्मिन् प्रकरणे निवेदनशब्दो विज्ञापनमात्रपरत्वे निष्प्रयोजनः ।

इत्थमन्यान्येषु प्रपत्तिप्रकरणेषु लौकिकद्रव्यनिक्षेपेषु च संक्षेपविस्तरप्रक्रियया इमेऽर्थाः सुदर्शाः। स्वेन रक्षितुमशक्यस्य कस्यचिद्वस्तुनः रक्षणसमर्थस्य कस्यचित् सन्निधौ समर्पणावसरे स्वयं तद्विषये अनुकूलाभिसन्धिमान् भूत्वा, प्रतिकूलाभिसन्धिं हित्वा, अयं रक्षणसमर्थः, अपेक्षायां कृतायां रक्षणं कुर्याच्चेति विश्वस्य, स्वस्य रक्षणासामर्थ्यं विनिवेद्य त्वया संरक्षितव्यमिति प्रार्थ्य, रक्ष्यवस्तु तत्सन्निधौ समर्प्य स्वयं निर्भरः निर्भयमुरसि हस्तं निधाय शयित्वा स्वपितीत्येतद्व्यक्षयामः किल।

(आनुकूल्यसंकल्पादेर्द्वयेऽनुसन्धानस्थलप्रदर्शनम्)

एवं नियतमिदं सर्वं क्रियमाणार्थप्रकाशके द्वयाख्यमन्त्रे कथमनुसन्धेयमिति चेत्—सार्वज्ञ्यसर्वशक्तियुक्तस्य कर्मानुरूपफलप्रदस्य सर्वोपकारनिरपेक्षस्य क्षुद्रदेवतावत् क्षिप्रकारित्वमन्तरा वर्तमानस्य समाधिकदरिद्रस्य सर्वेश्वरस्य अनन्तापराधवद्भिरभिगन्तव्यत्वम्, प्राप्तिविरोध्यनन्तापराधवद्भ्योऽपरिमितफलदातृत्वम्, अल्पव्यापारस्य कृते दानम्, अविलम्बेन दानम्, तारतम्यानादरेण दानं च कथं घटेरन् इति शङ्कानां निवर्तकान् यथासंभवमुपायत्वप्राप्यत्वोपयुक्ततया स्थितान् पुरुषकारसंबन्धगुणव्यापारप्रयोजनविशेषरूपान् शेषिण आकारान् गर्भीकुर्वति श्रीमच्छब्दे नारायणशब्दे च आर्थतयाऽऽनुकूल्यसंकल्पः प्रातिकूल्यवर्जनं चानुसन्धेये भवितुमर्हतः। एवं विशिष्टं स्वामिनं प्रकाशयन्तौ शब्दौ औचित्यात् तद्विषये आप्तमभिमतानुवर्तनसंकल्पम् अनभिमतनिवर्तनं च प्रकाशयतः।

एषां पुरुषकारादीनां पञ्चानां विशेषास्तावत्—अप्रत्याख्येयत्वं नाशयितुमशक्यत्वं निरुपाधिकत्वं सहकारिप्रतीक्षाराहित्यम् अतिनीचानां परेषां पुरुषार्थस्यैव स्वपुरुषार्थत्वं चेति (यथासंख्यम्)।

(महाविश्वासविरोधिपूर्वोक्तशङ्कापरिहारप्रकारः)

एभिः पञ्चभिर्विशेषैः **शंकापरिहारः** कथं जात इति चेत्—**सर्वज्ञः सर्वशक्तिश्च** सन्नपि अप्रत्याख्येयपुरुषकारविशेषेण अन्तःपुरपरिजनविषय इव अभिगन्तव्यताविरोध्यनन्तापराधान् क्षमित्वा, एषां विषये 'अविज्ञाता' इति वर्णनार्हतयाऽवस्थितोऽभिगन्तव्यो भवति। **कर्मानुरूपफलप्रदः** सन्नपि, अनेन **प्रपत्तिरूपव्याजेन प्रसन्नः** सन् स्वामित्वदासत्वसंबन्धोपाधिकतया दायवत् स्वतःप्राप्तमपरिमितं फलं ददीत। **अवाप्तसमस्तकामत्वात्सर्वोपकारनिरपेक्षः** सन्नपि, **अल्पव्याजवशीकार्यसुजनसार्वभौमवत्** स्वकीयनिरुपाधिककारुण्यादिभिः एतत्कृतं क्षुद्रव्यापारमपि स्वस्य **परमोपकारतयाऽऽद्रियमाणः** सन् **कृतज्ञः कार्यं** कुर्वीत। क्षुद्रदेवतावत् क्षिप्रकारी अभवन्नपि, इतरेषां शास्त्रार्थानां विलम्बेन फलं ददानोऽपि, **अनन्यशरणस्य प्रपत्तेः, औदार्यादिगुणसहितेन सहकार्यन्तरनिरपेक्षेण स्वसंकल्पमात्रेण काकविभीषणादिभ्य** इव एतदुद्दिष्टकाले, अपेक्षितं ददीत। **समाधिकदरिद्रः** सन्नपि, यतः **स्वातन्त्र्यादिगुणविशिष्टः** स्वप्रयोजनतयाऽऽश्रितानामपेक्षितं साधयति अतः, कोसलजनपदस्थितजन्तुभ्य इव, **कुमारेण** सह **तिरश्चे** शुकाय क्षीरप्रदानन्यायेन तारतम्यमनवलोकयन् ददीत। इत्थं **यथालोकं** जातानां शङ्कानां **यथालोकं** परिहाराणां सत्त्वात् **यथाशास्त्रं** प्रपत्तेरपेक्षितसाधनत्वे न कापि हानिः।

(महाविश्वासासंभवतत्संभवोपपादनम्)

इदं विशिष्टं पुरुषकारादिपञ्चकं सदाचार्यकटाक्षविशेषात् प्रबुद्धवन्तं विनाऽन्यस्य महाविश्वासो नोदियात् । कथमिति चेत्—ईश्वरस्यानभिमुखत्वात् कर्मयोगाद्यनर्हतापादकमहापराधान् कृतवतः, "[31]धिगशुचिमविनीतम्" इति श्लोकोक्तरीत्या सुदुर्लभफलप्रेप्साजनकं चापलमावहतः, एतत्फलार्थमनुष्ठेयतया प्रसक्तं साधनं कायक्लेश-अर्थव्यय-कालदैर्घ्यादिषु यत्किञ्चिदेकमप्यनपेक्षमाणमेकलं सकृदनुसन्धानं वा समुदायज्ञानपूर्वकसकृदुक्तिमात्रं वेति अनेन लघुतरोपायेन तस्य गुरुतरस्य फलस्य स्वोद्दिष्टकाले प्राप्तिं कामयित्वा एतस्य फलस्य "शुनामिव पुरोडाशः[32]" इति रीत्या जन्मवृत्तादिभिः वस्तुतः स्वयमनर्हं इति ज्ञातवतः कस्यचित् "सानुबन्धिकेन स्वेनायं पुरुषार्थः प्राप्स्यते" इति महाविश्वासोत्पत्तौ दौर्लभ्यमभिसन्धाय, "आढकद्वादशकतिलभारस्थाने तावत्तैलमासीत् (मापन्नम्)" इति श्रीगोविन्दाचार्योऽनुजग्राह किल। अत्र सर्वेश्वरस्य परत्वमात्रं बुध्वा दूरीभवनेन नराधम इति संज्ञां प्राप्तवन्तं जातनष्टमपेक्ष्य गोपिकावत् विवेकाभावेऽपि सौलभ्यं ज्ञात्वा तादृशकल्याणगुणकमेकं (भगवन्तं) यः समाश्रयति, स एव परमास्तिक इति श्रीवाहिहंसाम्बुदाचार्यानुगृहीता सूक्तिः ।

(महाविश्वासादीनां द्वयमन्त्रेऽनुसन्धानप्रदेशनिरूपणम्)

इत्थं पुरुषकारादिज्ञानेन निष्पन्नं विश्वासमहत्त्वं विश्वासस्वरूपं कार्पण्यं च, "प्रपद्ये" इति क्रियापदोपसर्गे,

शरणशब्दोपश्लिष्टे धातौ, उत्तमे चानुसन्धेयानि । अत्रोत्तमे विवक्षितमर्थम् "अनन्यशरण:" इति गद्ये व्याचचक्षे । अत्रोपायत्वाध्यवसायवाचकशब्दे गोप्तृत्ववरणमन्तर्नीतम् । "[33]अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः", "त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ॥" इति, "[34]उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् । वर्तते सांप्रतं त्वेष उपायार्थैकवाचकः ॥" इति चोक्तरीत्या उपायान्तराशक्तस्य सर्वेश्वरः सर्वशास्त्रार्थसाधारणे रक्षकत्वमात्रेऽनवस्थाय, स्वीकृतभरः सन् उपायान्तरस्थानेऽपि निविशते इत्यतोऽपि, न्यस्तभरस्यास्याधिकारिणः पश्चात्कालेऽप्यनन्योपायत्वदार्ढ्यार्थञ्च उपायत्वाध्यवसायोऽत्र विवक्षितो भवति । उपायशब्दार्थस्य साधनविशेषमात्ररूपत्वेनास्योपायत्वस्य चेतनाचेतनसाधारणत्वात्, "[35]रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा" इति, "[36]सर्वज्ञोऽपि च विश्वेशः सदा कारुणिकोऽपि सन् । संसारतन्त्रवाहित्वात् रक्षापेक्षां प्रतीक्षते ॥" इति चोक्तरीत्या चेतनैकान्तस्य गोप्तृत्ववरणस्यानुसन्धेयत्वात् गोप्तृत्ववरणमत्र विवक्षितम् । तत्र शरणशब्देन एकस्मिन् प्रयोगेऽर्थद्वयाभिधानस्याशक्यत्वात् अस्याधिकारिणोऽसाधारण उपायत्वाध्यवसायोऽत्र शब्दः, सर्वाधिकारिसाधारणं गोप्तृत्ववरणं च आर्थमिति भवितुमर्हति ॥

(अधिकारार्थसंग्राहिका गाथा)

(गाथा) बोधयामासुः स्नेहवन्तः सन्देहहेतुभूतोपायाभावरूप-दारिद्र्यदुःखे सहायभूतस्य परस्य वरणप्रकारम्, संबन्धस्वरूपांशेना-नापि विनाभूतानां सदृशा इति स्थितानां देवानां सविधे अस्माकं जन्मात्मकंदुःखं नाशयतेत्येवं याचनरूपोऽपराधो यथा न भवेत् तथा ॥

**प्रख्यातः पञ्चषाङ्गः सकृदिति भगवच्छासनैरेष योगः**
**तत्र द्वाभ्यामपायाद्विरतिरनितरोपायतैकेन बोध्या ।**
**एकेन स्वान्तदार्ढ्यं निजभरविषयेऽन्येन तत्साध्यतेच्छा**
**तत्त्वज्ञानप्रयुक्ता त्विह सपरिकरे तादधीन्यादिबुद्धिः ॥**

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
परिकरविभागाधिकार एकादशः

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

सरिवित्तनरन्वर एयम्परेग्गुमुपायमिल्लात्
तुरवित्तनियिर्ट्टरुणैयाम् परनै वरिक्कुम् पहै
उरवित्तनैयित्रि योत्तारेन नित्र वुम्बर् नाम्
पिरवित्तुयर् शेकुप्पीरेत्रिरक्कुम् पिडैयरवे.

श्रीः

## साङ्गप्रपदनाधिकारः १२

अभीष्टे दुस्साधे स्वत इतरतो वा क्वचन तद्-
भरन्यासं याञ्चान्वितमभिवदन्ति प्रपदनम् ।
इतः पश्चादस्मद्यतननिरपेक्षेण भवता
समर्थ्योऽसावर्थस्त्विति मतिविशेषं तदविदुः ॥

(मुमुक्षुसाधारणाङ्गिस्वरूपनिरूपणम्)

मुमुक्षोरधिकारिणोऽस्मिन्नुपायेऽङ्गिस्वरूपं तावत्—**आभरणस्य तत्स्वामिने तेनैव रक्षणपूर्वकधार्यत्वार्थं प्रदानवत् यथावस्थित** आत्मनिक्षेपः । स च **प्रणवे प्रथमाक्षरे प्रकृतिप्रत्ययाभ्यां सर्वरक्षकत्वेन सर्वशेषित्वेन** च प्रतीतं **सर्वेश्वरं** प्रति—**आत्मात्मीयरक्षणव्यापारे आत्मात्मीयरक्षणफले च स्वाधीनतया स्वार्थतया** च स्वस्यान्वयो यथा न स्यात् तथा **भरन्यासप्रधानोऽत्यन्तपारतन्त्र्यविशिष्टशेषत्वानुसन्धानविशेषः** ॥

(अङ्गिस्वरूपानुष्ठानप्रकारः)

"[1]स्वात्मानं मयि निक्षिपेत्" इति **चोदितस्यानुसन्धान**विशेषस्यानुष्ठानप्रकारस्तावत्—**शेषिणा स्वतन्त्रेणेश्वरेण स्वप्रयोजनार्थं** स्वयंरक्षणानुगुणतयाऽनन्यार्हानन्याधीनशेषत्वात्यन्तपारतन्त्र्य-

चानहम् "[2]आत्मापि चायं न मम" इत्युक्तरीत्या मम शेषी नास्मि; किमपि निरुपाधिकतया मदीयमित्यनुसन्धातुमपि नार्होऽस्मि; "[3]स्वयं मृत्पिण्ड-भूतस्य परतन्त्रस्य देहिनः। स्वरक्षणेऽप्यशक्तस्य को हेतुः पररक्षणे॥" इत्युक्तरीत्या मां मदीयत्वेन प्रसिद्धं च अहं स्वतन्त्रः प्रधानफली च सन् रक्षितुं नार्होऽस्मि; "[4]आत्मा राज्यं धनं चैव कलत्रं वाहनानि च। एतत् भगवते सर्वमिति तत्प्रेक्षितं सदा" इति विवेचयनुसंहितक्रमेण मदीयानि आत्मात्मीयान्यपि तदीयान्येव; "[5]आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते" इत्युक्तेरेषां रक्षणभरोऽपि, "[6]न हि पालन-सामर्थ्यम् ऋते सर्वेश्वरं हरिम्" इत्युक्तरीत्या सर्वरक्षकस्य तस्यैव; "[7]तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता। केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते" इत्युक्तरीत्या रक्षणफलमपि प्रधानफलिनस्तस्यैवेति भावनम्।

(मुमुक्षुबुभुक्षुसमर्पणयोर्विशेषः)

**मुमुक्षुमात्रसामान्यं स्वरूपादिसमर्पणम्।**
**अकिञ्चने भरन्यासस्त्वधिकोऽङ्गितया स्थितः॥**
**अत्र रक्षाभरन्यासः समः सर्वफलार्थिनाम्।**
**स्वरूपफलनिक्षेपस्त्वधिको मोक्षकाङ्क्षिणाम्॥**

(ईश्वरस्य प्रधानफलित्वम्)

फलार्थिनि उपायानुष्ठातरि जीवे फलिनि विद्यमाने सति ईश्वरोऽत्र प्रधानफली कथं भवतीति चेत्—अचितः परिणामा इव चिद्भ्यः स्वेन प्रत्ताः पुरुषार्था अपि सर्वशेषिणं स्वं नन्दयन्तीति हेतोरीश्वरः प्रधानफली संपद्यते। **अचेतनायाः प्रतिमाया अवस्थापरि-**

वर्तनेन आभरणधारणाधानेन च तत्सौन्दर्यस्य दर्शनेन नन्दने, चेतनस्य शुकस्य पञ्जरे निधानपूर्वं क्षीरदानेन स्वैरं बहुलं सञ्चारणेन च तदीयानन्दस्य दर्शनेन नन्दने च नास्ति किल तारतम्यं निरपेक्षाणां रसिकानाम् ॥ अतोऽत्र—

**स्वनिर्भरत्वपर्यन्तरक्षकैकार्थ्यभावनम् ।**
**त्यक्तरक्षाफलस्वाम्यं रक्ष्यस्याऽऽत्मसमर्पणम् ॥**

(श्रीयामुनाचार्यसूक्त्यर्थतत्त्वम्)

**स्तोत्रे,** "[8]वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविधः । तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः ॥" इत्यस्य किं तात्पर्यमिति चेत्—कृतमुद्रायां राज्ञो भूषणनीव्यां केनचिद्धेतुना स्वहस्तगतायां सत्याम्, राजा स्वीकुर्यादिति (धिया) अन्तःस्थितमाणिक्यस्य स्वरूपस्वभावौ विशदमज्ञात्वाऽपि नीव्या सह (माणिक्यं) यथा पुनः प्रत्यर्प्यते, तथा **देहाद्यतिरिक्तस्यात्मनः स्वरूपस्वभावस्थिती** विशदं विवेक्तुमविजानद्भिरपि विद्यमानं ज्ञानमवलम्ब्याऽऽत्मसमर्पणे कृते सति, तावन्मात्रेणापि **अनादिकालकृतात्मापहारचौर्य**जनितो **भगवन्निग्रहः शाम्येदित्यस्मिन् शास्त्रार्थे** तात्पर्यम् । एतदग्रे, "[9]मम नाथ यदस्ति" इति **श्लोके** एतत्समर्पणविषयेऽनुशयकरणमपि—**स्वरूपादिविवेकं** विना समर्पणे प्रवृत्तावपि स्वकीयं द्रव्यं राज्ञे उपहारत्वेन ददान इव मदीयमित्यभिमानेन सह यदि समर्पयेत्, तर्हि आत्मापहारचौर्यमुन्मूलितं न भवतीत्येतज्ज्ञापनार्थम् । न तु **शास्त्रचोदितस्य** स्वानुष्ठितस्य समर्पणस्या**कृत्यत्वा**पादनार्थम् ।

तदेवं द्वाभ्यां श्लोकाभ्याम्—**यथावस्थितस्वरूपादिविवेके** असत्यपि, **न ममेति** स्वस्वसम्बन्धलवनमेव "[10]अहमपि तवैवास्मि हि भरः" इति वर्णनार्हभरसमर्पणप्रधाने **शास्त्रार्थे सार** इति सिद्धम् ।

(द्वयेऽङ्गिस्वरूपस्यानुसन्धानप्रदेशः)

इत्थं **शेषत्वानुसन्धानविशिष्टं स्वरक्षाभरसमर्पणं द्वये उपायपरे पूर्वखण्डे महाविश्वासपूर्वकगोप्तृत्ववरणगर्भशरणशब्दोपश्लिष्टक्रियापदे** समुच्चित्यानुसन्धातुं युक्तम् ।

इत्थमेषु षट्सु अस्मिन् **मन्त्रे विमर्शदशायां** पृथक् पृथगनुसंहितेषु सत्स्वपि **वाक्यार्थप्रतिपत्तिदशायामन्यान्यवाक्यार्थवत् साङ्गं** प्रधानमेकबुद्ध्यारूढं भवति । अतो **यथाशास्त्रं साङ्गप्रपदनानुष्ठानं सकृत्कर्तव्य**मिति सिद्धम् । **अनेकव्यापारसाध्यो धानुष्कस्य लक्ष्यवेधार्थो बाणमोक्षो** यथा क्षणकृत्यं (क्षणकालसाध्यो) भवति, तथेदमात्मरक्षाभरसमर्पणं भवतीति श्रुतिसिद्धम् ।

अस्य भरसमर्पणस्यैव **प्रपत्तिमन्त्रेषु प्राधान्येनानुसन्धेयताम्** "[11]अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति ॥" इति **सात्यकितन्त्रे भरस्वीकर्ता शरण्यः** स्वयं विशदमनुजग्राह ॥

(निष्कृष्टसाङ्गानुष्ठानस्वरूपनिरूपणम्)

अत्र साङ्गानुष्ठानतया निष्कृष्टं तावत्—**कर्तृत्वत्याग-ममतात्याग-फलत्याग-फलोपायत्वत्यागपूर्वकं आनुकूल्यसंकल्पाद्यर्थानुसन्धानेन** सह **गुरुपरम्परोपसत्तिपूर्वकद्वयवचनमुखेन स्वरूपफलन्यासगर्भात्मरक्षाभरसमर्पणकरणम्** ।

अस्य कर्तृत्वत्यागस्य निबन्धनम्—स्वगतं कर्तृत्वमपि तन्मूलतया प्राप्तमिति स्वस्य यावदात्मभाविनो भगवदेकपारतन्त्र्यस्य ज्ञानम् । ममतात्यागस्य फलत्यागस्य च निबन्धनम् आत्मात्मीयानां स्वरूपानुबन्धिनो भगवदेकशेषत्वस्य ज्ञानम् । फलोपायत्वत्यागस्य निबन्धनम्—शरण्यप्रसादनस्यैतदीयानुष्ठानस्य प्रधानफलं प्रति व्यवहितकारणत्वम्, अचेतनत्वात् फलप्रदानसंकल्पानाश्रयत्वं च ।

ईश्वरस्य फलोपायत्वं तावत् सहजसौहार्दात् करणकलेबरप्रदानादारभ्य द्वयोच्चारणपर्यन्तं सर्वं प्रति आदिकारणभूतस्य स्वस्य प्रसादपूर्वकसंकल्पविशेषविशिष्टरूपेणाव्यवहितकारणत्वात्, उपायान्तरशून्यस्य विषये तत्तदुपायस्थाननिवेशाच्च । एवंभावस्य मूलं धर्मिग्राहकशास्त्रावगतो वस्तुस्वभाव इति, अयमर्थो युक्तिभिर्विचालयितुं न युज्यते ।

अस्य साङ्गानुष्ठानस्य वात्स्यवरदाचार्यानुगृहीतः संग्रहो यथा—"अनादिकालात् भवदनिष्टाचरणात् संसृतवानस्मि, अद्यप्रभृति अनुकूलो वर्तेय, प्रतिकूलाचरणं न कुर्याम्, भवत्प्राप्त्यर्थं मद्धस्ते किमपि मूलधनं नास्ति, भवन्तमेवोपायतया निरचैषम्, भवानेवोपायो भवतु, अनिष्टनिवृत्ताविष्टप्राप्तौ वा ममेतः परं किं भरोऽस्ति" इति ।

(उत्तरकालीनुवृत्तानामानुकूल्य-तत्संकल्पादीनामनङ्गत्वम्)

अत्रानुकूल्यसंकल्पादीनि उपायपरिकरतया सकृत् कर्तव्यानि भवन्ति । पश्चादेतत्प्रार्थितानुकूलवृत्त्यादिसाहित्यमपि उपायफलात्मकम् । प्रातिकूल्यवर्जनमपि वात्स्यवरदाचार्यानुगृहीतरीत्याऽऽनुकूल्यसंकल्पवत् संकल्परूपत्वे सकृत्कर्तव्यमित्ययमर्थः सुस्पष्टः । "[12]अपायेभ्यो निवृत्तोऽस्मि" इत्युक्तरीत्याऽभिसन्धिविरामरूपत्वेऽपि वा प्रातिकूल्यस्वरूपनिवृत्तिरूपत्वेऽपि वा तत्र प्रथमक्षणकालिकमङ्गं भवति ; पाश्चात्यं च फलं भवितुमर्हति । एवं विश्वासेऽपि द्रष्टव्यम् ।

प्रवृत्तिरनुकूलेषु निवृत्तिश्चान्यतः फलम् ।
प्रारब्धसुकृताच्च स्यात् संकल्पे च प्रपत्तितः ॥

अतो जीवनकाले निरपराधकैङ्कर्यं प्रारब्धशरीरानन्तरं मोक्षं च समुच्चित्य फलत्वेनोद्दिश्य प्रपत्त्यनुष्ठायिनस्तावत् निपुणाः ॥

(अधिकारार्थसंग्राहिका गाथा)

वेदमकुटधरा अस्मत्स्वामिनः, निवर्ततां भर इति (मत्वा) अस्मान् रक्ष्यवस्तुत्वेन समर्पितवन्तः, तदाऽस्मान् प्राप्तुमभिलष्य महतीं कृपामावहतो महोपकारकस्य चरणयोरधस्तात्, सम्बन्धमात्रादेतदीयात्मस्वरूपरक्षकस्यैकस्यात्मनो याथात्म्यं त्वं मा विस्मार्षीरिति (उपदिश्य) ॥

---

अरवे परमेन्रडैक्कलम् वैत्तनर् नम्मै
पेरवेकरुदिप् पेरुन्दहवुट्रू पिरानडिकीऴ्
उरवे यिवनुयिर् काक्किन्र वोरुयिरुण्मैयै नी
मरवेलेन नम् मरैमुडिशूडिय मन्नवरे.

युग्यस्यन्दनसारथिक्रमवति तय्यन्तसन्दर्शिते
तत्त्वानां त्रितये यथार्हविविधव्यापारसन्तानिनि ।
हेतुत्वं त्रिषु कर्तृभाव उभयोः स्वाधीनतैकत्र तत्
स्वामिस्वीकृतयद्भरोऽयमलसस्तत्र स्वयं निर्भरः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे अधिकारिविभागाधिकारो द्वादशः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## कृतकृत्याधिकारः १३

समर्थे सर्वज्ञे सहजसुहृदि स्वीकृतभरे
यदर्थं कर्तव्यं न पुनरिह यत्किञ्चिदपि नः ।
नियच्छन्तस्तस्मिन् निरुपधिमहानन्दजलधौ
कृतार्थीकुर्मः स्वं कृपणमपि कैङ्कर्यधनिनः ॥

(प्रपन्नस्य कृतकृत्यत्वम्)

एतदुपायविशेषनिष्ठः स्वोद्दिष्टस्यैतत्फलस्य कृते प्रपत्त्यनन्तर-कालमारभ्य स्वस्य कर्तव्यांशेऽन्वयाभावात्, कर्तव्यांशस्य सकृदनुष्ठानेन निष्पन्नत्वात्, स्वतन्त्रेण सत्यसंकल्पेन फलप्रदेन "मा शुचः" इत्यनुगृहीतत्वात्, स्वस्य निष्पन्नां भरन्यासरूपदशां दृष्ट्वा निर्भरः,

"मामेकं शरणं व्रज" इत्युक्तरीत्या **सिद्धोपायत्वेन स्वीकृतेन सर्वेश्वरेण**, "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि" इति **फलप्रदानसंकल्पस्य** करणात् एवं **विश्वसनीयं समर्थमुपाय-भूतमीश्वरमवलोक्य फलसिद्धौ निस्संशयो** निर्भयश्च,

वासना अपि यथा नष्टाः स्युस्तथा त्यक्तान् अन्यपुरुषार्थान्, वृत्तान्यपि यथा निवर्तेरन् तथा त्यक्तानि उपायान्तराणि, यथा **अकिञ्चनोऽयत्नेन महानिधिं** लभेत तथा स्वेन लप्स्यमानं **परमपुरुषार्थं** च दृष्ट्वा **हृष्टमनाः**,

"देवर्षिभूतात्मनृणां पितॄणां न किङ्करो नायमृणी च राजन्। सर्वात्मना यः शरणं शरण्यं नारायणं लोकगुरुं प्रपन्नः ॥" इति श्लोकोक्त-प्रकारेण, **प्रजापतिः पशुपतिरित्येवंनामानि** बिभ्रतः **सजातीयान् क्षेत्रज्ञान्** प्रति तत्तदवसरेषु करगृहीतभृतिसदृशोपाधिविशेषहेतुकतया लेखनानर्हवेदारूढं दास्यपत्रम्, मूलधनतीरणं विनैव वृद्धिविधानानु-वृत्तमृणपत्रं च छिन्नवान् यतः, ततः **पञ्चमहायज्ञादिषु नित्यनैमित्तिकेषु** तन्नामो(देवतान्तरनामो)च्चारणावसरे "[2]ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान्। सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥" इत्यादिषु **महर्षिभिर्निर्धारितया** रीत्या,

**राज्ञः कञ्चुकस्योपरि मालाया आभरणस्य** च समर्पणेऽपि कञ्चुके (उद्देश्यत्व)संबन्धं हित्वा **राजप्रीतिमेव** प्रयोजनतया राजसेवको यथा विशदं प्रतिबुध्यते तथा,

[3]यज्ञाग्रहराध्यायादिषु, [4]श्रीहस्तिगिरिमाहात्म्ये, "[5]साक्षादप्यविरोधं जैमिनिः" इति सूत्रे चोक्तया रीत्या देवपित्रादिरूपकक्षुद्रकसंबन्धं विनैव तत्तच्छब्दानामवयवशक्तिपौष्कल्यैरीश्वरविषये नारायणादिशब्दवत् (वाचकतया) अवस्थितिं च निरीक्ष्य तेषामुच्चारणादिषु श्वेतद्वीपवासिनां शुद्धयाजिनामिव स्वस्य परमैकान्तित्वस्याक्षततया स्थितिं निरूप्य,

स्ववर्णाश्रमनिमित्तगुणाद्यधिकारानुरूपदास्यग्रहणं संकल्पितवतः शासितुः शेषिणः शास्त्रवेद्याज्ञापरिपालनरूपकैङ्कर्यमुखेन, प्रत्यक्षविदितपरमपुरुषाभिप्रायकमुक्तवत् किञ्चित्कुर्वन् मुक्ततुल्यः सन्

उपायपूर्त्या कृतकृत्य इति पुरुषार्थपूर्त्या कृतार्थ इति च शास्त्रैस्तन्निष्ठैश्चाभिनन्दनीयो भवति ॥

(गद्यवाक्यतात्पर्यम्)

एतदीयमिदं **कृतकृत्यत्वानुसंधानम्**, "[6]अतस्त्वं तव तत्त्वतो मज्ज्ञानदर्शनप्राप्तिषु निस्संशयः सुखमास्व" इति **शरणागतिगद्ये** निगमयामास । अस्यायं भावः—**अनादेः कालादाज्ञातिलङ्घनहेतुकभगवन्निग्रहेण** संसारमनुप्राप्तानामस्माकम**वसरप्रतीक्षभगवत्कृपाहेतुकसदाचार्यकटाक्षविषयीकार**निबन्धनद्वयोच्चा**रणानूच्चारणेन प्रपत्त्यनुष्ठाने** निष्पन्ने **शरण्यप्रसादने**ऽप्यितः परं (कर्तव्यस्य) कस्याप्यभावात् निग्रहहेतून् सर्वान् क्षान्त्वा, सविश्वासमश्रितान् दासान् परिष्कृत्य **कैङ्कर्यस्य** ग्रहणे समर्थः **सर्वशेषी श्रियः पतिः** स्वप्रयोजनभावेन स्वयमेव रक्षेदिति विश्वस्य निर्भरो भवेति । **अयं** "मा शुचः" इति शरण्यवाक्ये निष्कृष्टोऽर्थः ॥

(शोकतदभावकालव्यवस्था)

अस्य प्रपत्तिप्राकालिकस्य शोकस्याधिकारकोटिनिविष्टत्वात् प्राक् अशोचने अधिकारित्वासिद्धेः, "कारणाभावात् कार्याभावः" इति न्यायेन उपायनिष्पत्तिर्न सिद्ध्येत् । उपायस्वीकारं कृतवानित्यभिमत्य पश्चात् शरण्योक्तौ सन्दिहानः शोचेचेत्, "कार्याभावात् सामग्र्यभावः" इति न्यायेन पूर्णोपायत्वासिद्धेः, फलमुपायपूर्तिसापेक्षं सत् विलम्बेतेति वेदितुं युक्तम् । प्राक् प्रसक्तशोकः, पश्चात् "मा शुचः" इति प्रतिषेधनमनुसृत्य वीतशोकीभूतः कृतकृत्य इति ज्ञातुं युक्तम् ॥

(अधिकारार्थसंग्राहिका गाथा)

प्रेमवत्सु, 'को वरो देयः' इति आस्थावता हस्तिगिरिनाथेन लक्ष्मीव्यामुग्धेन, पूर्वमेव प्रयस्य रक्ष्यवस्तुत्वेन स्वीकृता आस्माकाः मुख्याः राजतुल्याः देवतुल्याः देवदेवनिवासभूतोपरितनलोकप्रवणसूरितुल्याः हंसतुल्याः समापितसर्वयज्ञपुरुषतुल्याश्च भवन्ति ।

**भगवति हरौ पारं गन्तुं भरन्यसनं कृतम्**
**परिमितसुखप्राप्त्यै कृत्यं प्रहीणमकृत्यवत् ।**

---

मन्नवर् विण्णवर् वानोर्रै योत्रम् वान् करुत्तोर्
अन्नवर् वेल्वियनैत्तु मुडित्तनर् अन्बुडैयार्क्कु
एन्न वरन्तरवेन्र नम्मत्तिगिरित्तिरुमाल्
मुन्नम्वरुन्दियडैक्कलङ्कोण्ड नम्मुक्कियरे.

भवति च वपुर्वृत्तिः पूर्वं कृतैर्नियतक्रमा
परमिह विभोराज्ञासेतुर्बुधैरनुपाल्यते ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे कृतकृत्याधिकारस्त्रयोदशः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## स्वनिष्ठाभिज्ञानाधिकारः १४

स्वरूपोपायार्थेष्ववितथनिविष्टस्थिरमतेः
स्वनिष्ठाभिज्ञानं सुभगमपवर्गादुपनतात् ।
प्रथिम्ना यस्याऽऽदौ प्रभवति विनीतः स्थगयितुं
गभीरान् दुष्पूरान् गगनमहतश्छिद्रनिवहान् ॥

एवं स्वस्य निष्ठाऽस्तीति स्वेन कथं ज्ञायतामिति चेत्—

(स्वरूपविषये स्वनिष्ठाभिज्ञाननिरूपणम्)

परैः परिभवादिषु आपन्नेषु सत्सु देहादिकमवलम्ब्य परिभावकैरुच्यमानानां दोषाणां स्वस्वरूपासंस्पर्शस्य निरूपणेन विषादादिराहित्येनावस्थानम्, "[1]शप्यमानस्य यत् पापं शपन्तमधिगच्छति" इत्युक्तरीत्या परिभवादिना स्वपापं प्रतिगृह्णतो दुर्बुद्धीन् प्रति, "[2]बद्ध-

वैराणि भूतानि द्वेषं कुर्वन्ति चेत्, ततः । शोच्यान्यहोऽतिमोहेन व्याप्तानीति मनीषिणा ॥", "[3]आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् । सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम्" इत्युक्तरीत्या पारातिलङ्घिनी कृपा, "[4]अमर्यादः क्षुद्रः" इति श्लोकेन, "[5]क्रान्तोऽभवम् क्रान्तोभूत्वा" इत्यादिभिर्दिव्यसूरिगाथाभिश्च स्वस्यानुसन्धेयतयोदाहृतान् दोषान् परिभवादिभिः (इमे) विस्मरणागोचरान् अकार्षुरित्युपकारस्मृतिः, आत्मनां सर्वेषां स्वरूपानुबन्धिभगवत्पारतन्त्र्यं क्षेत्रज्ञानां सर्वेषां कर्मवश्यतयाऽवस्थितिं च दृष्ट्वा, अस्मासु अस्मत्परिभावकचेतनेषु च विद्यमानकर्मानुगुणरसावहामिमां लीलां कुर्वाणेन स्वतन्त्रशेषिणा प्रेरितास्ते परिभवादिकं कुर्वन्तीति तद्विषये निर्विकारचित्तता, प्रारब्धपापविशेषः कृत्तशिखो भवतीति सन्तोषश्च प्रवर्तन्ते चेत्—प्रथममध्यमपदयोः शोधितरीत्या अचिद्वैलक्षण्यम्, सर्वभूतानुकूल्यादियोग्यं ज्ञानम्, सर्वतोमुखमाकिञ्चन्यम्, स्वतः सर्वसमस्य कर्मानुरूपफलप्रदस्य स्वतन्त्रशेषिण इष्टविनियोगार्हतापादके अनन्यार्हशेषत्वपारतन्त्र्ये, "[6]यद्धितं मम देवेश" इत्याद्युक्तरीत्या पराधीनहितसिद्धिं च बिभ्राणे स्वस्वरूपे निष्ठाऽस्तीति अभिज्ञायेत ।

(उपायविषये तन्निरूपणम्)

सर्वेश्वरं विना स्वात्मा च परे च स्वस्य न रक्षका इति बुद्धिः, मृत्युपर्यन्तभयहेतुदर्शनेऽपि "[7]प्रायेणाकृतकृत्यत्वात् मृत्योरुद्विजते जनः । कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥" इत्युक्तरीत्या

5 वाडिनेन् वाडि—पेरियतिरुमोऴि 1-1-1

एतच्छरीरानन्तरं किं दुःखमनुभविष्याम इत्युद्वेगं हित्वा अभिमतासत्त्या संप्रीततयाऽवस्थानम्, "[8]गजं वा वीक्ष्य सिंहं वा व्याघ्रं वाऽपि वरानना। नाहारयति संत्रासं बाहू रामस्य संश्रिता" इति, "[9]असंदेशात् तु रामस्य तपसश्चानुपालनात्। न त्वा कुर्मि दशग्रीव भस्म भस्मार्ह! तेजसा ॥" इति, "[10]शरैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः। मां नयेत् यदि काकुत्स्थस्तत् तस्य सदृशं भवेत् ॥" इति श्रीजानक्या अनुष्ठाय प्रदर्शितरीतिकेन रक्षकावष्टम्भेन जातः समाश्वासः, स्वकृतभरन्यासफलविषये स्वयत्नराहित्यम्, तत्रानिष्टनिवृत्तिरिष्टप्राप्तिश्च तद्धस्ताधीने इति विलम्भश्च वर्तेरंश्चेत्—स्वोद्दिष्टसकलफलसाधने चरमश्लोकपूर्वखण्डविहिते, द्वयपूर्वखण्डेऽनुसन्धेये, श्रीमन्त्रमध्यमपदविवक्षिते उपाये स्वस्य निष्ठाऽस्तीति सुखमभिज्ञातुम्।

(पुरुषार्थविषये तन्निरूपणम्)

"[11]उत्पत्तिस्थितिनाशानां स्थितौ चिन्ता कुतस्तव। यथोत्पत्तिर्यथा नाशः, स्थितिस्तद्वत् भविष्यति ॥", "[12]अचेष्टमानमासीनं श्रीः कश्चिदुपतिष्ठति। कर्मी कर्मानुसृत्यान्यो न प्राश्यमधिगच्छति ॥" इत्युक्तरीत्या प्रारब्धकर्मविशेषाधीनतयेश्वरेण कार्यमाणे देहयात्रादौ चिन्तां त्यक्त्वा, स्वेन चिन्तायां क्रियमाणायामपि, "[13]उत्पतन्नपि चाकाशं विशन्नपि रसातलम्। अटन्नपि महीं कृत्स्नां नादत्तमुपतिष्ठते ॥", [14]यत् किञ्चित् वर्तते लोके सर्वं तन्मद्विचेष्टितम्। अन्यो ह्यन्यच्चिन्तयति स्वच्छन्दं विदधाम्यहम् ॥" इत्युक्तरीत्या ईश्वरसंकल्पमननुसृत्य न किञ्चिन्निर्वर्तेतेति प्रतिसन्धाय, "[15]अप्रयत्नागताः सेव्याः गृहस्थै-

र्विषयाः सदा । प्रयत्नेनापि कर्तव्यः स्वधर्म इति मे मतिः ॥", "[16]नाहारं चिन्तयेत् प्राज्ञो धर्ममेवानुचिन्तयेत् । आहारो हि मनुष्याणां जन्मना सह जायते ॥" इति **पराशरगीतादिषु**, "[17]न संनिपतितं धर्म्यमुपभोगं यदृच्छया । प्रत्याचक्षे न चाप्येनमनुरुन्धे सुदुर्लभम् ॥" **इत्यजगरोपाख्याने** चोक्तरीत्या शास्त्राविरुद्धविषयेषु स्वस्मिन् उपायविशेषमकुर्वत्यपि भगवत्संकल्पमात्रेण स्वयमेव प्राप्तेषु तान् अवेक्ष्य, प्रारब्धकर्मफलमृणं नश्यतीति, अनिवारणेनानुभवनम्—इत्थं **कर्मविशेषाधीनतयोपनमतोः प्राप्यान्तरलाभालाभयोः**, "[18]तयोरेकतरो राशिर्यद्येनमुपसंनमेत् । न सुखं प्राप्य संहृष्येन्न दुःखं प्राप्य संज्वरेत् ॥" इति, "[19](धनं) अस्तीति न दृप्यन्ति" इति चोक्तरीत्या **हर्षशोकत्यागेन** सह **स्वरूपानुरूपे परमप्राप्यकैङ्कर्ये रुचिः**, **स्तोत्रे श्रीवैकुण्ठगद्यादिषु** च [दर्शिता] "कदा, कदा" इति मुखविलापं कारयन्ती प्राप्तौ त्वरा च यदि प्रवर्तेरन्—तर्हि **श्रीमन्त्रे नारायणशब्दे चतुर्थ्यां, द्वये चतुर्थीनमोभ्याम्**, **चरमश्लोके "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि"** इति **वाक्येन** च हस्तनिर्देशकृतसमुद्रप्रदर्शनतुल्यप्रदर्शनविषयीकृते अपरिच्छेद्ये परमपुरुषार्थे निष्ठाऽस्तीति सुज्ञानम् ।

(स्वनिष्ठाप्रयोजननिरूपणम्)

इत्थं तत्तदभिज्ञानैः, "[20]अहमात्मा न देहोऽस्मि विष्णुशेषोऽपरिग्रहः । तमेव शरणं प्राप्तस्तत्कैङ्कर्यचिकीर्षया ॥" इत्युक्तरीत्या मूलमन्त्रादिसहकारेण **स्वरूपोपायपुरुषार्थेषु** स्वनिष्ठामभिज्ञाय

---

19 उलदेन्त्रिरुमावार्-2 तिरुवन्तादि 45

चरतोऽस्याधिकारिणः, "[21] नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान् । एकस्थहृदया नूनं राममेवानुपश्यति ॥" इतिरीत्या विरोधिभिः सह वर्तमानस्य अस्य पाक्षिकतया संभावितेषु ब्रह्मविदपचारव्यतिरिक्तेषु येषु केषु चित् भीतिहेतुषु, स्वरूपप्राप्तकैङ्कर्यव्यतिरिक्तेषु येषु केषुचित् प्रीतिहेतुषु च दृष्टिपातो न भवेत् । यदृच्छया संभवेऽपि तैर्भीतिः प्रीतिश्च नोदियात् ॥

(अधिकारार्थसंग्राहिका गाथा)

मुख्यमन्त्रप्रदर्शिते त्रितये निष्ठावन्तः स्वानुरूपमिच्छन्तः अननुरूपं किमपि अनिच्छन्तः, इमानि कर्माणि अस्माकं सन्तीति लक्षणेन सम्यक् ज्ञातवन्तः मेदिनीवर्तिदिविषदो भवन्ति ।

स्वापोद्बोधव्यतिकरनिभे भोगमोक्षान्तराले
कालं कश्चिज्जगति विधिना केनचित् स्थाप्यमानाः ।
तत्त्वोपायप्रभृतिविषये स्वामिदत्तां स्वनिष्ठां
शेषां कृत्वा शिरसि कृतिनः शेषमायुर्नयन्ति ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे स्वनिष्ठाभिज्ञानाधिकारश्चतुर्दशः

श्रीमते निगमान्तमहादेशिकाय नमः

—o—o—

---

मुक्किय मन्तिरङ्गाट्टिय मून्रिल् निलैयुडैयार्
तक्कवैयन्रित्तहादवै योन्रु तमक्किशैयार्
इक्करुमङ्गलेमक्कुळ वेन्र मिलक्कणत्ताल्
मिक्क वुणर्त्तियर् मेदिनिमेविय विण्णवरे,

श्रीः

## उत्तरकृत्याधिकारः १५

संन्तोषार्थं विमृशति मुहुः सद्भिरध्यात्मविद्यां
नित्यं ब्रूते निशमयति च स्वादु सुव्याहृतानि ।
अङ्गीकुर्वन् अनघललितां वृत्तिमादेहपाताद्
दृष्टादृष्टस्वभरविगमे दत्तदृष्टिः प्रपन्नः ॥

(ज्ञानानुष्ठानयोरावश्यकत्वम्)

इत्थं **कृतकृत्यस्य स्वनिष्ठां** विशदमभिज्ञातवतः सशरीरत्वेनावस्थितिकाले, पुरातने श्रीमति कृषिक्षेत्रे एकदेशमात्मसात्कृत्य वसत इव केन चित प्रकारेण संबन्धं विसृज्य केनचित् प्रकारेण संबन्धं वहतोऽस्याधिकारिणः—**मुक्तगतकैङ्कर्यपरम्परावत् उत्तरकैङ्कर्यस्यावसरलाभार्थं पूर्वकैङ्कर्यं** यथा परिपूर्णं स्यात् तथा शृङ्खलितस्य, स्वामिसंप्रीतेः कारणभूतस्य कार्यभूतस्य च,

"[1]पठित्वा श्रुत्वा प्रणम्य मार्गे एव गत्वा संपूज्य चानैषं कालम्" इति, "[2]कल्याणगुणयुक्तसूक्तीरनुसन्धाय न निवर्तयेयुश्चेत,

---

1 वाशित्तुम् केट्टुम् वणङ्गिवड़िपट्टुम् पूशित्तुम् पोकिनेन् पोदु. नान्मुकन् तिरुवन्दादि-63

2 शीर्कलन्दशोल् निनैन्दु पोकारेल् शूड़िनैयिनाड़तुयरे येन्निनैन्दु पोक्कुवरिप्पोदु पेरियत्तिरुवन्तादि-86

अभिव्यापिकर्मजनितमगाधदु:खं, किमनुसन्धाय, निवर्तयेयुरिदानीम्" इति, [3]विच्छेदशून्यं कालं सर्वं सह भूत्वा सर्वावस्थासु स्थित्वा निर्दोषकैङ्कर्यं कर्तुं वाञ्छेम वयम्" इति, "[4]उपर्युपरिजृम्भमाणाः गुणप्रथाः मुखे, इन्द्रियापहारिविग्रहं मन्मनसि, तदनुरूपपुष्पाणि च हस्तयोः कृत्वा (कैङ्कर्य)मार्गमाश्रित्य सर्वदा वृत्तये कृपां कुर्याच्चेत्" इति '[5]अलब्धानि पुष्पाणि अभिलष्य संपाद्य" इति, "[6]अनुपमया पुष्पाङ्गनया, अन्यया भूमिदेव्या च संवाहद्यमानं मृदुचरणं क्रूरकर्माऽहमपि यथा संवाहयेयं तथा" इति, "[7]स्वमात्तशेषतया मम स्वीकरणमितीदमेव" इति, '[8]तवैव वयं कैङ्कर्यं कुर्याम" इति, "[9]शयनस्थाने चरणसंवाहनार्थं स्वीकुर्याच्चेत" इति, "[10]गणनार्थमाविर्भूताभिरङ्गुलिभिः"

---

3 ओोड़िविल्कालमेल्लामुडनाय् मन्नि वडुविलावडिमै शेय्य वेण्डुम नाम् तिरुवाय्मोड़ि-3-3-1

4 पोङ्केड़ पुगड़कल वायवाय् पुलन् कोल् वडिवेन् मनत्तदाय् मङ्केय मलरगल् कैयवाय् वड़िपट्टोडवर्कालल्-तिरुवाय्मोड़ि-8-10-4

5 नाडाद मलर् नाडि तिरुवाय्मोड़ि-1-4-9

6 वडिविणैयिल्लामलर्मगल्मट्रनिलमगल्पिडिक्कु मेल्लडियै कोड़्विनैयेनुम् पिडिक्क तिरुवाय्मोड़ि-9-2-10

7 तनक्केयाह वेन्नैक्कोल्लुमीदे तिरुवाय्मोड़ि-2-9-4

8 उनक्के नामाट्शेय्वोम् तिरुप्पावै-29

9 पल्लि कोल्लुमिडत्तडि कोट्टिडक्कोल्लुमाकिल्-नाच्चियार-4-1

10 पण्णक्कण्डविरल्कल् पेरियाल्वार् तिरुमोड़ि-4-4-5

इति, "[11]भोजनशून्यदिने क्षुधेत्येतत् किंचिदपि नास्ति, अविच्छेदेन नमोनारायणेति अनुसंधानशून्याःदिवसाः ऋग्यजुस्सामवेदान् नवप्रफुल्ल-पुष्पाणि गृहीत्वा त्वत्पादोपसर्पणरहितदिवसा मे प्रसजेयुश्चेत, ते मे उपवासदिवसाः" इति, "[12]वाक् त्वद्व्यतिरिक्तं न वेद। अहं बिभेमि ; मद्वशगा सा न" इति, [13]वाक् तद्व्यतिरिक्तं न स्तुवीत" इति, "[14]स्कन्धौ तद्व्यतिरिक्तं न सेवेयाताम्" इति, '[15]नेच्छेयं परेषां वस्तु" इति "[16]निरन्तरं यथा ध्यानं भवेत् तथा त्वया संकल्पनीयम्" इति च, एवं "[17]अन्धकारो यथा शिथिलो भवेत तथा" "[18]मांसवर्धकैश्वर्यम्" "[19]दीर्घनागं परिवेष्ट्य" इत्येतेषु श्रीसूक्तेषु[परिच्छेदेषु)च

---

11 उण्णानाळ् पशियावदोन्रिल्लै योवादे नमो नारयाणा वेन्रेण्णानाळुम् इरुक्केशुच्चामवेद नाण्मलर् कोण्डु उन पादम् नण्णा-नालवै तत्तुरुमाकिल् अन्रेनक्कवै पट्टिनिनाळ्—पेरियड्वार्-5-1-6

12 नाक्कु निन्नैयल्लालरियादु नानतञ्जुवनेन् वैशमन्रु
पेरियाड्वार् तिरुमोड़ि-5-1-1

13 वयवनैयल्लदु वाड़्त्तादु तिरुवन्तादि 11

14 तोलवनै यल्लाल् तोड़ा तिरुवन्तादि-63

15 नयवेन् पिरर् पोरुलै तिरुवन्तादि-64

16 निरन्तरम् निनैप्पदाह नी निनैक्क वेण्डुम् तिरुच्चन्दवृत्तम्

17 इरुलुरिय पेरुमाल तिरुमोड़ि । भाग

18 ऊनेरुशेल्वत्त पेरुमाल तिमोड़ि 4-भाग

19 नीणागञ्शुट्रि पेरियतिरुमोड़ि 11-7

"[20]पत्युः प्रजानामैश्वर्यं पशूनां वा न कामये । अहं कदम्बो भूयासं कुन्दो वा यमुनातटे ॥" इति, "[21]कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते । कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥" "[22]अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते । परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते ॥" "[23]स्वयं तु रुचिरे देशे क्रियतामिति मां वद ।" इति, "[24]कामये वैष्णवत्वं तु सर्वजन्मसु केवलम्" इति "[25]वर्तमानः सदा चैवं पाञ्चकालिकवर्त्मना । स्वार्जितैर्गन्धपुष्पाद्यैः शुभैः शक्त्यनुरूपतः । आराधयन् हरिं भक्त्या गमयिष्यामि वासरान् ॥" इति चोक्तरीत्या

**स्वरूपानुरूपकालक्षेपार्थस्योत्तरकृत्यस्य** स्थितये **स्वनिष्ठाया अनुरूपेषु** विशदं ज्ञातव्येषु अर्थेषु स्वेनाज्ञातान् अर्थान्,

अहं कृतकृत्य इत्यनुपेक्ष्य **अनुभवपूर्ति**संपत्तिसमये **विशद-ज्ञानस्य** **प्रेम्णश्चावश्यकत्वात्**, "[26]तत्पादभक्तिज्ञानाभ्यां फलमन्यत् कदाचन । न याचेत् पुरुषो विष्णुं याचनान्नश्यति ध्रुवम् ॥" इत्युक्तरीत्या ज्ञानभक्त्योरपेक्षणे दोषाभावाच्च स्वस्य शेषिविषये चित्तरञ्जनसंभवार्थं '[27]पीताम्बर उपकारको ब्रह्मगुरुर्भूत्वा एत्य" इत्युक्तरीतिकतया स्थितानां संप्रबुद्धानां **परमैकान्तिनां** सन्निधौ, "[28]तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥" इत्युक्तनियमपूर्वकं विशदं श्रुत्वा—

"[29]मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः । पङ्कच्छिदः फलस्येव निघर्षेणाऽऽविलं पयः ॥" इत्युक्तरीत्या परिशुद्धज्ञानो भूत्वा

"[30]यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रतिष्ठिता । तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः" इत्युक्तरीत्या एषु अर्थेषु निष्ठामावहद्भिः सह गाढं संसृज्य तेषामनुष्ठानेषु "[31]यावानर्थ उदपाने सर्वतः संप्लुतोदके" इत्युक्तप्रकारेण **स्ववर्णाश्रमजातिगुणाद्यनुरूपं कर्तव्यांशं निष्कृष्यानुष्ठाय,**

ईदृशानुष्ठानादिमन्तो वयमिति भावनामूलकस्वोत्कर्षपरनि-**कर्षानुसंधान**रूपप्रच्छन्नगर्तपातप्रसङ्गपरिहाराय स्वयमग्रेपदन्यासस्थले दृष्टिं कृत्वा संचरणम्,

(कार्पण्यानुसन्धानावश्यकत्वम्)

स्वस्य श्रीशठकोपसूरिनाथमुनिप्रभृतीनामिव शरण्यप्रसाद-विशेषमूलकानां [भगवत्]साक्षात्कारादीनां फलोद्गमपर्वणां संप्राप्तावपि, "[32]हितमहितं च किमपि न वेद्मि" इति, "[33]वेद्मि चेत्-तदापि इमानि सर्वाणि मया प्राप्तुं निराकर्तुं च न शक्यानि" इति निश्चित्य पराधीनस्वरूपस्थितिप्रवृत्तिकस्य स्वस्याधिकारेऽन्तर्भूतस्याऽऽकिञ्चन्यस्य नाशापादकं परिवर्तनमकृत्वा—

---

पीतकवाटैपिरानारपिरमगुरुवाहिवन्दु पेरियाड़्वार्-5-2-8

नम्मै तीमैकलोन्रुमरियेन् पेरियाड़्वार् तिरुमोड़ि 5-1-3

अरिवनेलुमिवैयेल्लामेन्नालेंडेप्पुनीक्कोण्णा—पेरियतिरुव-3

नोट्रनोन्बिलेन् नुण्णरिविलेन्—तिरुवाड़्मोड़ि 5-7-1

एन्नान् शेयकेन् तिरुवायमोड़ि 5-8-3

कलैवायलुन्वम् कलैयादोड़िवायकलैकणमट्रिलेन् तिरुवाय्-5-8-8

"[34]अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः" इत्यादीन्यनुसृत्य प्रवृत्तासु, "[35]अनुष्ठिततपःशून्यः सूक्ष्मज्ञानशून्यः", "[36]किमहं कुर्याम्", "[37]निवर्तय दुःखं मा वा निवर्तय, निवर्तकान्तरशून्योऽहम्" "[38]शरणान्तरशून्यो दासोऽहम्" "[39]आत्मनः एकामवलम्बनशाखां त्वां विना न जानाम्यहम्" "[40]"धेनूरनुगम्य" "[41]स्नात्वा त्रयाणामग्नीनां परिचरणम्" "[42]कुलयोर्द्वयोर्द्वयोः" "[43]अज्ञः परिचयहीनः" "[44]अपाश्रयेण केनापि हीनः" "[45]दीयमानं दुःखं न निवर्तयसि चेत्" इत्येतासु गाथासु, "[46]न धर्मनिष्ठोऽस्मि" इति श्लोके च एभिरनुसंहितानां कार्पण्यावान्तरभेदविशेषाणां सर्वेषामवलम्बनेन वर्तनम्,

(अनिर्वेदेन प्रवर्तनस्यावश्यकत्वम्)

इत्थं स्वस्य अनादिकालात् संजातामनर्हतां तन्मूलिकां कैङ्कर्यालब्धिं च वीक्ष्य, "[47]मिथ्याभूतं ज्ञानं सदोषमाचरणं

---

पुकलोन्रिलावड्रियेन् तिरुवाय्मो 6-10-10
आविककोर्पट्टरुक्कोम्बुनिन्नलालंरिकिन्रिलेन् तिरुवाय-10-10-3
करवैकल् पिन् शेन्रु तिरुप्पावै 28
कुलित्तुमून्रनलैयोम्बुम् तिरुमालै 25
कुलङ्गलायवीरिरण्डिल् तिरुच्चन्द 90
पडै येतलन् पेरियतिरुमोडि 5-8-1
पट्रोन्रुमिलेन् पेरियतिरुमोड़ि-1-9-9
तरुदुयरन्तडायेल् पेरुमाल् तिरुमोड़ि 5-1
पोय् निन्रज्ञानमुम् पोल्लावोड्डुक्कु मड्डुक्कुटम्बुम् तिरुविरुत्तम् 1
उयिरलिप्पानेन्निन्र योनियुमाय् पिरन्दायिमैयोर् तलैवा"

मलिनशरीरश्च" इति विलापं जनयता निर्वेदप्राचुर्येणावसन्नतामप्राप्य "[48]आत्मरक्षणार्थं यत्रतत्रापिवा योनौ अवतीर्णोऽसि अनिमिषाणां मूर्धन्य" इत्युक्तरीत्या अग्रे अभिसमेत्य प्रविश्य तिष्ठतः शरण्यस्य मातृस्तन्यवत् पथ्यतमेन प्रियतमेन चोपदेशेन विशदं ज्ञातानि अवताररहस्यादिरूपाणि तीर्थान्यवगाह्य आश्वस्य, "[49]उत्तमे चेत् वयसि साधुवृत्तः" इति, "[50]दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा । समाश्रयेदादिदेवं श्रद्धया शरणं यदि । निर्दोषं विद्धि तं जन्तुं प्रभावात् परमात्मनः ॥" इति, '[51]यद् ब्रह्मकल्प-नियुतानुभवेऽप्यनाश्यं तत् किल्बिषं सृजति जन्तुरिह क्षणार्धे । एवं सदा सकलजन्मसु सापराधं क्षाम्यस्यहो तदभिसन्धिविराममात्रात् ॥" इति, "[52]प्रवहत्येव हि जले सेतुः कार्यो विजानता" इति, "[53]मरणदशायामपि वा प्रणामेन सह मरणं उपायः" इति चोक्तन्यायेन गतमननुशोच्य, गतायोग्यतादर्शनेन दूरीभवनमनभिसंधाय, अपर्यनुयोज्येनानवधिकेन शरण्यप्रभावेनेदानीं समुत्पन्नां योग्यतां वीक्ष्य प्रवहज्जलसेतुबन्धनन्यायेन एतदवस्थानुरूपमा-ज्ञानुज्ञानुवर्तनरूपकैङ्कर्यानुभवमहित्वा "[54]किरीटिन्" इति दशकोक्तरीत्या श्रान्तानि करणानि सात्त्विकाहारसेवादिभिर्योग्यानि कृत्वा स्वरूपप्राप्तेष्वनुभवेषु प्रवर्त्य, अयोग्यविषयान्तरेषु स्वरसप्रवृत्तवासनानां परिवर्तनम्—

---

53 मालुमोरिडत्तिलुम् वणङ्कोडुमल् वदुवलमे तिरुवाय् 1·3·8

54 मुडियाने तिरुवाय्

(कैङ्कर्यस्य प्रीत्यायथाशास्त्रमनुष्ठेयत्वम्)

परतीरेऽभिमतदेशजिगमिषया नौकां प्रतीक्षमाणाः सत्यां त्यागेच्छायां त्यक्तुमशक्ये पणबन्धद्यूते अप्रवृत्त्य अपेक्षितावसरे समापनार्हे विहारद्यूते प्रवृत्तावपि यथाशास्त्रं स्थानानतिक्रमेण (देवन) साधनानि (अक्षान्) यथा निक्षिपन्ति, तथा आज्ञानुज्ञाभिर्दास्यं स्वीकुर्वाणस्य शासितुः शासनानुरूपस्य कालविशेषादिनियतस्य कैङ्कर्यस्य पित्तपरिहारार्थक्षीरसेवकरीतिं विहाय अयत्नलब्धेनौषधेनाविलम्बितमारोग्यं प्राप्तवन्तो यथा क्षीरं परिप्लाव्य भुञ्जते, तथा प्रीत्याऽनुष्ठानम्,

(अर्चावतारकैङ्कर्यकर्तव्यता)

तदा, "[55]नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर। यस्यास्ति सत्ता हृदये तस्यासौ सन्निधिं व्रजेत्॥" इति, "[56]यथा सामुद्रमम्भोऽब्दैः स्पृष्टमेत्युपभोग्यताम्। तथैव हि मनुष्याणां भक्तैः संभावितो हरिः॥" इति चोक्तरीत्या कस्यचिदधिकारिविशेषस्य कृते सान्निध्यादीनि कृत्वा, परमैकान्तिनं स्वमादृत्योपेत्य कृतार्चावतारस्य सर्वेश्वरस्य सन्निधौ (मूर्तौ) "[57]सर्वातिशायि षाड्गुण्यं संस्थितं मन्त्रबिम्बयोः" इत्युक्तां पूर्तिम्, "[58]आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम्। पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम्" इत्युक्तं पावनतमत्वम्, "[59]सन्दर्शनादकस्माच्च पुंसां संमूढचेतसाम्। कुवासना कुबुद्धिश्च कुतर्कनिचयश्च यः। कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेत्" इत्युक्तरीत्या प्रत्यक्षादिप्रमाणत्रयतोऽपि हेतुफलभावेन जायमानानां मतिव्यामोहानां सर्वेषां कृते औषधरूपताम्, "[60]ये यथा

मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्यत्र, "[61]स्वकीयानामभिमतं यद्रूपम्" इति गाथायां चोक्तरीत्याऽवाङ्मनसपरिच्छेद्यमाश्रितपारतन्त्र्यम्, "[62]दृष्टवती नेत्रे अन्यत् किमपि न पश्येताम्" इत्युक्तमकर्षकत्वं चानुसन्धाय, "[63]सतीव प्रियभर्तारं जननीव स्तनन्धयम्। आचार्यं शिष्यवत् मित्रं मित्रवल्लालयेद्धरिम्॥", "स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च सर्वदा। पितृत्वेन तथा भाव्यो मातृत्वेन च माधवः॥", "[64]यथा युवानं राजानं यथा च मदहस्तिनम्। यथा प्रियातिथिं योग्यं भगवन्तं तथाऽर्चयेत्॥", "[65]यथा च पुत्रं दयितं तथैवोपचरेद्धरिम्॥" इत्युक्तरीत्या तत्तत्संबन्धवर्गपरत्वसौलभ्याद्यनुरूपायाः वृत्तेः करणम्—

(न्याय्यवृत्तिता)

तदा, "[66]तदा हि यत् कार्यमुपैति किंचिदुपायनं चोपहृतं महार्हम्। स पादकाभ्यां प्रथमं निवेद्य चकार पश्चाद्भरतो यथावत्॥" इति श्रीपादुकाविषये भक्तश्रीभरतानुष्ठिताया राजसेवकवृत्तेर्न्यायार्जितद्रव्यैः संपादनम्—अस्यां वृत्तौ उद्वधूमङ्गलसूत्रादिरक्षण[रूप]त्वप्रतिपत्तिमत्तया स्थितिः—

(कृतज्ञत्वम्)

एवं भगवदुपक्रमं भागवतपर्यन्तं वर्धमानायाः कैङ्कर्याख्यपुरुषार्थसिद्धेः प्रधानकारणं "[67]पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च

61 तमरुहन्ददेव्वुरुवम् अव्वुरुं तानाय् प्रथमान्तादि-44
62 कण्ड कण्गळ् मट्रोन्रिनैक्काणा अमलन् ि-10

पुण्यकृत् । आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत् ॥" इति, "[68]अस्मदीशस्य दिविषदामुपकारकस्य निर्दोषचरणकमलयोरधस्तादस्माकं प्रापका अमराः" इति, "[69]धन्विनव्यपुरीशः पूर्णो विष्णुचित्तः स्वं देवं शवयेन यत्नेनाऽऽनयेच्चेत्, तत् पश्येम" इति चोक्तरीतिक सदाचार्य-संबन्ध एवेति विश्वस्य, अभिषेक्ष्यमाणस्य राजकुमारस्य कृते रात्रौ दीपप्रज्वालनवत् स्वस्य तैः साधितां ज्ञानसमृद्धिं तन्मूलकानि स्वस्योपनतानि कैङ्कर्यादीनि चानुसन्धाय तद्विषये कार्तज्ञ्येनावस्थानम्—

एषां सर्वेषामपि साधारणं प्रधानकारणभूतं तावत्—मुक्त-दशायामात्मानुबन्धिभगवदनुभवविषये अपर्यनुयोज्यस्वातन्त्र्यबलाच्छङ्कितस्य विच्छेदस्य परिहारकतयावर्तमानम्, "[70]अन्धकारनिरासकज्वलत्किरणकस्य मण्डलमध्यद्वारा आरोप्य स्थापयित्वा निश्रेणिकामपसार्य" इति "[71]गतं चेत्, पश्चात् इमां दिशं प्रति कदापि प्रतिभूदानेऽपि

---

68 एम्मीशर् विण्णोर् पिरानार् माशिन्मलरडिक्कीऴ् एम्मै च्चेर्विक्कुं वण्डुकळ् तिरुवृत्तम्-54.

69 विल्लिपुदुवैनगर् नम्बिविट्टुचित्तर् तंगळ् देवरै वल्लपरिशु वरुविप्परेल् अदुकाण्डुमे नाच्चियार् 10 10

70 इरुलकट्रुमेरिकदिरोन्मण्डलत्तूडेत्तिवैत्तु एणिवांगि पेरिया-4-9-3

71 पोयिनाल् पिन्नै एद्दिशैक्केन्रुं पिणैकोडुक्किलुम् पोहवोट्टार् पेरिया-4-5-9

गमनं नानुमन्येत" इति "[72]विलक्षणयशस्कनारायणदृढचरणौ" इति, "[73]जन्मजन्मान्तरेषु रक्षित्वा स्वदासान् नीत्वा स्वं भावं प्रापय्य स्वचरणयोरधस्तात् स्वीकुर्वतः पितुः" इति, "[74]स्वचरणयुगलस्याधस्तात् योजयित्वा तेन क्रियमाणं क्षेमम्" इति चोक्तप्रकारापुनरावृत्तावपि, पूर्वं संसरणे इव सत्यसंकल्पस्य शेषिणः श्रियः पत्युः, "[75]प्राक्कालमारभ्य तव श्रीरूपां पङ्कजाङ्गनायाः श्रीरूपां चावलम्ब्य तव मन्दिरं सम्मार्ज्य" इति ख्यापितं **सहजकारुण्यमिति** विज्ञाय तद्विषयेऽपि **कृतज्ञतयाऽवस्थानं** च समुचितम् ॥

अस्मिन्नुत्तरकृत्ये **मनो वाक् काय** इति व्यवह्रियमाणैः करणैस्त्रिभिः **परिहरणीयेषु परिग्राह्येषु च सारं** ब्रूमः—"[76]विषस्य विषयाणां च दूरमत्यन्तमन्तरम् । उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥" "[77]मनो व्याकुलं यथा स्यात् पञ्चेन्द्रियायत्तबाधाश्लिष्ट-

---

72 वण्पुगऴ् नारणन् तिण्कऴल् तिरुवाय् 1 2-10

73 शन्मशन्मान्तरं कात्तु अडियार्हलैक्कोण्डुपोय् तन्मै पेरुत्ति तन् तालिणैक्कीऴ्कोल्लुमप्पन् तिरुवाय् 3 7-7

74 तन् तालिणैक्कीऴ्शेर्त्तु अवन् शेय्युं शेमम् 7-5-10

75 पण्डैनाळाले निन्तिरुवरुळुं पंकयताळ्तिरुवरुळुं कोण्डु निन् कोयिल् शीय्त्तु तिरुवाय् 9 2-1

77 आवि तिहैक्क ऐवर् कुमैक्कुं शिट्रिन्बम् पाविये नैप्पल नी काट्टिप्पडुप्पायो तिरुवाय् 6-9-9

मत्पसुखं पापिनं मां प्रति बहु प्रदर्श्य नाशयसि किम्" इत्युक्तत्वात् **परमपुरुषार्थरुचेरभंगाय** विस्मर्तव्येषु प्रधानभूतो विषयास्वादः । कृतघ्नताया अप्रसक्तये स्मरणीयेषु **प्रधानभूत आचार्यकृतः प्रथम-**कटाक्षादिरुपकारः । कार्पण्यस्याविनाशार्थं अवक्तव्येषु प्रधानभूत **आत्मोत्कर्षः । उपायनिष्ठाया** अविस्मरणार्थं "[78]सदैवं वक्ता" इत्युक्तरीत्या **वक्तव्येषु प्रधानं द्वयम्** । प्रेम्णा कैङ्कर्यं स्वीकर्तुमधि-कृतस्य स्वामिनो हृदये कोपानुत्पत्तये करणत्रयेणापि "[79]अकृत्यं न कुर्मः" इत्युक्तेषु (अकर्तव्येषु) **प्रधानभूतो ब्रह्मविदपचारः** । पुरुषार्थसागरस्य क्षय-ह्रासानापादनार्थं कर्तव्येषु प्रधानम्-भगवत्कैङ्कर्यस्य सीमाभूमिभूतं शास्त्रानुज्ञातमाचार्यादिभागवतकैङ्कर्यम् ।

**(रहस्यत्रये उत्तरकृत्यानुसन्धानस्थलम्)**

स्वयंप्रयोजनभूतमिदमुत्तरकृत्यं रहस्यत्रये फलप्रतिपादकेषु प्रदेशेषु अनुसन्धेयम् ॥

**(अधिकारार्थसंग्राहिका गाथा)**

द्विविषद्भिः संप्रार्थ्य निष्प्रतिषेधं प्रेम्णा स्वीक्रियमाणानि कैङ्कर्याणि सर्वाणि भूलोकेऽतिप्रीत्या प्राप्नुवन्ति (अनुतिष्ठन्ति) अष्टद्वारकाश्रितेन कृष्णेन रक्ष्यवस्तुत्वेन स्वीकृततया ऋणान्यपाकृतवन्तोऽस्मदीया गानसंभृत-द्राविडवेदविदो भागवताः ॥

---

79 शेय्यादन शेय्योम् तिरुप्पावै 2

प्रणयिनमिव प्राप्तं पश्चात् प्रिया स्वसमन्वितं
महति मुहुरामृष्टे दृष्ट्वा मनौ मणिदर्पणे ।
प्रपदनधनाः सन्तः शुद्धैः प्रभुं परिभुञ्जते
प्रसृमरमहामोदस्मेरप्रसूनसमैः क्रमैः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे उत्तरकृत्याधिकारः पञ्चदशः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—o—o—

श्रीः

## पुरुषार्थकाष्ठाधिकारः १६

स्वतन्त्रस्वामित्वात् स्वबहुमतिपात्रेषु नियतं
श्रियः कान्तो देवः स खलु विनियुङ्क्ते चिदचितौ ।
यथालोकाम्नायं यतिपतिमुखैराहितधियां
ततो नः कैङ्कर्यं तदभिमतपर्यन्तमभवत् ॥

(भगवत्कैङ्कर्यस्य भागवतकैङ्कर्यपर्यन्तत्वनिरूपणम्)

अत्र भगवत्कैङ्कर्यस्य भागवतकैङ्कर्यन्तत्वोक्तेर्मूलं किमिति चेत्—"[1]परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः परः शेषी" इति वेदार्थसंग्रहेऽनुगृहीतविधया सर्वेश्वरं

प्रति शेषभूतोऽयमतिशयाधानकरणार्थप्राप्तरूपः । सोऽतिशयो वस्तुशक्तिमनुरुध्य भवितुमर्हति । तर्हि जीवस्य परविषये शक्योऽतिशयः क इति परामृष्टे सति, शरीरत्वादिमुखेन क्रियमाणमतिशयाधानमस्य च, अचितश्च साधारणं भवतीति, अनेन शेषिणे विशिष्य क्रियमाणोऽतिशयश्चैतन्यमुखेन स्यात्—

तत्रायं शास्त्रविरुद्धरूपेण वर्तते चेत्—शासितुर्दण्डधरस्येश्वरस्य लीलारसमात्रमुत्पाद्य तन्मुखेनातिशयाधायको भवति । शास्त्रानुगुणरूपेण वर्तने तु, "[2]शुभे त्वसौ तुष्यति दुष्कृते तु न तुष्यतेऽसौ परमः शरीरी" इत्युक्तरीत्येश्वरस्य सन्तोषमुत्पाद्य तदीयौदार्यादिगुणानामवन्ध्यत्वापादनमुखेन "[3]उदाराः सर्व एवैते" इति तेनैवाभिनन्दनीयरूपेणातिशयाधायको भवति । तथैव नित्याः मुक्ताश्च ईश्वराभिप्रायं साक्षात्कृत्य क्रियमाणैः कैङ्कर्यैः "[4]प्रहर्षयिष्यामि सनाथजीवितः" इत्युक्तरीत्या भोगविशेषमुत्पाद्य तन्मुखेनातिशयाधायका भवन्ति । अयं प्रकारः शास्त्रमुखेनेश्वराभिप्रायं विज्ञाय कैङ्कर्यं कुर्वतः कृतकृत्यस्यापि समानः ॥

(विरुद्धानुकूलाचरणयोः फलभेदः)

अत्र शास्त्रविरुद्धैरीश्वरस्य लीलारसमात्रोत्पादने तत् स्वस्यानर्थपर्यवसितं भवति । बद्धदशायां शास्त्रेण, मुक्तदशायां प्रत्यक्षेण चेश्वराभिप्रायं विदित्वा तदनुरूपं वर्तने ईश्वरस्य लीलादिपुरुषार्थेन सह आनुषङ्गिकतया स्वस्यापि स्वभिमतपुरुषार्थः सिध्यति ।

(भागवतकैङ्कर्यस्य भगवदत्यन्ताभिमतत्वम्)

अतः चेतनेनानेन बुद्धिपूर्वं कस्यांचित् प्रवृत्तौ क्रियमाणायां स्वपुरुषार्थस्यानुषङ्गिकतयापि सिद्धेरावश्यकत्वात् तत्सिद्धेश्चेश्वराभिप्रायविशेषमूलकत्वात् तदर्थमीश्वराभिप्राये परामृष्टे सति भागवतकैङ्कर्यं तस्य सर्वतोऽपि [अतिशयितं] अभिमतं स्थितम् ।

अस्मिन्नर्थे, "[5]आराधनानां सर्वेषां विष्णोराराधनं परम् । तस्मात् परतरं प्रोक्तं तदीयाराधनं परम् ॥", "[6]मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् । तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥", "[7]मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् । मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ॥ स्वयमाराधने यत्नो ममार्थे डम्भवर्जनम् । ममानुस्मरणं नित्यं यच्च मां नोपजीवति ॥ भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते । स विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पण्डितः । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥", "[8]अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः । मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्तिताः ॥", "[9]तस्य यज्ञवराहस्य विष्णोरमिततेजसः । प्रणामं येऽपि कुर्वन्ति तेषामपि नमो नमः ॥", "[10]तदाश्रयस्याश्रयणात् तस्य तस्य च तस्य च । संसेवनान्नरा लोके पूयन्ते सर्वपातकैः ॥" इत्यादिप्रमाणेषु परामृष्टेषु राज्ञो राजकुमारोपलालनस्येव भागवतकैङ्कर्यस्य भगवतोऽ[त्यन्ता]भिमतत्वसिद्धेः शेषभूतेनानेन क्रियमाणेषु किञ्चित्कारेषु भागवतकैङ्कर्यं प्रधानं सिद्धम् ।

(तत्र भगवत्प्रीतिप्रकारनिरूपणम्)

अत्र तत्त्वविदः, प्रमाणसरणेर्निरूपणे, "[11]ये यजन्ति पितॄन् देवान्" इत्याद्युक्तरीत्या ईश्वरो भागवतशरीरकः सन् आराध्यो भवति । "[12]स च मम प्रियः" इत्युक्तरीत्या परमैकान्तिविषये प्रीतिपरतन्त्रस्य प्रकारिण आशये परामृष्टे सति, "[13]ज्ञानी त्वात्मैव मे मतम्" इत्युक्तरीत्या भागवतकैङ्कर्यं भगवान् [भागवते स्वान्तर्यामित्वारोपेण] स्वान्तर्यामिविषये कृतमित्यभिनन्देत् ।

(कैङ्कर्यस्य सद्वारकत्वम्)

इत्थं शेष्यभिमतत्वमात्रमेव न, किंतु शेषत्वरूपः सम्बन्धः सद्वारकोऽपि भवतीति कैङ्कर्यमपि सद्वारकं प्राप्नोति । तत् कथमिति चेत्—

नित्यं श्रिया समेतस्य भक्तैरात्मवतः सदा ।
सह सद्वारकं च स्याच्छेषित्वं परमात्मनः ॥

**स्वतन्त्रेण स्वच्छन्दलीलेन** राज्ञा स्वधृताभरणस्य स्वस्मै समर्पितमालायाश्च दासानां गजतुरगादीनां च कण्ठे निधानवत्, "[14]दासानां मां दासीकृतवान् विमलः" इति, "[15]नारदोऽहमनुप्राप्तस्त्वद्दर्शनकुतूहलात् । प्रभवो भगवद्भक्तामादृशां सततं द्विज" इति, "[16]अन्यत् किमपि दैवमस्तीत्यातिष्ठमानैः सह न संसृज्येय ; अङ्गीकृतश्च भवद्दासदास्यम्" इति चोक्तरीत्याऽत्यन्तपारतन्त्र्यादिमूलकं भगवदिष्टविनियोगार्हतया भगवच्छेषत्वमेव स्वकीययावदात्मभावित्व-

---

14 अडियार्कॆन्नै आट्पडुत्तविमलन्—अमलनादि 1

16 मट्रुमोर् देय्वमुळदॆन्ऱिरुप्पारोडोर्ट्रिलेन्-उट्रदुमुन्नडियार्-कडिमै. —पेरियतिरु 8-10-3.

प्रकारेण भागवतशेषत्वपर्यन्तं सिद्धम् । अत्र भागवतत्वमूलकं स्वरूपप्रयुक्तं, "[17]गुणैर्दास्यमुपागतः" इति न्यायेन गुणज्ञानमूलकं स्वेच्छाप्रयुक्तं च भागवतशेषत्वं "भगवद्भक्ताः" "मादृशाम्" इति द्वाभ्यां पदाभ्यां सूचितम् ।

(भागवतशेषत्वस्य क्रयप्रयोजकत्वम्)

अस्य भागवतशेषत्वस्य क्रयप्रयोजकताम्, "[18]कीर्तनशीलाः भागवता अस्मान् क्रेतुमप्यर्हन्ति" इति कल्पसूत्रव्याख्यातारो महादिव्यसूरयः [श्रीविष्णुचित्ताः] अनुजगृहुः । अयं मध्यमपदस्य तात्पर्यार्थः । अस्मिन्नर्थेऽनुसंहिते सति अस्य शेषत्वस्य सद्वारकतया अद्वारकतया च या स्थितिः, तां शेषवृत्तिभूतं कैङ्कर्यमपि भजते । अतः स्वशक्त्यनुरूपं भगवत्कैङ्कर्यस्य साध्याकारस्य विवृद्धिरूपा[इयं] पुरुषार्थकाष्ठाभूमिर्यथा सस्वाद्यनर्हा दुर्वीरुत्परीता च न स्यात्, तथाकरणं प्राप्तरूपम् ।

(भागवतकैङ्कर्यस्य परमैकान्तित्वानुगुणत्वम्)

इदम्, "[19]भर्तुर्भृत्यगणस्य च", "[20]आप्तो विष्णोरनाप्तश्च द्विधा परिकरः स्मृतः । नित्यो वन्द्यो न चानित्यः कर्मवश्यो मुमुक्षुभिः ॥" इति श्रीपौष्करायुक्तन्यायेन, पतिव्रताधर्मवदवस्थित-परमैकान्तित्वात्यन्तोचितं पतिचित्तानुवर्तनम् । अतो हेत्वन्तर-निबन्धनतां विना अनन्यार्हशेषत्वज्ञाननिबन्धनतयोपनतत्वादि-दमन्यशेषत्वं न विरुद्धम् ।

(भागवतशेषत्वस्य स्वाभाविकत्वौपाधिकत्वविमर्शः)

इदं भागवतशेषत्वं स्वाभाविकमौपाधिकं वेति चेत्—

कर्माद्युपाधिषु निवृत्तेषु, "[21]नित्याभिवाञ्छितपरस्परनीचभावैः" इत्युक्तरीत्या यावदात्मभावितया मुक्तदशायामप्यनुवर्तमानत्वात् स्वाभाविकमिति सुवचम् । भगवत्सम्बन्धज्ञानविशेषनिबन्धनत्वादौपाधिकमित्यपि सुवचम् ।

(परस्परशेषिभावे विरोधपरिहारः)

एवं सति द्वयोरपि भागवतत्वस्य सत्त्वादेकं प्रति परस्य शेषत्वशेषित्वयोरुपनिपातः किं न विरुद्ध इति चेत्—परस्परोपकार्योपकारकभावादिष्विवात्रापि न विरोधः । अधिकार्यवस्थायां क्रियायाः स्वं शेषिभूत एव पुरुषः कर्त्रवस्थायां क्रियायाः शेषभूतोऽवतिष्ठते । एवमन्योन्यकृतातिशयानुपजीवनेन परस्परमतिशयाधायकत्वे, अतिशयाधायकत्ववेषेण द्वयोरपि शेषत्वसंभवस्य अतिशयाश्रयत्ववेषेण द्वयोरपि शेषित्वसंभवस्य च न क्षतिः ।

इत्थमीश्वरेच्छया द्वयोरपि परस्परमतिशयाधायकत्वेन विनियुक्तत्वादुभयोरपि भागवतशेषत्वसंबन्धः प्रामाणिकः । गुणवशीकृतस्य स्वस्य बुद्ध्या भगवद्विषये भागवतविषये च जायमानं दासत्वं भोगवर्धकं सदुत्कृष्टं भवति ।

(कारणवैलक्षण्यम्)

अत्रेश्वरः स्वातन्त्र्यसहकृतया स्वेच्छया भागवतानां शेषित्वमुत्पादयति । एतदिच्छामपि सहायत्वेनावलम्ब्यैषां भागवतशेषत्वं चोत्पादयति ॥

इत्थं स्वामिन इष्टविनियोगार्हरूपेण शेषित्वेनावस्थानादुभावपि स्वरूपं लब्धवन्तौ भवतः । स्वाभीष्टस्य भागवतशेषत्वस्य

तत्फलस्य भागवतकैङ्कर्यस्य च सिद्ध्या उभावपि पुरुषार्थकाष्ठां लब्धवन्तौ भवतः । उभावपीत्थं परस्परशेषशेषित्वेन नियम्य रसानुभवादीश्वरः स्वमीश्वरत्वं भोक्तृत्वं च लब्धवान् भवति । इत्थं स्वस्योपनतं शेषत्वशेषित्वादि सर्वमीश्वरभोक्तृत्वस्य शेषभूतमिति विशदमवबोधात् द्वयोरपि निर्दोषपुरुषार्थकाष्ठा सिद्धा भवति ।

(निर्दोषपरमैकान्तिप्रसादस्य प्रार्थनीयत्वम्)

इत्थं निश्चितार्थैः सारविद्भिः कृतकृत्यैः अपराधरुचि-अतिशङ्का - अन्यदेवतास्पर्श - अस्माधीनभोग - आत्मार्थभोगरूपदोषरहितपरमैकान्तिप्रसाद एव सर्वदा स्वयंप्रयोजनतयाऽपेक्षणीयः ॥

(अधिकारार्थसंग्राहिका गाथा)

वेदज्ञभागवतविस्मयवहप्रकाशकल्याणगुणकेन नाथेन संकल्पितं प्रकारं प्राप्नुवन्तो वयं त दीयसद्दासानामत्यादरेण दास्यमभ्युपेत्य, अविनश्वरवेदशास्त्रनीतिव्यवस्थापिता स्थितिर्यथा न हीयेत तथा स्थिताः स्मः ॥

नाथे नस्तृणमन्यदन्यदपि वा तन्नाभिनालीकिनी-<br>नालीकस्पृहणीयसौरभमुचा वाचा न याचामहे ।<br>शुद्धानां तु लभेमहि स्थिरधियां शुद्धान्तसिद्धान्तिनां<br>मुक्तैश्वर्यदिनप्रभातसमयासत्तिं प्रसत्तिं मुहुः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य<br>श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु<br>श्रीमद्रहस्यत्रयसारे पुरुषार्थकाष्ठाधिकारः षोडशः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## शास्त्रीयनियमनाधिकारः १७

मुकुन्दे निक्षिप्य स्वभरमनघो मुक्तवदसौ
स्वतन्त्राज्ञासिद्धां स्वयमविदितस्वामिहृदयः।
परित्यागे सद्यः स्वपरविविधानर्थजननात्
अलङ्घ्यामामोक्षादनुसरति शास्त्रीयसरणिम् ॥

(कैङ्कर्यस्य शास्त्रसापेक्षत्वानपेक्षत्वविमर्शः)

एतच्छेषत्वसंबन्धनिबन्धनतया भगवद्भागवतविषयेऽनेन क्रियमाणं कैङ्कर्यं किं शास्त्रसापेक्षरुच्या उत शास्त्रनिरपेक्षरुच्येति चेत्—अज्ञानप्रदायां महाभूमौ वर्तमानस्यास्य शास्त्रं करदीपिकारूपमपेक्षितमिति यथाशास्त्रम्, शास्त्रविकल्पितविषये तु यथारुचि भवितुमर्हति ॥ तत् कथमिति चेत्—

(श्रीभाष्यकाराज्ञानिरूपणम्)

श्रीभाष्यकारेषु परमपदारोहणसमये उपस्थिते श्रीपादश्रितानां ज्ञानिनामार्तिं दृष्ट्वा एतानाहूय, 'मद्वियोगे देहन्यासकर्तारो यदि केचिद्भवेयुः, तर्हि—श्रीयामुनाचार्यश्रीपादावेव [साक्षीकृत्य शपे]—मया सह तेषां संबन्धो नास्ति' इति अनुगृह्योक्तवत्सु, एतेषु च तच्छ्रुत्वाऽत्यन्तं शोकार्तेषु इतः परमस्माभिः किं कर्तव्यमिति विज्ञापितवत्सु, एतैः (भाष्यकारैः) अनुगृहीतेयं वार्ता—

"कश्चित् प्रपन्नोऽनूचेत्, तदीयात्मयात्राया भगवदधी-नत्वात् तस्यां तस्यान्वयो नास्ति। अस्तीति [मन्वानो] वर्तेत चेत्, तर्ह्यात्मसमर्पणं मिथ्यैव। देहयात्रायाः कर्माधीनत्वात् तदर्थं चिन्ता न कार्या। चिन्तां कुर्याच्चेत्, नास्तिक एव। अतो यात्राद्वयमपि प्रति तस्य कार्यं नास्ति। तर्हि मनोवाक्कायरूपैः त्रिविधकरणैः स्वैरकृत्या किं संचरितुं युक्तमिति चेत्—तदस्य न स्वरूपम्। उपायांशेऽन्वयाभावेऽपि प्राप्ये कैङ्कर्ये एषामन्वयसंपादनमेव युक्तम्"

"तत्रानेनेह जीवनकाले कर्तुमर्हाणि कैङ्कर्याणि पञ्च सन्ति। तानि यथा—(१) श्रीभाष्यस्याध्ययनपूर्वकं प्रवर्तनम् (२) तद्योग्यताया अभावे दिव्यप्रबन्धानां श्रवणपूर्वं प्रवर्तनम् (३) तद्योग्यताया अभावे आदरानुगृहीतदिव्यदेशार्थं निवेदनीयान्न-अनुलेपन-दीप-माल्यादेः संपादनम्, (४) तद्योग्यताया अभावे द्वयस्यार्थानुसन्धानकरणम्, (५) तद्योग्यताया अभावे अस्मदीय इत्यभिमन्वानस्य कस्यचित् श्रीवैष्णवस्याभिमानेऽन्तर्भूय वर्तनं च कर्तुमुचितम्"

"एवं वर्तमानेनाधिकारिणा अग्रेपदन्यासस्थलदर्शनेन वर्तितुमपेक्षितास्त्रयो विषयाः सन्ति। ते यथा—अनुकूलाः प्रतिकूला अनुभये चेति। अनुकूलाः श्रीवैष्णवाः। प्रतिकूला भगवद्द्विषः। अनुभये एतदुभयहीनाः संसारिणः। अत्रानुकूलेषु दृष्टेषु चन्दन-कुसुमादिष्विव चन्द्रिकादक्षिणानिलयोरिव अभिमतविषयेष्विव आहत्य वर्तेत। प्रतिकूलानां दर्शने सर्पाग्निदर्शन इव समुद्विजमानो वर्तेत। अनुभयेषां दर्शने काष्ठलोष्ठादिदर्शन इव तृणवत्कृत्य वर्तेत।

एते चेन्नानुकूलाः, तर्हि हा हन्तेति एषां विषये कृपाकरणमपि युक्तम्''

एवंवर्तनस्य प्रतिबन्धकमर्थकामयोः प्रावण्यम् । अर्थकामौ निमित्तीकृत्य श्रीवैष्णवान् अनादृत्य स्थितश्चेत, तर्हि—सार्वभौमस्य सतः कस्यचिद्राज्ञः पुत्रं राजसन्निधौ परिभवेचेत् राजा यथा जुगुप्सेत—तथा भगवान् कुपितमनस्कः स्यात् । अर्थकामवशात् प्रतिकूलान् आदृत्य स्थितश्चेत्, राज्ञि सार्वभौमे वर्तमाने राजमहिष्याः क्षुद्रजन्तूनां सविधे वसनाञ्चलं प्रसार्य भिक्षणे प्रवृत्तौ तस्य राजावद्यावहत्वात् तेन निमित्तेन तां स यथा तिरस्कुर्यात् तथा, भगवान् अन्तःकरणेनैनं तिरस्कुर्यात् । अर्थकामवशादनुभयेषामादरणे, रत्नपाषाणयोस्तारतम्यमजानत इवास्य जातं ज्ञानं कार्यकरं न संपन्नं किलेति तद्विषये भगवान् अनादरं कुर्वीत'' इति ।

(उक्तश्रीभाष्यकाराज्ञातात्पर्यम्)

इत्थं श्रीभाष्यकारानुगृहीते उत्तरकृत्ये, ''[1]कुलटाषण्डपतितवैरिभ्यः काकिणीमपि । उद्यतामपि गृह्णीयान्नापद्यपि कदाचन ॥'' ''[2]पररन्ध्रेषु जात्यन्धाः परदारेष्वपुंसकाः । परिवादेषु ये मूकास्तेऽतीव दयिता मम ॥'' इत्यादिरीत्या **धर्मविरुद्धार्थकामानां दूरतो निरस्तत्वात् धर्माविरुद्धार्थकामोपाधिकतयाऽपि अनुकूलप्रतिकूलोदासीनविषयेषु** स्वास्थिता स्थितिर्न विनाश्येति तात्पर्यम् ।

तत्र **अनुकूलाः** नानादरणीया इत्येतत् **श्रीशाण्डिल्यस्मृतौ** ''[3]अनादृतसुतं गेही पुरुषं नाभिनन्दति । तथाऽनर्चितसद्भक्तं भगवान्नाभिनन्दति ॥'' इति प्रत्यपादि । **प्रतिकूलसंसर्गो** न कार्य इत्येतत **महाभारते**, ''[4]ये द्विषन्ति महात्मानं न स्मरन्ति च केशवम् । न

तेषां पुण्यतीर्थेषु गतिः संसर्गिणामपि ॥" इति प्रत्यपादि । तथा "[5]मूढैः पापरतैः क्रूरैर्भगवच्छास्त्रदूषकैः । संबन्धं नाचरेत् भक्तिर्नश्यत्येतैस्तु संगमे ॥" इति प्रतिकूलसंसर्गस्य भगवत्प्रेमविनाशकत्वं प्रत्यपादि । उदासीनास्तृणवत्कार्या इत्येतत् "[6]अद्यप्रभृति हे लोका यूयं यूयं वयं वयम् । अर्थकामपरा यूयं नारायणपरा वयम् ॥ नास्ति संगतिरस्माकं युष्माकं च परस्परम् । वयं तु किंकरा विष्णोर्यूयमिन्द्रियकिंकराः ॥" इत्यादिषु प्रसिद्धम् ।

इत्थं अग्रपददर्शं प्रवर्तितव्यमिति स्वानुगृहीतस्यार्थस्य शास्त्रैकवेद्यत्वात् शास्त्रीयाणामुपलक्षणरूपेण सारोद्धारपूर्वकमेभिरनुगृहीतानां कैङ्कर्याणामपि स्वेच्छयाऽनुष्ठातुमयुक्तत्वात् शास्त्रीयनियमैः सहानुष्ठितत्वे एव कैङ्कर्यत्वसिद्धिरिति सूचितं भवति । "स्वैरं तत्तत्कुर्वता किं संचरितुं युक्तमिति चेत्—तदस्य न स्वरूपम्" इत्यनुगृहीततया, "[7]अशास्त्रमासुरं कृत्स्नम्" इति श्रीयामुनाचार्यानुगृहीतरीत्या शास्त्रविरुद्धानां देवप्रकृतेरस्य स्वरूपाननुरूपतया च "[8]श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥" इति दास्यग्राहिणा(स्वामिना) अनुगृहीतत्वाच्चानेन यावच्छरीरस्थिति शास्त्रवश्येन दास्यं कर्तव्यमिति तात्पर्यम् ।

(श्रीयामुनाचार्यसूक्तिभावः)

"[9]निजकर्मादि भक्त्यन्तं कुर्यात् प्रीत्यैव कारितः । उपायतां परित्यज्य न्यस्येद्देवे तु तामभीः ॥" इति श्रीगीतार्थसंग्रहे "प्रीत्यैव" इत्यवधारणेन साधनत्वबुद्धिं व्यवच्छिनत्ति स्मेत्येतत्, "उपायतां

परित्यज्य'' इति विवरणात् व्यक्तम्। शास्त्रीयकैङ्कर्ये प्रीतेः प्रेरकत्वातिशयस्य विवक्षितत्वेऽपि, ''निजकर्मादि भक्त्यन्तम्'' इत्युक्तानामेषां स्वरूपे शास्त्रमेव प्रमाणमित्येतत् निजकर्मशब्देन दर्शितमिति सिद्धम्।

(प्रपन्नस्य शास्त्रीयनियमे प्रमाणम्)

अयं शास्त्रीयनियमः, ''[10]अविप्लवाय धर्माणां पालनाय कुलस्य च। संग्रहाय च लोकस्य मर्यादास्थापनाय च॥ प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः। मनीषी वैदिकाचारं मनसाऽपि न लङ्घयेत्॥'' इति प्रपत्त्यध्याये प्रसिद्धः॥

(शास्त्रीयनियमातिक्रमे अनिष्टम्)

एतत्त्यागे जायमानमनिष्टञ्च, ''[11]यथा हि वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम्। लोकोपयोगिनीं रम्यां बहुसस्यविवर्धिनीम्॥ लङ्घयन् शूलमारोहेत् अनपेक्षोऽपि तां प्रति। एवं विलङ्घयन् मर्त्यो मर्यादां वेदनिर्मिताम्। प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनात्॥'' इति अनन्तरमभ्यधायि। अस्या भगवदप्रीतेः कृते क्षमां न याचेत चेत्, तर्हीयं मुक्तत्वसिद्धेः पूर्वमेवाधिकारानुरूपं यत् किंचिदनिष्टं जनयेत्। तदस्तु; सत्त्वप्रकृतेरस्य भगवदप्रीतेरधिको नरको नास्ति। तस्या भगवदप्रीतेः शान्तिरपि पश्चात् क्षमायाच्ञायां कृतायाम्। ''[12]सुहृदं सर्वभूतानाम्'' इति निसर्गसुहृद ईश्वरस्याप्रीतिः आशमनमस्यारुन्तुदा स्यात्। अनेवम्भूतस्य स्वामिविषये आवण्यम्, कैङ्कर्यरूपे मोक्षे रुचिश्च शङ्कितव्ये भवतः।

(शास्त्रीयनियमस्य रहस्यत्रयेऽनुसंधानप्रदेशः)

अस्याज्ञातिलङ्घनस्य "[13]प्रहर्षयिष्यामि" इति उद्देश्याया भगवत्प्रीतेर्विरोधित्वात् अयं शास्त्रीयनियमो रहस्यत्रये विरोधिनिवृत्त्यनुसन्धानप्रदेशेषु अनुसन्धातुमर्हः ।

(शास्त्रीयनियमानुवर्तनफलम्)

इदं नियमानुवर्तनं पूर्णोपायपुरुषव्यतिरिक्तानामधिकारिणामुपाय-पूर्तिविरोधिशमनपूर्वं भगवत्प्रसादनं भवति । पूर्णोपायानामति-लङ्घनहेतुकाप्रीत्युत्पत्तिप्रतिबन्धकं सत् भगवत्प्रीणनं भवति ।

आज्ञानुज्ञाविभागेन द्विधा शास्त्रीयपद्धतिः ।
निग्रहानुदयायाऽऽद्या परा तत्तत्फलाप्तये ॥
अनुज्ञया प्रवृत्तेऽपि क्रमकोपादिसंभवे ।
आज्ञातिक्रमदोषः स्यान्नियमोऽतो दुरत्ययः ॥
प्रत्यवायपरीहारे फलान्तरसमन्विते ।
तत्र संवलितं प्राहुरधिकारं विचक्षणाः ॥
नित्यकाम्यस्वरूपैक्ये विनियोगपृथक्त्वतः ।
फलार्थं क्रियमाणेऽपि नित्यं भवति तन्त्रतः ॥
अनुज्ञामात्रसिद्धेषु कैङ्कर्येषु विचक्षणैः ।
अकृतौ तत्फलालाभो न तु दोष इतीरितम् ॥

---

नित्रनमग्वुडैवानोर् निलैयिल् निलमलन्दान्
नन्रिदु तीयदिदेन्रु नडत्तिय नान्मरैयाल्
इन्र नमक्किरवादलिनिम्मदियिन्निलंवे
अन्रियडिक्कडियारिरुलैतीर्क्कवडियुलंदे.

(अधिकारार्थसंग्राहिका गाथा)

स्थिताः सः प्रेमवतां दिविषदां स्थितौ, भुवं क्रान्तवता साध्वेतत् असाध्वेतदिति(वेदयितुं)प्रवर्तितया चतुर्वेद्या । अद्यास्माकं हि रात्रिः ; तत् अस्य चन्द्रस्य ज्योत्स्नामन्तरा उपर्युपरिवर्धमानान्धकारनिवर्तने उपायोऽस्ति किम् ॥

श्रुतिस्मृत्याचारैः स्वमतिगतिभिः शुद्धमनसां
सुसंकल्पैर्धर्म्यैः कुलचरणदेशादिसमयैः ।
नियोगैर्योग्यानां नियमयितुरादेरभिमतं
निमित्तस्वप्नाद्यैरपि निपुणमन्विच्छति बुधः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
शास्त्रीयनियमनाधिकारः सप्तदशः
श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

# अपराधपरिहाराधिकारः १८

स्वच्छस्वादुसदावदातसुभगां दैवादयं देहभृत्
मालिन्यप्रशमाय माधवदयामन्दाकिनीं विन्दति ।
यद्यप्येवमसावसारविषयस्रोतःप्रसूतैः पुनः
पङ्कैरेव कलङ्कयन्(येत्)निजतनुं प्राज्ञैर्न संश्लिष्यते ॥

(प्रपन्नानामनापदि बुद्धिपूर्वापराधासंभवः)

इत्थं भगवच्छेषतैकस्वभावत्वात् शास्त्रनियततरकैङ्कर्यैकरस-स्यास्याधिकारिणः उत्तरकाले अनापदि बुद्धिपूर्वकापराधप्राप्तिः स्वीकृतकैङ्कर्यैकनिष्ठाया विरुद्धत्वात् प्रायेण न संभाविता ।

(अश्लेषविषयापराधनिरूपणम्)

प्रारब्धकर्मविशेषवशात् देशकालावस्थावैगुण्यहेतुकाः, प्रामादिकाः, सुषुप्त्याद्यवस्थासु जायमानाश्चापराधलेशाः अश्लेषविषयाः सन्तो निवर्तेरन् ।

(अनापत्कृतबुद्धिपूर्वाघानां प्रायश्चित्तनिवर्त्यत्वम्)

बुद्धिपूर्वकपापारम्भकपापेभ्यो भयेन, 'तान्यपि नश्यन्तु' इति, (धिया) प्रपत्तिमकृत्वा, "[1]सर्पेण सहैकस्मिन् गृहे निवासिन इव" प्रकृत्या सह वसतोऽस्य आत्मगुणपूर्त्यभावात् मन्दधैर्याणा-

---

1 पाम्बोडु ओरुकूरैयिलेपयिन्नार् पोले-पेरियतिरुमोडि 11-8

मृषीणामिव बुद्धिपूर्वाणां केषाञ्चित् स्वनिष्ठाविपरीतानां संभवेऽपि, निसर्गसुहृदः श्रीपतेः रक्षणोन्मुखतयाऽवस्थानादेषां विपरीतानुष्ठानानि विद्युदुद्योतमात्ररूपाणि अस्मास्वनूनीति तदानींतनीं स्वनिष्ठावैपरीत्यरूपां हानिं झटित्यनुसंदधानस्य यथोचितलज्जानुतापोत्पत्तौ, "[2]अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् । प्रायश्चित्तिरियं साऽत्र यत् पुनः शरणं व्रजेत् ॥ उपायानामुपायत्वस्वीकारेऽप्येतदेव हि ॥", "[3]अज्ञानादथवा ज्ञानादपराधेषु सत्स्वपि । प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव केवलम् ॥", "[4]विदितः स हि धर्मज्ञः शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि । प्रसादयस्व त्वं चैनं शरणागतवत्सलम् । मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ॥" इत्याद्युक्तरीत्या यथाधिकारं प्रायश्चित्तावलम्बनं भवति ॥

(प्रायश्चित्ताकरणेऽपि लघुशिक्षया रक्षणम्)

प्रारब्धकर्मविशेषात् कठिनप्रकृतितया क्षमायाच्ञायामपि हस्तच्युतायाम्, "स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥", "देवं शार्ङ्गधरं विष्णुं ये प्रपन्नाः परायणम् । न तेषां यमसालोक्यं न च ते नरकौकसः ॥" इति वैष्णववामनादिपुराणवचनमूलभूतश्रुत्युक्तरीत्या यमविषयगमनमन्तरैव, कुन्तवेधननिवर्त्यस्य कण्टकवेधेन निवृत्तिरिति न्यायेन 'काणः, खञ्जः' इत्याद्याम्नातैहिकोपक्लेशमुखेन, शिखाकर्तकोपायान्

अवलम्ब्य सर्वेश्वरः क्षमा प्रेम-दया-वात्सल्यादिभिः शान्तप्रतापः सन्—अधिकदण्डनप्रयोजकस्यापराधस्य कृते यथा सेव्यः सार्वभौमः विदूषक-अन्तःपुरपरिजन-कुब्ज वामन-कुमारविषये अपराधानुगुण-मन्तरङ्गत्वादितारतम्यानुगुणं च, संबन्धानृशंस्यादिभिः प्रीतौ प्रवर्तमानायां सत्यामेव, तैः कृतस्यापराधस्य कृते क्षमायाचनार्थम् अग्रेऽपि शिक्षार्थञ्च मुखदर्शनाप्रदान-कशाताडन-गलहस्तिकाप्रयोग-द्वारनिरोधन-किञ्चित्कालिकसेवात्याजनानि करोति—तथा काकन्यायेन किञ्चि-ल्लघुदण्डकरणेन इमान् आश्रितान् रक्षति ।

(अन्यादृशाभियुक्तवाक्यतात्पर्यम्)

इत्थं मृदुप्रकृतीनां क्षमायाचने प्रवर्तनं कठिनप्रकृतीनां शिक्षारूपदण्डविशेषविधानं च पूर्वप्रपत्तिफलभूतायाः क्षमायाः प्रकारभेद इति शिक्षकशेषिविषये कृतज्ञतानुवर्तनार्थम्, 'बुद्धिपूर्वाघमपि क्षाम्येत्' इति केचिदूचुः ।

ननु क्षयानिष्टौ प्रपत्तिर्हीयेत ॥ न ॥

प्रारब्धकर्मणि पापांशस्यैव बुद्धिपूर्वोत्तराघस्य प्रायश्चित्ताकरणे साफल्यावश्यम्भावेऽपि, कृता प्रपत्तिः मोक्षप्रदत्वेव हीयेतेति न शङ्कनीयम् । मूलनिक्षिप्तहिङ्गुकानां वृक्षाणां स्थलादिविशेषैः शोषणस्य कालतारतम्यं भवतीत्येतावदेव ; अत्राप्येषां संसारस्य निःशेष-निवृत्त्युत्पत्तौ विलम्बाविलम्बवैषम्यमेव भवति । एतद्देहानन्तरं मोक्षः प्राप्तव्य इत्यपेक्षितत्वेऽपि, अनियतायुषां सतां विलम्बाक्ष-माणाम् आयुर्वृद्ध्या विलम्बो भवति । नियतायुषां विद्यमानायुर्मध्ये एव फलति ।

(राक्षसीनां बुद्धिपूर्वाघफलानुभवप्रदर्शनम्)

"[8]भवेयं शरणं हि वः" इत्युक्त्यनन्तरमपि जाता राक्षसीनां बुद्धिपूर्वापचाराः, "मर्षयामीह दुर्बला", "[10]पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम!" इत्युक्त्या श्रीजानक्याः क्षमाविषया अभवन्निति न किमिति चेत्—तत्रापि तासां 'श्रीहनूमान् हनिष्यति' इति भये जाते पश्चात् वधनिवारणस्य कृतत्वात्, अनिमुख्य त्याग इव दण्डलेशः क्षमा च सिद्धौ ॥

अतः **प्रपन्नस्य बुद्धिपूर्वाघलेपो** न भवतीति विशिष्य प्रतिपादके कस्मिंश्चित् प्रमाणे असत्येव,—अस्य पश्चात् बुद्धिपूर्वाघे जातेऽपि क्षमा न याचनीयेति, क्षमायाचनाभावेऽपि **शिक्षणरूपदण्डविशेषो** नेति, विलम्बाक्षमाणां **परमफलस्य विलम्बो** न भवतीति, **प्रारब्धसुकृतविशेषादिनिबन्धनस्येहत्यकैङ्कर्यस्य विच्छेदसंकोचौ न** भवत इति चोच्यमानाः पक्षाः **शरण्यगुणानां शरणागतिप्रभावस्य** च प्रतिपादनार्थं प्रवृत्ता इत्येव[तत्त्वम्]। अन्यथा **प्रपन्नानां पूर्वेषामनुष्ठानपरम्परायाः**, प्रपन्नमधिकृत्यैव **प्रायश्चित्तविधायकस्य शास्त्रस्य**, मोक्षप्राप्त्यर्थं कालविशेषोद्देशपूर्वकं प्रपत्तिमकृतवतामनुवृत्तबुद्धिपूर्वापराधानां **विलम्बाक्षमाणां** विलम्बस्य प्रतिपादकानां प्रमाणानां च सांगत्यं न स्यात्।

"[11]सर्वपापेभ्यो मोक्षयिष्यामि" इति सामान्यत उक्तेऽपि "[12]प्रायश्चित्तिरियं साऽत्र यत् पुनः शरणं व्रजेत्" इति विशिष्योक्तत्वात् बुद्धिपूर्वोत्तराघस्य प्रपत्त्यनन्तरं प्रायश्चित्तत्वेन प्राप्तं भवति। पुन-

ऽशरणागतिविधायकं वचनमादौ बुद्धिपूर्वोत्तराघपरिहारस्यापि कृते प्रपत्तिमकृतवतां विषये नियम्यतामिति वक्तुमयुक्तम् । बुद्धिपूर्वोत्तराघं प्रत्यपि प्रपत्तिः कर्तुं युक्तेति विशिष्य कण्ठोक्तया प्रतिपादकस्य कस्यचिद्वचनस्य सद्भावे किल एवं नियमयितुं शक्यम् । इयं प्रपत्तिर्बुद्धि-पूर्वोत्तराघस्यापि परिहारिकेति ज्ञाते सति अस्यायत्नलाभस्य (अस्य प्राप्तापरित्यागस्य) उपेक्षका दुर्लभा इति पुनः प्रपत्तिवचनं निर्विषयं स्यात् । सामन्यवचनशक्त्यवष्टम्भेन विशेषवचनबाधनं न युक्तम् । इत्थं विशेष-वचनबाधने उपासननिष्ठस्यापि बुद्धिपूर्वोत्तराघमपि न दोषः स्यात् ।

(उपासकप्रपन्नयोर्यमवश्यत्वादिदण्डाभावाविशेषः)

बुद्धिपूर्वोत्तराघसंभवेऽपि परमैकान्तिनामेषामुभयेषां यमवश्यतादिकं नास्तीत्ययमर्थः, “[13]यस्मिन् कस्मिन् कुले जाताः यत्रकुत्रनिवासिनः । वासुदेवरता नित्यं यमलोकं न यान्ति ते ॥” इत्यादिवचनबलात् सिद्धः । एकं पापमेव जातिगुणाद्यधिकार-भेदाद्गुरुलघुफलभेदवत् भवतीत्ययमर्थः सर्वसंप्रतिपन्नः । अयमर्थो राजपुत्रापराधादिष्विव लोकमर्यादयाऽप्युपपन्नः ।

न प्राग्वद्बुद्धिपूर्वाघे न चात्यन्तमनु(नि)ग्रहः ।
लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत् ॥

(अधिकारिविशेषे प्रायश्चित्तविशेषः)

अतोऽधिकारानुरूपं लघुफलस्याप्यप्रसङ्गार्थं पुनः प्रपदनं विधीयते । शिष्टतया व्यपदेश्यस्य समर्थस्य लोकसंग्रहार्थमपि प्रसिद्धनिमित्तेषु यथाशक्ति प्रसिद्धप्रायश्चित्तमुचितम् ।

(अकरणेऽनिष्टनिरूपणम्)

तत्त्यागोऽपि पूर्वोक्तमाज्ञातिलङ्घनम् । सैरन्ध्रिकायाः सेवात्यागे तादात्त्विकपरिमलाद्यननुभवः भयानुभवश्च यथा भवतः, तथा आज्ञातिलङ्घनमुभयथाऽनर्थो भवति ।

स्वेच्छामात्रेण बुद्धिपूर्वोत्तराघमप्युद्दिश्य आदौ प्रपदनं क्रियतामिति चेत्—इदम्, उपासनस्यापि बुद्धिपूर्वोत्तराघपरिहाररूपेणानुष्ठानं भवतु, अङ्गप्रपत्तिरपि तत्कोडीकारपूर्वं क्रियतामिति प्रतिबन्द्या निरस्तम् । उभयोरप्येवं भवत्विति वादो भाष्यादिविरुद्धत्वादपसिद्धान्तः । उपस्तिप्रभृतीनां ब्रह्मनिष्ठानामनुष्ठानस्य विरुद्धश्च । अतो विशेषवचनाभावात् "[14]कृते पापेऽनुतापो वै" इत्यादिरीत्या निमित्तेऽनुदिते नैमित्तिकमुक्तिं न भवतीति न्यायो बुद्धिपूर्वोत्तराघविषये भवन् बाधितो न भवति ।

(प्रपत्तेः प्रारब्धनिवर्तकत्वम्)

अतश्च आगामिबुद्धिपूर्वपापात् भीतश्चेत्—तत्कारणीभूतप्रारब्धपापस्य कृते प्रपदनरूपं प्रायश्चित्तं कर्तुं युक्तम् । "[15]साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी" इत्यूचुः किल । "[15]जन्मान्तरकृतं पापं व्याधिरूपेण बाधते । तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥" इत्यादिषु दानजपादीनामपि प्रारब्धपापनाशकत्वमुक्तं किल । अतः पापारम्भकपापेभ्यो भीतः सन् प्रपत्तिं कृतवांश्चेत्, तदा बुद्धिपूर्वपापं नैवोदियात् ।

(अन्तरङ्गाणामपि बुद्धिपूर्वाघस्यानर्थावहत्वम्)

"[17]दासः सखा वाहनमासनं ध्वजः" इत्यादिरीत्याऽत्यन्त-भगवदन्तरङ्गाणामपि सात्त्विकापराधलेशोऽपि प्रत्यवायकर इत्येतत् शाण्डिलीवृत्तान्तादिषु प्रसिद्धम् । सर्वेश्वरवत् सूरयोऽप्यवतारेषु कर्मवश्यत्वाभिनयं कृत्वा लोकहितप्रवर्तनार्थं अपराधपरिहारादीनि कुर्युः ।

(अपराधमूलकारणनिराकरणप्रकारः)

अतो भगवत्प्रीतिहान्यभावार्थं तदर्थं पुनःप्रपत्तेर्लघुदण्डस्य चा प्रसक्त्यभावार्थं च आगाम्यपराधानां मूलच्छेदनोपायोऽन्वेषणीयः । अपराधानां सर्वेषां मूलम्-अविवेकः । तत्र प्रधानभूतोऽविवेकोऽचित्स्व-भावानां जडत्वविकारादीनां वहनम् ईश्वरस्वभावानां स्वनिष्ठत्वस्वा-तन्त्र्यानन्यार्थत्वादीनां वहनं च । अस्याविवेकस्य छेदनार्थं तीक्ष्णा-सिभूतं तावत् न्यूनाधिकभावराहित्येन स्वस्वरूपगोचरं विशदज्ञानम् ।

अविवेकप्रभुत्वादेर्निदानस्य निवर्तनात् ।
अर्थकामापचाराणामयत्नोन्मूलनं भवेत् ॥

अस्य सर्वस्यापि मूलं फलप्रदानोन्मुखं किञ्चित्पूर्वाघमिति तन्निवृत्त्यर्थमप्यादौ प्रपत्त्यनुष्ठानम्, एतदर्थं पश्चादेकस्याः प्रपत्तेरनुष्ठानं चा कृतवतामिदं सर्वं परिहृतं भवति ।

(परिहरणीयेषु भागवतापचारप्राधान्यम्)

एवमस्य परिहरणीयेषु राजदारापराधवत् भागवतापचारः प्रधानभूत इत्येतमर्थम् "[18]एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदव-स्थावधृतेः" इति सूत्रे भाष्यकारा अनुजगृहुः ।

(भागवतविषये वर्तनप्रकारनिरूपणम्)

अतश्च जातिगुणवृत्तादिभिरुत्कृष्टानां पराशरव्यासशुक-शौनकनाथमुनिप्रभृतीनां स्वस्य च भागवतत्वादेः परमपुरुषार्थ-लाभस्य च तुल्यत्वेऽपि भगवत्परिगृहीतगोगोपजातीनां तुलसी-चम्पकादीनां गोमयमृगमदादीनां च वैषम्यवत् भगवत्संकल्प-विशेषप्रयुक्ततत्तदुपाधिस्वभावसिद्धयोरुत्कर्षापकर्षयोः असूया प्रादुर्भावप्रकरणाम्नातरीत्या तिरस्करणेऽनभिसन्धिः,

जात्याद्युपाधिभिर्भागवतविषये "[19]अनुज्ञापरिहारौ देहसं-बन्धात् ज्योतिरादिवत्" इत्युक्तन्यायेन प्रवृत्तिनिवृत्तिविशेषाणां यथाशास्त्रं नियमे सत्यपि "[20]साधुरेव स मन्तव्यः" इति, "[21]स्मृतः सम्भाषितो वाऽपि" इति, "[22]यः शूद्रं भगवद्भक्तं निषादं श्वपचं तथा। वीक्षते जातिसामान्यात् स याति नरकं नरः॥" इति, "[23]तस्माद्विष्णु-प्रसादाय वैष्णवान् परितोषयेत्। प्रसादसुमुखो विष्णुस्तेनैव स्यान्न संशयः॥" इति, "[24]वर्धमानरम्भं तेजः" "[25]महान्भामोहवति दास्यम्" इति(दशकद्वय) विशेषितरीत्या प्रतिपत्तौ न्यूनताराहित्येन वर्तनम्,

एतत्प्रतिपत्तिमात्रेणापि "तस्येदमिति धीहेतुरप्युपकारी" इत्युक्तरीत्या परिपूर्णविषये शेषत्वोचितकिञ्चित्कारभूतं कैङ्कर्यं सिद्धमिति स्थितिः,

---

24 पयिलुंशुडरोलि—तिरुवाय्मोड़ि-3-7

25 नेडमार्कडिमै—तिरुवाय्मोड़ि-8-10

आसु स्थितिषु एकस्या अपि वक्रीभावे "[26]सर्वं जिह्मं मृत्युपदम् आर्जवं ब्रह्मणः पदम्" इत्युक्तरीत्या मृत्युमुखप्रविष्टेनेव भीतेन "[27]कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम्। अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात्॥ इति, "[28]यदि किञ्चिदतिक्रान्तं विश्वासात् प्रणयेन वा। प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति॥" इति, "[29]यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम्। मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसि" इति **महाराजस्य** वालस्वामिनश्च (लक्ष्मणस्य च) **अन्योन्यप्रसादनप्रकारं** प्रतिपादयतः **श्लोकान् परामृश्य**, सस्नेहं विदीर्णप्रदेशो यथा न ज्ञायेत तथा वज्रलेपघटितवत् वर्तनञ्चेतीमानि युक्तानि।

(प्राज्ञापराधस्यापि क्षन्तव्यत्वम्)

स्यादयं ज्ञानी सन् **प्रातिकूल्ये बुद्धिपूर्वं प्रवृत्तः**, तथापि **पुनःप्रपत्त्या सर्वेश्वरः** क्षाम्येदित्ययमर्थः—**श्रीबदरिकाश्रमे क्रोधान्धं धर्मात्मजभगवद्विषये** प्रत्यस्त्रप्रयोक्तारं रुद्रं ब्रह्मणि प्रतिबोध्य निवारितवति, तस्मिंश्च "[30]प्रसादयामास भवो देवं नारायणं प्रभुम्। शरणं च जगामाऽऽद्यं वरेण्यं वरदं हरिम्॥" इति प्रसादनभूतां शरणागतिं कृतवति सति, "[31]ततोऽथ वरदो देवो जितक्रोधो जितेन्द्रियः। प्रीतिमानभवत् तत्र रुद्रेण सह संगतः॥" इत्यनेन **सर्वेश्वरः प्रसन्नो भूत्वा रुद्रमङ्गीचकारेति** प्रतिपादनेन सिद्धः।

(भागवतानां प्रसादनीयत्वम्)

स्वस्य सापराधत्वात्, स्वस्येदानीं सापराधत्वाभावेऽपि जन्मान्तरदुष्कृताद्वा केषुचिद्भागवतेषु स्वविषये कुप्यत्सु सत्सु, येन केनाप्युपायेन

तेषु क्षमायाचनमुखेनैवेश्वरः क्षमां याचनीय इत्येतत् "[32]रूक्षाक्षराणि शृण्वन् वै तथा भागवतेरितान्। प्रणामपूर्वकं क्षान्त्या यो वदेत् वैष्णवो हि सः ॥" इति श्रीवैष्णवलक्षणप्रतिपादकप्रमाणे प्रसिद्धम् ।

(प्रसादनाकरणेऽनिष्टनिरूपणम्)

एवमकरणे, "[33]ये ब्राह्मणास्तेऽहमसंशयं नृप तेष्वर्चितेष्वर्चितो-ऽहं यथावत्। तेष्वेव तुष्टेष्वहमेव तुष्टो वैरं च तैर्यस्य ममापि वैरम् ॥", "[34]घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेत् यथाऽहम् । स पापकृद्ब्रह्मदवाग्निदग्धो वध्यश्च दण्ड्यश्च न चास्मदीयः ॥" इत्युक्तरीत्या भगवदभिमानबाह्यः; वैष्णवप्रकृतेः स्वस्य स्वरूपमिति यथोच्येत तथाऽन्तरङ्गभूताद्भागवतशेषत्वात्, स्वभावतया स्थिताच्छ-मदमादेश्च हीयेत। एतद्धानिरेवास्य वधो दण्डश्च । भगवदभिमा-नबाह्यतायाः क्रौर्यम् "[35]अनुकम्प्योऽस्मदीयो बाल इति न वदन्ति हा क्रूरमिदम्" इति भागवतशेषत्वमेव स्वस्य निरूपकतया रोचयन् भक्ताङ्घ्रि-रेणुदिव्यसूरिरनुजग्राह । अनयोः श्लोकयोर्ब्राह्मणशब्दः, "[36]विष्णुं क्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्त्वदर्शी" इत्युक्त-प्रक्रियया विशेषविषयः। सामान्यविषयत्वेऽपि भागवतविषये-ऽपराधः कैमुतिकन्यायसिद्धः ।

अनुतापादुपरमात् प्रायश्चित्तोन्मुखत्वतः ।
तत्पूरणाच्चापराधाः सर्वे नश्यन्ति पादशः ॥

---

35 अलियनस्पयलेन्नारम्मवोकाडियवारे—तिरुमालै-37

पूर्वस्मिन् वा परस्मिन् वा कल्पे निर्विण्णचेतसाम् ।
निवर्त्यतारतम्येऽपि प्रपत्तिर्न विशिष्यते ॥
एवमेव लघूनां वा गुरूणां वापि वाऽऽगसाम् ।
सकृत्प्रपत्तिरेकैव सद्यः प्रशमकारणम् ॥

अधिकारार्थसंग्राहिका गाथा)

विद्यमानस्य दृढस्य पापस्य कृते भीतमनस्काः लोकं क्रान्तवत् अभिवृद्धं कमलद्वन्द्वं दृढशरणतया वृतवन्तो यवस इत्युक्त्यहं वर्धमानं कर्म त्यजेयुः, त्यागेऽपि दुर्बलस्थितिनाशायास्मदुपकारकस्य कृपामधु जृम्भेत ॥

प्रारब्धेतरपूर्वपापमखिलं प्रामादिकं चोत्तरं
न्यासेन क्षपयन्ननभ्युपगतप्रारब्धखण्डं च नः ।
धीपूर्वोत्तरपाप्मनामजननात् जातेऽपि तन्निष्कृतेः
कौटिल्ये सति शिक्षयाऽप्यनघयन् क्रोडीकरोति प्रभुः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कट-
नाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
अपराधपरिहाराधिकारः अष्टादशः संपूर्णः ।
श्रीमते निगमान्तमहादेशिकाय नमः

—o—o—

---

उलेतानवलिवनैक्कुलम् वेलवियुलगलेन्द
वलरतामरैयिणै वन् शरणाह वरित्तवर् ताम्
कलैतानेन वेड्क्कमन्तुरप्पर् तुरन्दिदिडिलुम्
इलैतानिलैशेक्र वेङ्गल् पिरानरुट्टेनुड्मे.

श्रीः

## स्थानविशेषाधिकारः १९

यत्रैकाग्र्यं भवति भगवत्पादसेवार्चनादेः
यत्रैकान्त्यव्यवसितधियो यस्य कस्यापि लाभः ।
वासस्थानं तदिह कृतिनां भाति वैकुण्ठकल्पं
प्रयो देशा मुनिभिरुदिताः प्रायिकौचित्यवन्तः ॥

(धर्मोत्तरदेशस्य वासस्थानत्वम्)

जीवनकाले इत्थं **स्वयंप्रयोजननिरपराधानुकूलवृत्तौ** रुचिस्वराञ्च विश्राणस्य, "[1]एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः। विष्णुना व्यपदेष्टव्यस्तस्य सर्वं स एव हि ॥" इत्युक्तरूपस्य **परमैकान्तिनो वृत्त्यनुगुणो वासस्थानविशेषः** क इति चेत्—**आर्यावर्तादिपुण्यदेशानां युगस्वभावेनेदानीं व्याकुलत्वात्** प्रतिष्ठितचातुर्वर्ण्यधर्मकेषु स्थलेषु वसेदित्येतावदेवेदानीमुपादेयम् ।

(भागवतोत्तरदेशस्य परिग्राह्यत्वम्)

तत्रापि "[2]श्यामलबृहन्मेघवर्णं रक्षकत्वेनाश्रित्याञ्जलिबन्धं कुर्वाणैर्भक्तैरधिष्ठिते ग्रामे वसन्तो मानवाः कानि नु तपांसि कृतवन्तः"

---

2 करुन्तडमुहिल् वण्णनैक्कडैक्कोण्डु कैतोडुम्
पत्तरकलिरुन्दवूरि लिरुक्कुमानिडरेत्तवङ्गल्
शेय्दार्कोलो—पेरियाड्वार तिरुमोड़ि 4-4-7

इत्युक्तरीत्या **भागवतोत्तरो देशो मुमुक्षोः परिग्राह्यः** । "[3]कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् । नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः इत्युक्तेऽपि, "कलौ खलु भविष्यन्ति नारायणपरायणाः । क्वचित् क्वचिन्महाभागा द्रमिडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी । कावेरी च महाभागा प्रतीची च महानदी ॥ ये पिबन्ति जलं तासां मनुजा मनुजेश्वर । प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥" इत्यादिषु **कलियुगे भागवतवासस्थानभूतानां देशविशेषाणां** प्रतिपादनादस्मिन् युगे एषु **प्रदेशेषु भागवतपरिगृहीतानि स्थलान्येव परिग्राह्याणि** । **श्रीनारायणीये,** "[5]एकपादस्थिते धर्मे यत्र क्वचन गामिनि । कथं वस्तव्यमस्माभिर्भगवंस्तद्वदस्व नः ॥" **इति देवेषु ऋषिषु च** विज्ञापयत्सु, "[6]गुरवो यत्र पूज्यन्ते साधुवृत्ताः शमान्विताः । वस्तव्यं तत्र युष्माभिर्यत्र धर्मो न हीयते ॥ यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा । हिंसा च धर्मसंयुक्ता प्रचरेयुः सुरोत्तमाः । स वै देशो हि वः सेव्यो मा वोऽधर्मः पदा स्पृशेत् ॥" इति **भगवाननुजग्राह** ।

तत्रापि मङ्गलाशासनविषयभूतेषु दिव्यदेशेषु स्वस्य कैङ्कर्यसौकर्ययुक्ते स्थाने निरन्तरवासः कर्तुमुचितः । इदम्, "[7]यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व" इति **सत्त्वोत्तरभगवत्क्षेत्र**प्रदर्शनार्थतयाऽनुजग्राह । **भगवत्क्षेत्राण्येव विवेकिनो वासस्थानानी**त्येतमर्थं "[8]यत्र नारायणो देवः परमात्मा सनातनः । तत् पुण्यं तत् परं ब्रह्म तत् तीर्थं तत् **तपोवनम्** । तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः ॥"

इत्यरण्यपर्वणि तीर्थयात्रायाम्, "[9]गोमन्तः पर्वतो राजन् सुमहान् सर्वधातुमान्। वसते भगवान् यत्र श्रीमान् कमललोचनः। मोक्षिभिः संस्तुतो नित्यं प्रभुर्नारायणो हरिः॥" इति प्रदेशान्तरे च महर्षिरनुजग्राह। श्रीवाल्मीकिभगवतापि, "सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः। यस्मिन् वसति काकुत्स्थः कुबेर इव नन्दने॥" इत्यत्र भगवदधिष्ठितक्षेत्रस्याभिगन्तव्यत्वं सुभगशब्देन सूचितम्। श्रीसात्त्वतादिषु च स्वयंव्यक्तं सैद्धं वैष्णवं इत्युच्यमानान् क्षेत्रविशेषान् तेषां सीमसु न्यूनत्वाधिक्ये च पृथक् प्रतिपाद्य, "[11]दुष्टेन्द्रियवशाच्चित्तं नृणां यत् कल्मषैर्वृतम्। तदन्तकाले संशुद्धिं याति नारायणालये॥" इति तत्तत्क्षेत्रेषु सीमाभ्यन्तरे निवासिनो देहन्यासकाले जायमानो विशेषोऽभ्यधायि। अतः "[12]यत्किञ्चिदपि कुर्वाणो विष्णोरायतने वसेत्। न किञ्चिदपि कुर्वाणो विष्णोरायतने वसेत्॥" इत्युक्तरीत्या प्रवृत्तिनिवृत्तिभ्यां शक्यं कैङ्कर्यं कुर्वता सता भगवद्भागवताभिमानविषये सत्त्वोत्तरक्षेत्रे निवासः कर्तुं उचितः।

(गत्यभावे परमैकान्त्यधिष्ठितस्य प्राशस्त्यम्)

"[13]निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः। तत्र तत्र कुरुक्षेत्रं नैमिशं पुष्करं तथा॥" इत्युक्तिरपि, गत्यन्तराभावे यस्मिन् कस्मिंश्चिदपि देशे वसेच्चेत्, एतद्वासात् स देशः प्रशस्त इति प्रतिपादनार्था। अस्य शाण्डिलीवृत्तान्त उदाहरणत्वेन द्रष्टव्यः। अतः "[14]ज्ञानसमकालमुक्त्वा कैवल्यं याति गतशोकः। तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम्॥" इति शरीरपातविषये देशविशेषनियमो नास्तीत्येतदपि सर्वथा फलहानिर्नास्तीत्येतदर्थम्।

(श्रीरङ्गश्रीवेङ्कटाद्रिश्रीहस्तिगिरिदिव्यदेशप्राशस्त्यपरा गाथाः)

अपर्याप्तकृपामृतभरितो देवालयः, अम्बुजासनेनायोध्याराजाय दत्तो देवालयः अपराजितेनाद्वितीयवीरेण आराधितो देवालयः, सहायभूतस्य विभीषणस्य सहायभूतो देवालयः, अलभ्यानां फलानां सर्वेषां लम्भको देवालयः श्लाघ्यवेदप्रथमाक्षरयुक्तो देवालयः, निवर्तितुमयोग्यानां कर्मणां सर्वेषां निवर्तको देवालयः, श्रीरङ्गमिति प्रकाशमानो देवालयः ॥

कृष्णस्य चरणद्वन्द्वमस्माकं प्रदर्शयिता पर्वतः, क्रूरकर्मणां द्विविधस्यापि कर्मणो नाशकः पर्वतः, ध्रुवमयं मोक्ष इति प्रकाशमानः पर्वतः, प्रसन्नमहातीर्थभरितः पर्वतः, पुण्यस्य प्रवेशदेशोऽयमिति स्तुतः पर्वतः, स्वर्णलोके भोगानां सर्वेषामुत्पादकः पर्वतः, दिविषद्भिर्भूवासिभिश्चाभिलषितः पर्वतः, वेङ्कटपर्वत इति प्रकाशमानो वेदपर्वत एव ॥

---

आरादवरुलमुदं पोदिन्दकोयिल् अम्बुजत्तोन् अयोत्तिमन्नर्कलित्तकोयिल् तोलादतनिवीरन् तोऴुदकोयिल् तुणैयानवीडणर्कुत्तुणैयाङ्गोयिल् शेरादपयनेल्लाम् शेर्कुम् कोयिल् शेऴुमरैयिन् मुदलेऴुत्तुचेर्न्द कोयिल् तीराद विनैयनैत्तुं तीर्कुङ्गोयिल् तिरुवरङ्गमेनत्तिकऴुङ्गोयिल्ताने·

कण्णनडियिणै येमक्कुक्काट्टुम्वेर्पु कडुविनैयरिरुविनैयुङ्कडियुम् वेर्पु तिण्णमिदुवीडेन्नत्तिकऴुम् वेर्पुत् तेलिन्दपेरुन्तीरत्तङ्गल् शेरिन्द वेर्पु पुण्णियत्तिन् पुकलितेनप्पुकऴुम् वेर्पुप् पोन्नुलेकिल् भोगमेलाम् पुणर्कुम् वेर्पु विण्णवरु मण्णवरुम् विरुम्बुं वेर्पु वेङ्कटवेर्पेनविलङ्गुम् वेदवेर्पे·

उत्तमयुद्धस्थलपर्याप्ताद्वितीयप्रकाशधनुःक्षिप्तेन बाणेनाग्निणो राक्षसस्य शिरांसि दशापि एकगुच्छवत्पातितवत, सामर्थ्यवतः, मन्थानमध्यमधिकं दधि अधिकं नवनीतं स्थापितं भक्षितवत आप्तस्य स्थानभूतो हस्तिगिरिः भक्तानां कर्मसंबन्धविच्छेदपूर्वकं विनाशयदलंकारभूतं तच्चक्रमेव (चक्रतुल्यम्) ॥

(अधिकारार्थसंग्राहिका गाथा)

मधुपूर्णकमलस्थश्रीलक्ष्मीनाथेन सप्रकाशमध्युषितं परमव्योमदेशं वाञ्छतां भूमिगतं वासस्थानं दृढधर्मकाननपूर्णहिमवद्गङ्गाकावेरीसमुद्रनानानगरनाकसंवलितं समीचीनस्थानम् ॥

सा काशीति न चाकशीति भुवि साऽयोध्येति नाध्यास्यते
साऽवन्तीति न कल्मषादवति सा काञ्चीति नोदञ्चति ।

---

उत्तमवमरुतल ममैत्ततोर् पड्रिरनुवुय्त कणैयाल्
अत्तिरवरक्कन् मुडिपत्तमोरुकोत्ते उनदिरततिरलोन्
मत्तरुमिकुत्ततयिर् मोय्तवेणैय् वैत्ततुणुमत्तनिडमाम्
अत्तिगिरि पत्तर्विनै तोत्तरवरुक्कुमणियत्तिगिरिये.
तेनार्कमलत्तिरुमकणातन् तिगङ्न्दुरैयुम्
वानाडुकन्दवर् वैयत्तिरुप्पिडम् वन्रुमक्
कानारिमयमुङ्गङ्गैयुं काविरियुङ्कडलुम्
नानागरमुम् नाकमुङ्कुडियनन्निलमे—

धत्ते सा मधुरेति नोत्तमधुरां नान्यापि मान्या पुरी
या वैकुण्ठकथासुधारसभुजां रोचेत नो चेतसे ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे स्थानविशेषाधिकारः एकोनविंशः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## निर्याणाधिकारः २०

मनसि करणग्रामं प्राणे मनः पुरुषे च तं
झटिति घटयन् भूतेष्वेनं परे च तमात्मनि ।
स्वविदविदुषोरित्थं साधारणे सरणेर्मुखे—
नयति परतो नाडीभेदैर्यथोचितमीश्वरः ॥

(प्रपन्नस्य भगवदभिमतत्वम्)

इत्थं "[1]लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो" इति, अस्मिन् (जीवे) पादं गृहीतवति, "[2]हस्तावलम्बनो ह्येको भक्तिक्रीतो जनार्दनः" इत्युक्तरीत्या एनं हस्ते गृहीत्वा "[3]राजाधिराजः सर्वेषाम्" इत्युक्ते उभयविभूतिनाथे सर्वेश्वरे स्वाभिमते कस्मिंश्चित् स्थाने स्थापितवति सति, अभिषिक्तमहिषीवद्बहुमतः स्वपरमैकान्तित्वानुरूपवृत्त्या सह वर्ततेऽयमधिकारी ॥

(प्रपन्नस्य मोक्षविलम्बनिरूपणम्)

एवंविधेष्वधिकारिषु प्रारब्धदुष्कृतविशेषवैचित्रीभवौ अहंकारममकारौ, तन्मूलका अपचाराः प्रयोजनान्तररुचिः तन्मूलकतया संभावितो देवतान्तरस्पर्शः, बुद्धिदौर्बल्यं तन्मूलिको पायान्तरप्रत्याशा चेतीमानि वैपरीत्यानि जातानि येषां तेषाम्, एतज्जननं विनैव प्रारब्धसुकृतविशेषात् पूर्वप्रपत्तौ फलसंकल्पविशेषाच्च छिद्रशून्यकैङ्कर्ये प्रतिष्ठितानां च सतां संसारान्निर्याणस्य विलम्बाविलम्बयोः स्थितिप्रकारः कीदृश इति चेत्—

अत्रैषां चार्वाकादीनामिव स्थायिनावहंकारममकारौ न स्याताम्। अवहितानां (अपि) सञ्चरतां स्खलनवत् यदाकदाचिदुपनमन्तावहंकारममकारौ विवेकावधिकौ पाश्चात्यप्रबोधेन निवर्तयाताम्। अपराधेषु जातेषु क्षामणावधिकतया शिक्षावधिकतया चोद्दिष्टकालाभ्यन्तर एवापराधनिस्तारस्योत्पत्तिप्रकारमपराधपरिहाराधिकारेऽवोचाम। मोक्षप्राप्त्यर्थं कालविशेषमनुद्दिश्य प्रपन्नान् अधिकृत्य, "[4]अपायाविरतः शश्वत् मां चैव शरणं गतः। तनूकृत्याखिलं पापं मामाप्नोति नरः शनैः॥" इत्युच्यते।

मुमुक्षुः सन् प्रवृत्त इत्यतः प्रयोजनान्तररुचिः स्थिरा नावतिष्ठेत। उभयभावनानामिव मोक्षरुच्या सह प्रयोजनान्तररुचेरपि मिश्रीभूय प्रवृत्तावपि एतद्धितपरेणेश्वरेण "[5]याचितोऽपि सदा भक्तैर्नाहितं कारयेद्धरिः" "[6]यस्यानुग्रहमिच्छामि धनं तस्य हराम्यहम्" इत्यादिषु च कुण्डधारोपाख्यानादिषु चोक्तरीत्या

केषाञ्चित् प्रयोजनान्तराणामदानेन वैतथ्यापादनात्, केषुचिदल्पा-स्थिरत्वदुःखमिश्रत्वादिविवेकमुखेनास्यारुचेर्जननात्, **सौभरि-कुचेला-**दीनामिव कांश्चिद्भोगान् दत्वा-स्वयमेव निर्विद्य यथा त्यजेत्, तथा करणाच्च मोक्षकालमुद्दिश्य प्रपत्तिं कृतवतस्तत्कालाभ्यन्तर एव प्रयोजना-न्तरवैमुख्यं जायेत।

अन्यस्यापि "[7]अथोपायप्रसक्तोऽपि भुक्त्वा भोगान् अनामयान्। अन्ते विरक्तिमासाद्य विशते तदनन्तरम्।" इत्युक्तरीत्या वैराग्यावधिक एव विलम्बो भवति।

देवतान्तरस्पर्शे जातेऽपि **सर्वेश्वरो** यस्मिन् कस्मिंश्चिद्दिने **श्रुत्युक्तरीत्या परमैकान्तिभिः** सह संयोज्य लज्जावधिकं विशोध्यास्य **व्यभिचारं** निवर्तयति। केषाञ्चित् देवतान्तरस्पर्शस्य स्थायित्वे पूर्वमुपायस्पर्शाभावः पश्चात् **नरकादिसंभवश्च** मन्तव्यः। अस्य भगवद्विषये **कृतांशो** यस्मिन्न् कस्मिंश्चिद्दिने **उपायनिष्पत्तिं** कृत्वा **कार्यकरो** भवति।

महाविश्वासे पूर्णतया जाते **प्रपत्तिं** कृतवतां **बुद्धिदौर्बल्य-मुपायान्तरप्रत्याशा** च न जायेयाताम्। इमे येषां जाते तेषां पूर्वं जातो विश्वासो मन्दः स्यात्। एतानपि सर्वेश्वरो महाविश्वासावधिकं विशोध्य पूर्णप्रपत्तिनिष्ठान् करोति।

एषु वैपरीत्येषु यस्य कस्यापि जननमन्तरैव प्रवर्तमानानां विलम्बादेःशङ्काऽपि न भवति। एषामिच्छावधिक एव विलम्बः। एषामुद्दिष्टे सीम्नि **मोक्षोऽविनाभूतः**। एतां **निष्ठां** **प्राप्तवानय-**

अधिकारी "[8]द्वारि स्थिरवासिनोऽलसान् अभिनन्दन्" इत्युक्तरीत्या श्रियः पत्युः सर्वेश्वरस्य सर्वदाऽभिमतो भवति।

(प्रपन्नविषये ईश्वरेण क्रियमाण उपकारः)

एतद्विषये **निरुपाधिकसर्वशेषी निरुपाधिकस्वतन्त्रः** सत्यसंकल्पश्च भवन् सर्वेश्वरः सर्वभयानां कारणभूतं निग्रह-संकल्पं, "[9]तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इत्युक्तरीत्या सद्वारकप्रपत्तिनिष्ठस्योपासनप्रारम्भ इव, प्रपत्तिवाक्योच्चारणे प्रथमक्षणे विनिवर्त्य अस्यैतदनुबन्धिनाश्च नित्यसूरिपङ्क्तौ निवेशनेऽपि अतृप्ताशम् आश्रितापराधराशिषु भुक्तेष्वपि भोक्तृत्वाकारमप्रदर्शयन्त-मुदरम्भरिम् अनुबन्धिसंबन्धिबुद्धिपूर्वापराधानामपि अनुतापादिना निस्तारसंपादनस्यानुगुणमनुग्रहसंकल्पं कृत्वा, "[10]द्युलोकं दित्सुस्त्वरते" इत्युक्तरीत्या एतदभिमत**विलम्बस्य** कृते स्वयं **सानुशयस्सन्** त्वरित्वा "[11]तमःप्रदमहाभूमावितः परं जन्माहं न वाञ्छामि", "[12]मायां मा कार्षीर्मद्विषये" इति चोक्तरीत्याऽस्याङ्गीकारमुपजनय्य "[13]तव वक्षो-मालया पूर्णया वासनाकरसुन्दर (पुष्पालंकृत) केश्या श्रिया शापितोऽसि

---

8 कडैत्तलैयिरुन्दुवाड़्म् शोम्बरैयुकत्ति—तिरुमाले-38

10 विण्णुलेकन्तरुवानाय् विरैकिन्रान्—तिरुवाय्मोड़ि-10-6-3

11 इरुल्दरुमाज्ञालेत्तिनिप्पिरवियान् वेण्डेन्—

तिरुवाय्मोड़ि-10-6-1

12 मायम् शेय्येलेनै—तिरुवाय्मोड़ि-10-10-2

13 उन्तिरुमारवत्तुमालै नङ्गैवासं शेय् पूङ्ड़लाल्

तिरुवाणैनिन्नाणै—तिरुवाय्मोड़ि-10-10-2

त्वया शापितोऽसि" इति अयं स्वयं त्वरित्वा यथा निर्बन्धं कुर्यात् तथा कृत्वा, "[14]शरणं भवन् स्वचरणाश्रितानां सर्वेषां मरणे जाते वैकुण्ठप्रद उपकारकः" इत्युक्तरीत्या एतत्प्रार्थनानुगुणं प्रारब्धशरीरावसाने परमपदप्राप्तिसंपादनं संकल्प्य,

स्वर्णायोमयशृङ्खलावद्बन्धकयोः, पूर्वोत्तरपुण्यपापयोः प्रारब्धकार्ये **कर्मणि** एतदभ्युपगतांशव्यतिरिक्तस्य भागस्य च, "[15]अतीताः पूर्वकालोत्पन्नाः अपराधाः प्रवेशाय स्थिताश्च (आगामिनश्च) अपराधाः अग्नौ तूलं भवेयुः" इत्युक्तरीत्या पूर्वमेवैतत्संबन्धविच्छेदनपूर्वमवस्थापनात् शरीरपातार्थसंकल्पितसमये आसीदत्येव, "[16]प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् । विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥" इति, "[17]यमवन्निपात्य आक्रामन्ति लोकगतानि पापानि सर्वाणि उच्छ्वसितुमप्यशक्नुवन्ति सवासनं त्यक्त्वा धावित्वा गुल्मान् प्राविशन्" इति च सर्वोक्तोपनिषदर्थरीत्या एनं प्रति अनुकूलतया प्रतिकूलतया स्थितयोर्द्वयोः पक्षयो(जनयो)रेतद्विषयकानुकूल्यप्रातिकूल्यफलरूपेण संक्रमणं कारयित्वा,

14 शरणमाहुं तनताल्अैन्दारकॆल्लाम् मरणमानाल्
वैकुन्दं कोडुक्कुम् पिरान्—तिरुवाय्मोऴि-9-10-5

15 पोयपिऴैयुम् पुहुतरुवानिन्ऱनवुं तीयि
निल्तूशाहुम्—तिरुप्पावै-5

17 नम्मन् पोले वीऴ्तमुक्कुनाट्टिलुळ्ळ पावमॆल्लाम्शुम्मॆनादे
कैविट्टोडितूरुकल् पाय्न्दनवे—पॆरियाल्वार् तिरुमोऴि-5-4-3

'[18]दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि" इति स्मृतौ च ज्योतिश्शास्त्रे निर्याणप्रकरणे च फलान्तरप्रसक्तान् मोक्षोपायपूर्तिरहितांश्चाधिकृत्योच्यमानं कालनियममन्तरैव, "[19]निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात्" इति, "[20]अतश्चायनेऽपि दक्षिणे" इति चोक्तरीत्या मनुष्यपितृदेवानां दिनेषु रात्रिषु वा स्वसंकल्पितसमये अप्रच्युतपूर्वसंस्कारमनोरथतामापाद्य, कारागृहस्थराजकुमारविषये प्रसन्नो राजा शृङ्खलां छित्त्वा कारागृहात् (त) गृहीत्वा यथा निर्गच्छेत् तथा प्रशस्ताप्रशस्तनियममन्तरा तत्कालोपस्थितं यत्किञ्चित् शरीरविश्लेषनिमित्तमुत्पाद्य,

वागादीनि बाह्येन्द्रियाणि दशापि मनसि संयोज्य, इत्थं कर्मज्ञानेन्द्रियैः सर्वैः संवलितं मनः प्राणवायुना सह संयोज्य, इत्थमेकादशभिरिन्द्रियैर्युक्तं प्राणवायुं जीवेन सह संयोज्य, प्राणेन्द्रियसंयुक्तं जीवं त्रिस्थूणक्षोभदशायां स्थूलदेहात् मथित्वा गृहीतैः पञ्चभूतसूक्ष्मैः सह संयोज्य, इत्थमिन्द्रियप्राण-भूतसूक्ष्मसंयुक्तं जीवं निसर्गसौहार्दवति हार्दे स्वस्मिन् विश्रमय्य, इत्थं स्थूलशरीरात् विद्वदविद्वत्साधारणमुत्क्रान्तिक्रमं निरुह्य, '[29]अनन्ता रश्मयस्तस्य दीपवत् यः स्थितो हृदि । सितासिताः कद्रुनीलाः कपिलाः पीतलोहिताः ॥ ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥ यदस्यान्यत् रश्मिशतमूर्ध्वमेव व्यवस्थितम् । तेन देवशरीराणि सधामानि प्रपद्यते ॥ ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः । इह कर्मोपभोगाय तैः संसरति सोऽवशः ॥"

इत्युक्तरीत्या द्रव्यापहारिचोरमार्गवदात्मापहारिगम्यस्वर्गनरकप्राप्त्यर्थमार्गान्तरमुखभूतेषु नाडीविशेषेषु यथा न गच्छेत् तथा विनिवार्य, अर्चिरादिमार्गस्य मुखभूतायां शताधिकायां ब्रह्मनाड्यां प्रवेश्य, सूर्यकरावलम्बिनं कृत्वोद्गमयति ॥

(प्रपन्नस्यान्तिमस्मृत्यादिनिर्बन्धाभावः)

श्रीकूरेशे अन्तिमदशायां श्रमेण शुष्कजिह्वे श्रीभाष्यकारस्य चरणौ गृहीतवति सति, श्रीभाष्यकारे च तदानीं श्रीकूरेशस्य कर्णे द्वयमुपदिष्टवति सति, अस्य पुरुषार्थस्य लाभोऽस्माकमसंभवी, वयं किं करवामेति तदा तत्रोपस्थितेषु शिष्येषु ज्ञानिषु खिन्नेषु सत्सु एषामभिप्रायं विदित्वा, "श्रीकूरेशस्य प्रकृतिं किं न जानीथ, अस्यामवस्थायामस्येदं कर्पूरखण्डशर्करयोः प्रदानमात्रं किल, वयं नेदमुपायपरिकरत्वेनान्वतिष्ठामेत्यनुगृहीतवति सति शिष्याः प्रबुध्य निर्भरा बभूवुः । अतः, "[22]नष्टस्मृतिरपि परित्यजन् देहम्" इति, "[23]स्थिते मनसि सुस्वस्थे" इत्यादिके श्लोकद्वये, "[24]समर्थस्याश्रयणं सर्वस्मिन्" इति गाथायां चोक्तरीत्या प्रपन्नस्यान्तिमस्मृत्यादिषु निर्बन्धो नास्ति ।

(गद्यवाक्यनिर्वाहप्रकारः)

"शरीरपातसमये तु केवलं मदीययैव दययाऽतिप्रबुद्धो मामेवावलोकयन् अप्रच्युतपूर्वसंस्कारमनोरथः" इत्यनुगृहीतमप्येतद्वचनाविरुद्धेन केनचित् प्रकारेण निर्वाह्यम् । कथमिति चेत्— गद्येऽनुगृहीताऽन्तिमस्मृतिः 'इमामन्तिमस्मृतिमपि उपायफलत्वेनोद्दिश्य प्रपन्नानां भवितुमर्हतीति केचिदाचार्या निर्वहन्ति ।

---

24 तुप्पुडैयारडैवदेल्लाम्—पेरियाऴ्वार् तिरुमोऴि-4-10-1

एवं सति कस्मिंश्चिदपि शरीरेऽन्तिमप्रत्ययस्य निर्विषयत्वायोगादस्य भगवद्व्यतिरिक्तविषये प्रवृत्तौ, "[26]यं यं वाऽपि स्मरन् भावम्" इत्युक्तन्यायेन विपरीतफलं भवति। अतो गद्यानगृहीतरीत्या स्वतन्त्रप्रपत्तिनिष्ठस्य भगवद्विषयेऽन्तिमप्रत्ययोऽवश्यम्भावी। "[27]नष्टस्मृतिरपि" इत्यादीनि, श्रीगीतायामष्टमाध्याये, "[28]ये योगिनः प्राणवियोगकाले यत्नेन चित्ते विनिवेशयन्ति" इत्यादिषु च स्वयत्नसाध्यतया विहितप्रकारेणोपायत्वेनान्तिमस्मृतिर्नापेक्षितेति प्रतिपादयन्तीति केचिदाचार्या अनुसन्दधते। "केवलं मदीययैव दयया" इति किलात्रानुगृहीतमस्ति।

(अन्तिमस्मृतिनिरूपणम्)

अन्तिमस्मृतिर्नाम— वागादिषु उपशान्तेषु मनस उपशमात् पूर्वं जायमाना काचित् स्मृतिः। इयं सन्निहितैरपि ज्ञातुमशक्या। "[29]दृश्यते हि वागिन्द्रिय उपरतेऽपि मनःप्रवृत्तिः" इति भाष्यमपि येनकेनचिल्लिङ्गेन, याकाचिन्मनःप्रवृत्तिरस्यास्तीति ज्ञानमात्रं प्रतिपादयति। यद्वा स्वेन कासुचित् व्याध्याद्यवस्थासु अनुभूतां रीतिं प्रतिपादयति। अतो भगवद्विषयेऽन्तिमस्मृतिर्मोक्ष्यमाणैर्मोक्षदात्रा च ज्ञातुं शक्येत्येतावदेव।

एतदनन्तरं योग्ययोगिनिर्विशेषं हार्दे परमात्मनि विश्रमणपर्यन्तं सुषुप्तितुल्यं भवति। इमामवस्थां लक्ष्यीकृत्यैव, "काष्ठपाषाणसन्निभम्" "[31]नष्टस्मृतिरपि" इति "[32]न स्मरेयम्" इति चोच्यते इत्युक्तौ प्रपन्नाधिकारिणो विशिष्य कश्चिदतिशय उक्तो न भवति (भवेत्)।

32 निनैक्कमाट्टेन्—पेरिया.

एतदग्रे "[33]मत्तः स्मृतिर्ज्ञानमपोहनं च" इत्युक्ते प्राज्ञे प्रबोधितवति सति **तत्प्रकाशितद्वारस्य सतो ब्रह्मनाड्यां प्रवेशे वृत्ते** पश्चात् यावत्कालतत्त्वसद्भावमेकदिनात्मकः प्रकाश एव भवति ॥

(अधिकारार्थसंग्राहिका गाथा)

समीचीनो देशः सः, समीचीनं दिनं तत् समीचीनं निमित्तमिति वचनार्हं तत्, यादृशतादृशमपि भवतु तत्र दासानां विद्युत्स्थितिमद्देहत्यागपूर्वकप्रयाणे निष्प्रतिबन्धाद्वितीयसत्स्वभावकमध्य-नाडीमार्गेण गमनप्राप्तये ॥

**दहरकुहरे देवस्तिष्ठन् निषद्वरदीर्घिका-**
**निपतितानिजापत्यादित्सावतीर्णपितृक्रमात् ।**
**धमनिमिह नस्तस्मिन् काले स एव शताधिका-**
**मकृतकपुरप्रस्थानार्थं प्रवेशयति प्रभुः ॥**

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कट-
नाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
निर्याणाधिकारः विंशः संपूर्णः ।
श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

---

**नन्निलमामदु नर्पकलामदु नन्निमित्तम्**
**पन्नलुमामदुयादनुमामङ्गडियवर्कु**
**मिन्निलैमेनि विडुम् पयणत्तविलक्किलदोर्**
**नन्निलैया नडुनाडिवड़िक्कु नडैपेरवे**

श्रीः

## गतिविशेषाधिकारः २१

ज्वलनदिवसज्योत्स्नापक्षोत्तरायणवत्सरान्
पवनतपनप्रालेयांशून् क्रमादचिरद्युतिम् ।
जलधरपतिं देवाधीशं प्रजापतिमागत-
स्तरति विरजां दूरे वाचस्ततः परमद्भुतम् ॥

(विविधभोगप्रदानपूर्वमर्चिरादिगत्या नयनम्)

इत्थं मूर्धन्यनाड्यां प्रवेशितं मुमुक्षुं स्थूलशरीररूपात् ब्रह्मपुराद् ब्रह्मनाडीरूपप्रधानद्वारेण वत्सलो हार्दो वार्तोच्चारणं शिक्षमाणं मुखवश्यं राजकुमारं राजा गृहीत्वा यथा संचरति तथा गृहीत्वा निष्क्रम्य, "[1]स्थिरक्रूरकिरणविशिष्टस्य मण्डलसन्मध्यस्थतथाविधद्वारमध्येन गत्वा" इति "[2]रथे पूर्णस्य व्यापिकिरणस्य (सूर्यस्य) मण्डलं भित्वा प्रविश्य" इति "[3]चण्डमण्डलस्य मध्ये गत्वा" इति "[4]अन्धकारनाश-

---

1 मन्नुङ्कडङ्कतिरोन् मण्डलत्तिनन्नडुविलन्नदोरि-
ल्लियिनूडपोय्—पेरिया.

2 तेरार् निरैकदिरोन्मण्डलत्तैक्कीण्डपुक्कु—शिरियतिरुमडल्

3 चण्डमण्डलत्तिनूडशेन्रु—तिरुच्चन्दविरुत्तम् - 67

4 इरुलेकर्रुमेरिकदिरोन् मण्डलत्तूडेर्रि
वैत्तणिवाङ्गि—पेरियाड़्वार् तिरुमोड़ि-4-9-3

कज्वलत्किरण(सूर्य) मण्डलमध्येनारोप्य स्थापयित्वा निःश्रेणिमपसार्य" इति वर्णिते देवयानमार्गे नीत्वा, "[5]अमरैः सहोर्ध्वं गत्वा छिन्धुः स्वजन्मसुदृढकाराम्" इत्युक्तरीत्या अर्चिः, अहः, पूर्वपक्षः, उत्तरायणम्, संवत्सरः, वायुः, आदित्यः, चन्द्रः, वैद्युतः, अमानवसञ्ज्ञकस्यास्य सहकारिभूता वरुणेन्द्रप्रजापतयः इत्युक्तैरातिवाहिकैर्मुख्यदेवैः सह, "[6]अहं स्मरामि मद्भक्तं नयामि परमां गतिम्" इत्युक्तरीत्या स्वयं प्रधानभूतः सन् अतिवाह्य, तत्तत्सीमासु भगवच्छास्त्रेषु विस्तरेणोक्तान् भोगान् अनुभाव्य, "[7]लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् । अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ नित्यसिद्धैः समाकीर्णं तन्मयैः पाञ्चकालिकैः । सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभम् ॥ वापीकूपतडागैश्च वृक्षषण्डैश्च मण्डितम् । अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् । प्रकृष्टसत्त्वराशिं तं कदा द्रक्ष्यामि चक्षुषा ॥" इति चिरकालादिदृक्षिते देशविशेषे गमनसमनन्तरमेव कर्मफलविशेषभोगार्थतामन्तरा विद्यया स्थापितं गतिमात्रार्थतयाऽनुवृत्तं सूक्ष्मशरीरं नदीतरणार्थं गृहीतां नौकामिव त्याजयित्वा, विरजां तारयित्वा, अप्राकृतशरीरं दत्त्वा ऐरम्मदीयाख्यसरःपर्यन्तं प्रापय्य सोमसवनाख्याश्वत्थसमीपं नीत्वा मालाञ्जनचूर्णवासःपणहस्ताः पञ्चाशतसंख्याकाः दिव्याप्सरसो नियम्य प्रत्युद्गमनं कारयित्वा, ब्रह्मा-

---

5 अमररोडुयर विल् शेत्ररूवरतम् पिरवियरिञ्चरैये
तिरुवाय्मोड़ि-1-3-11

लङ्कारेणालंकार्य अभगन्धरसतेजांसि प्रवेश्य "[8]कुलदासा इमे साक्षात् गोविन्दस्येति किरीटधारिषु दिविषत्सु पर्यायेण प्रत्युद्गच्छत्सु, ध्वजालङ्कृतदीर्घप्राकारकगोपुरसमीपं प्रापय्य, इन्द्रप्रजापतिनामकद्वारगोपसविधं नीत्वा, "[9]वैकुण्ठप्रवेशसमये" इत्यारभ्य तृतीयासु गाथासु उक्तरीत्या अप्राकृतान् राजोपचारान् कारयित्वा, आनन्दमये मण्डपरत्ने सुन्दरसभायां प्रवेश्य, "[10]अनयाऽहं वशीभूतः कालमेतं न बुद्धवान् । उत्तमाधममनीचान्तां तामहं कथमावसे ॥ अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् । अनेन साम्यं यास्यामि नानयाऽहमचेतसा ॥ क्षमं मम सहानेन ह्येकत्वं नानया सह" '[11]क्रीडन्तं रमया सार्धं लीलाभूमिषु केशवम् । मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥" "[12]मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतम् । कदा द्रक्ष्यामहे रामं जगतः शोकनाशनम् ॥ दृष्ट एव हि नः शोकमपनेष्यति राघवः । तमः सर्वस्य लोकस्य समुद्यन्निव भास्करः ॥" इत्यादिपद्धत्या एतदीयपूर्वकृतमनोरथरीत्या पूर्वमापतितसर्वविघ्नहानिनिवर्तनपूर्वं निरतिशयभोग्यमात्मानं प्रदर्श्य स्वरूपं स्वचरणद्वन्द्वाधस्स्थं कृत्वा स्वेन सह समानभोगत्वलक्षणेन सायुज्येन एतत्सजातीयैरन्तरहितमहानन्दैः दासैः सहावस्थाप्य, इत्थं समस्तप्रतिबन्धकनिवृत्तिपूर्वकं स्वस्व-

8 कुडियडियारिवर् गोविन्दन् तनक्केन्रमुडियुडै
वानवर् मुरै मुरै एदिर्कोळ्ळक्कोडियणि
नेडुमदिळ् गोपुरङ्कुरुहुवित्तु-तिरुवाय्मोडि 10-9-8

9 वैकुन्दम्पुकुतलुम्—तिरुवाय्मोड़ि-10-9-9

रूपाविर्भावपूर्वकं च देशकालावस्थासंकोचरहितं स्वमनोरथानुरूप-मेतन्मनोरथगोचरं कैङ्कर्यं सर्वं यावदात्मभावितया अनुगृह्य, "[13]सवयस इव ये नित्यनिर्दोषगन्धाः" इत्युक्तरीत्या स्वस्यान्योन्यमेकवयस्कमित्रैरिव वर्तमानैर्नित्यसूरिभिः सहाद्यागतेनानेन सहापि निर्विशेषं नीरन्ध्रं च संश्लिष्य स्तोत्रे श्रीवैकुण्ठगद्ये च अनुगृहीतमनोरथरीत्या ऐकान्तिकात्यन्तिकनित्यकिङ्करस्यास्यानन्देन स्वयं निरतिशयानन्दो भवति ॥

(गत्यन्तरविषयविवेचनम्)

ब्रह्मादिपदप्राप्तिपूर्वकमोक्षसाधनभूतमधुविद्यादिषु "[14]सत्त्वं वहति शुद्धात्मा देवं नारायणं हरिम् । प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥" "[15]ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः। तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तम ॥ सर्वलोकतमोहन्ता आदित्यो द्वारमुच्यते । ज्वलमाली महातेजा येनेदं धार्यते जगत् ॥ आदित्यदग्धसर्वाङ्गा अदृश्याः केनचित् कचित् । परमाण्वात्मभूताश्च तं देवं प्रविशन्त्युत ॥ तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिताः । मनोभूतास्ततो भूयः प्रद्युम्नं प्रविशन्त्युत ॥ प्रद्युम्नाच्च विनिर्मुक्ता जीवं संकर्षणं ततः । विशन्ति विप्रप्रवराः सांख्ययोगाश्च तैः सह ॥ ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम् ॥ सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः । समाहितमनस्कास्तु नियताःसंयतेन्द्रियाः । एकान्तभावोपगता वासुदेवं विशन्ति ते" इत्यादिषु महाभारतादिवचनेषु, "[16]श्वेतद्वीपमितः प्राप्य विश्वरूपधरं हरिम् । ततोऽनिरुद्धमासाद्य श्रीमत्क्षीरोदधौ स्थितम् । ततः प्रद्युम्नमासाद्य देवं

सर्वेश्वरेश्वरम् । ततः संकर्षणं दिव्यं भगवन्तं सनातनम् । अयमप्यपरो मार्गः सदा ब्रह्मसुखैषिणाम् । परमैकान्तिभक्तानां (सिद्धानां) पञ्चकालरतात्मनाम् ॥" इत्येवंप्रकारैर्जयत्संहितादिषु, "[17]विभवार्चनाद् व्यूहं प्राप्य व्यूहार्चनात्परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यत इति वदन्ति" इति **श्रीपाञ्चरात्राधिकरणे** च कांश्चिदधिकारिविशेषानुद्दिश्योच्यमाने **क्रममुक्तिपक्षे** च, सत्यलोकादितो मुच्यमानानां च स्थिताः गतिविशेषादयः तत्तदधिकारिभिरेव ज्ञातव्या इति अत्र तेषां विस्तर वर्णनमनपेक्षितम् ।

(प्रपन्नस्य गत्यनुसन्धानोपयोगः)

इदं **गत्यनुसन्धानादिकं स्वतन्त्रप्रपत्तिनिष्ठस्यास्य** सद्वारकप्रपत्तिनिष्ठस्येवोपायाङ्गतयाऽहरहरकर्तव्यमपि एतदुपाये प्रवृत्तिकाले**अधिकारित्वसिद्ध्यर्थं फलार्थित्वस्यापेक्षितत्वात् फलपर्वविशेषानुसन्धान**रूपतयाऽनुप्रविष्टं भवति । पश्चात् करिष्यमाणविवाहस्य कृते दिनगणनवत् पूर्वप्रार्थितपुरुषार्थस्मरणमात्रं भूत्वा "इमं पुरुषार्थं प्राप्स्यामः" इति **प्रीतिविशेषमुत्पादयत्** सत् स्वयं **प्रयोजनं** भवति । अतोऽत्र **समुदायज्ञानमात्रे**णापि अस्या**पेक्षितसिद्धिः** भवति । "[18]समीपं राजसिंहस्य रामस्य विदितात्मनः । संकल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥" इति वर्णिता श्रीजानक्याः स्थितिरेतदीयगत्यनु**सन्धानस्य निदर्शनम्** ॥

(अधिकारार्थसंग्राहिका गाथा)

गतिप्रापिकालेऽग्निरहः शुक्लपक्ष उत्तरायणं संवत्सरो मध्ये प्राप्तो वायुः सूर्यो रात्रिपतिर्विद्युतो वरुण इन्द्रत्रवान् दिविषदधिपः प्रजापतिरित्येतैर्मध्ये मध्ये भोगान् अनुभूय तेजोमयं पदमारोहेयुः ॥

पितृपथघटीयन्त्रारोहावरोहपरिश्रमै-
र्निरयपदवीयातायातक्रमैश्च निरन्तरैः ।
अधिगतपरिश्रान्तीन् अग्नाद्यैरतिवाह्य नः
सुखयति निजच्छायादायी स्वयं हरिचन्दनः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
गतिविशेषाधिकार एकविंशः
श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

---

नडै पेरवङ्कि पकलोलिनालुत्तरायणमाण्डु
इडैवरुकार्डु इरवियिरविन्पति मिन् वरुणन्
कुडैयुडै वानवरकोन् प्रजापति येन्निवराल्
इडै इडै पोगङ्गलेय्दि येड्रिरपदमेरुवरे.

श्रीः

## परिपूर्णब्रह्मानुभवाधिकारः २२

वितमसि पदे लक्ष्मीकान्तं विचित्रविभूतिकं
सचिवगमितः संपद्याविर्भवत्सहजाकृतिः ।
स्फुटतदपृथक्सिद्धिः स्निग्धद्गुणाष्टकतत्फलो
भजति परमं साम्यं भोगे निवृत्तिकथोज्झितम् ॥

अनेन **गतिविशेषेण** गतस्य **परिपूर्णब्रह्मानुभवस्थिति-प्रकारः** क इति चेत्—"[1]सर्वलोकस्वामिनमरविन्दलोचनं क्षणमात्रमपि न त्यजति" इत्युक्तरीत्या **सर्वदेशसर्वकालसर्वावस्थासु सर्वेश्वरमनन्तविग्रहगुणविभूतिचेष्टितेषु** एकेनाप्यन्यूनं **निरतिशयभोग्यतया विषयीकुर्वन्** वर्तेत । **अयमनुभव ईश्वरस्यास्य** चात्यन्ततुल्य इति **परमसाम्यं** प्रोच्यते ।

(भगवत्स्वरूपव्यतिरिक्तानामपि भोग्यत्वम्)

"[2]वेद्यः कृत्स्न आनन्दः" इति "[3]निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥" इत्युक्तरीत्या **भगवत्स्वरूपं भोग्यं** भवितुमर्हम् । अन्यस्य सर्वस्यापि भोग्यत्वं

---

1 अनैत्तुलकमुडेयवरविन्दलोचननैत्तिनैत्तनैयुम् विडाळ्—तिरुवाय्मोड़ि-6-7-10

2 उणर्मुडुनलम्—तिरुवाय्मोड़ि-1-1-2

कथं (युज्यते) इति चेत्—राजमहिष्या राजा भोग्यश्चेत्, तदभिमतानां तदीयभोगसाधनीभूतानां भोगस्थानभोगोपकरणादीनामपि एतां प्रत्यनुकूलत्वं यथा, तथा अत्रापि भगवत्स्वरूपानुबन्धिनां सर्वेषां भोग्यत्वस्य न क्षतिः। इत्थं सर्वप्रकारविशिष्टः सन् सर्वेश्वरो भोग्य इत्येतत् श्रुतिस्मृत्यादिषु प्रसिद्धम्। अमुमर्थं भूमाधिकरणे साधयामास।

(त्रयाणां परमपदशब्दवाच्यत्वम्)

एषु निरतिशयानुकूल्यात् परमप्राप्यत्वेन भगवत्स्वरूपं परमपदमित्युच्यते। एतद्भगवत्स्वरूपपरिपूर्णानुभवप्राप्तेर्भोग्यतमसत्त्वोत्तरस्थानविशेषगमनोत्तरकालिकत्वात् स्थानविशेषोऽपि परमपदमित्युच्यते। अस्यानुभवस्याश्रयरूपेणानुभाव्यत्वाद्भगवद्विभूतिभूतं ज्ञानानन्दलक्षणं स्वस्वरूपमपि परमपदमित्युच्यते। एषां त्रयाणामन्येषामपि प्राप्यत्वमात्रमविशिष्टम्।

(लीलाविभूतिस्थपदार्थानामपि भोग्यत्वम्)

एवं भगवत्स्वरूपगुणविग्रहादीनां, शुद्धसत्त्वाश्रयनित्यविभूतेः स्वस्वरूपस्य च भोग्यत्वसंभवेऽपि प्रतिकूलत्वेन प्रत्यक्षादिप्रमाणसिद्धानां मुमुक्षोस्त्याज्यत्वेन शास्त्रेषु प्रतिपादितानां लीलाविभूतिस्थपदार्थानां मुक्तभोग्यत्वं कथं युज्यते इति चेत्—तत्रापि न क्षतिः, पित्तोपहतं प्रति प्रतिकूलभूतस्य क्षीरस्य पित्तशमनानन्तरमानुकूल्यवत् सार्वभौमस्य पितुः कारागृहस्य कारागृहस्थं राजकुमारं प्रति तदानीं प्रतिकूलभूतस्य सतः राज्ञि कारागृहान्निर्गमय्य

प्रीत्या तुल्यभोगतया स्थापितवति सति कारागृहसंस्थानस्याविनष्टस्यैव सतः पितृविभूतित्वबुद्ध्याऽऽनुकूल्यवच्च, "[4]यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना।" इति "[5]न हि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः। वसन्त्या राक्षसीमध्ये विना रामं महारथम्॥" इति, "[6]वृषभनियामकेनेश्वरेण" इति (दशकेच) इत्युक्तरीत्या **भगवत्संश्लेष-राहित्येन** स्वस्य स्थितिकाले **कर्मानुरूपं** स्वस्य **प्रतिकूल**तयाऽल्पानु-**कूल**तया च **प्रतीतानां लीलाविभूतिस्थपदार्थानां** मुक्तं संपन्नं **निरतिशयभगवदनुभवं** कुर्वाणं प्रति **निरतिशयभोग्यवर्गे**ऽन्तर्भावः उपपन्नः। इत्थं **बुद्धान् प्रति प्रतिकूलतयाऽल्पानुकूल**तया, **कर्मबन्ध**रहितान् प्रति **अनुकूलस्वभाव**तया च स्थितिस्तेषां **पदार्थानां** भगवदिच्छादिसिद्धा।

(रहस्ये फलप्रतिपादकप्रदेशः)

इत्थं **स्वेच्छासिद्धानुकूल्यवद्भिः** प्रकारैः सर्वविशिष्टः **श्रीमान् नारायणः प्राप्य** इत्येतत् **श्रीमन्ते द्वये** च **चतुर्थ्यन्तपदेषु** अभिप्रेतम्। पूर्वोक्तं **कैङ्कर्यमेवंविधपरिपूर्णानुभव**जनित**प्रीतिविशेष-परीवाह**रूपमित्येतमर्थं **गद्ये** असकृदनुजग्राह।

(श्रुतिसिद्धजक्षणादीनां कैङ्कर्यत्वं प्रातिस्वरूपनिष्कर्षश्च)

**मुक्तदशायां श्रुतिसिद्धानि जक्षणादीनि ज्ञात्यादि-संपादनानि** सर्वाणि **पुण्यपापकर्मनिरपेक्षभगवदिच्छानुगुण-**

---

6 एरालुमिरैयोन्—तिरुवाय्मोऴि-4-8

स्वेच्छामूलकत्वादकर्मफलानि अनुभवपरीवाहरूपे केवलकैङ्कर्ये-ऽन्तर्भूतानि । अतः प्राप्तितया पर्यवसितः यथाभिमतकैङ्कर्यपर्यन्त-परिपूर्णब्रह्मानुभव इति सिद्धम् ।

(एतादृशब्रह्मानुभवस्य नित्यत्वनिरूपणम्)

अयमनुभवो जातश्चेत् पश्चात् कदाचिदपि न नश्यतीत्येतत् "[7]प्राप्यते परमं धाम यतो नावर्तते यतिः", "[8]मामुपेत्य पुनर्जन्म दुःखलयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥", "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥" "[9]यदा स केवलीभूतः षड्विंशमनुपश्यति। तदा स सर्वसिद्धत्वात् पुनर्जन्म न विन्दति ॥" "[10]गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः । अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः", "[11]वाचा नमो नारायणेत्युक्त्वा मस्तकमध्येऽञ्जलिं बद्ध्वा गते सति, पश्चात् दिशं एतां प्रति प्रतिभूदानेऽपि गमनं नानुमन्येत" इत्यादिषु **प्रसिद्धम्** । भगवत्कैङ्कर्यान्तर्गतस्वच्छन्दविहारेण लीलाविभूतौ प्रवेशेऽपि अस्यानुभवस्य संकोचादेरजननात् पुनरावृत्तिर्न भवतीत्युच्यते ।

(मुक्तानामानन्दतारतम्यवाद्यानन्दतीर्थीयमतनिरासः)

इत्थमुत्तरावधिरहितमिममनुभवं प्राप्स्यतामन्तिमशरीरं देव-मनुष्यादिष्वमुकमिति ज्ञातुमशक्यम् । ब्रह्मादीनामपि मोक्षः संभवति । तथैव "[12]धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासात् जुगुप्सिते ।

---

11 वायिनाल् नमो नारायणा वेन्रु मत्तकत्तिडैक्कैकलै कूप्पिपोयिनार् पिन्नैयिन्तिशैक्कैन्रुम् पुणैकोडुक्किलुम् पोकवोट्टार्-पेरियाड्वार् तिरुमोड़ि-4-5-2

चर्णावरत्वे संप्राप्तास्संसिद्धिं श्रमणी यथा ॥'' इति महर्षय ऊचुः । अतो मुमुक्षुदशायामौपाधिकौ उत्कर्षापकर्षाववलम्ब्य मुक्तदशायामपि अनुभवतारतम्यं भवतीति वदन्त आनन्दतीर्थीयाः, मुक्तानां सर्वेषां सर्वेश्वरेण सह परमसाम्यं प्रतिपादयन्ति श्रुत्यादीनि विसस्मरुः । आचारवैकल्यवतां मुमुक्षूणामानन्दह्रासो भवतीति कैश्चिदुच्यमानं वचनमात्रं सदपि, मुक्तत्वापत्तिप्राक्कालिकभगवदनुभवे संकोचं प्रतिपादयतीत्येतावदेव । पश्चान्मुक्तानां (पूर्वमननुभवात्) काले न्यूनतामात्रम्, न त्वर्थन्यूनता ।

(सालोक्यादिमात्रवतां मुक्तत्वव्यपदेशस्यौपचारिकत्वम्)

श्रीविष्णुलोकादिषु सालोक्यसारूप्यादिमात्रं प्राप्तवतां मुक्तत्वव्यपदेशोऽदूरविप्रकर्षनिबन्धन इत्येव । अयमर्थः ''[13]लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये । अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥'' इति नियमनात् सिद्धः ॥

(सायुज्यस्यैव मोक्षशब्दार्थत्वम्)

वचनमिदम् परमपदप्राप्तौ संपन्नायां जायमानं सायुज्यमेव मोक्ष इति वदति । सहस्रे शतादिवत् सालोक्यादीनां तदन्तर्भूतत्वात् तत्र नैकस्यापि वैषम्यं भवति । ''[14]मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन । इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत ॥'' इत्यत्राप्ययमर्थो द्रष्टव्यः ।

(सायुज्यशब्दार्थः)

सायुज्यं नाम सयुजो भावः । सयुक् नाम सः य एकस्मिन् भोग्ये सहभोक्तृत्वेनान्वेति । अत्र सप्रकारकब्रह्मरूपे भोग्ये ब्रह्मणो

मुक्तस्य च सह भोक्तृत्वेनान्वयात् मुक्तः सयुगित्युच्यते। एवं सति श्रुतौ सायुज्यशब्दस्य सार्ष्टिताशब्दस्य च सह प्रयोगः कुत इति चेत्—

सायुज्यमुभयोरत्र भोक्तव्यस्याविशिष्टता।
सार्ष्टिता तत्र भोगस्य तारतम्यविहीनता॥

मुक्तस्य जगद्व्यापाराभावेऽपि, कृषिकारिणा पित्रा निर्व्यापारैः पुत्रादिभिश्च कृषिफलभोगवत् जगद्व्यापारजन्यो रसो व्याप्रियमाणस्येश्वरस्य द्रष्टुर्मुक्तस्य च तुल्यः। सूत्रकारोऽपि, "[15]जगद्व्यापारवर्जम्" इत्यारभ्य "[16]भोगमात्रसाम्यलिङ्गाच्च" इत्यनुजग्राह। "[17]सामरस्यं हि सायुज्यं वदन्ति ब्रह्मवादिनः" इति शाकटायनोऽप्यवोचत्।

(सायुज्यशब्दस्यैक्यार्थकत्वनिराकरणम्)

शब्दशक्तावसत्याम्, भेदश्रुतिषु च विरुन्धानासु, सायुज्यशब्दस्यैक्यार्थकत्वं मन्यमानानाम्, "मुक्तः परमं साम्यमुपैति" इति, "तादृक्" इति च प्रतिपादयन्त्यः श्रुतयोऽपि विरुन्धीरन्। "[18]मम साधर्म्यमागताः" इति गीताचार्योऽप्यनुजग्राह। अमुमर्थं "परेण परधर्मी च भवत्येष समेत्य वै। विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान्॥ विमुक्तधर्मा मुक्तेन समेत्य भरतर्षभ। वियोगधर्मणा चैव वियोगात्मा भवत्यपि॥ विमोक्षिणा विमोक्षी च समेत्येह तथा भवेत्। शुचिकर्मणा शुचिश्चैव भवत्यमितदीप्तिमान्॥ विमलात्मा च भवति समेत्य विमलात्मना। केवलात्मा तथा चैष केवलेन समेत्य वै। स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमुपाश्नुते॥ एतावदेतत् कथितं मया ते तथ्यं महाराज यथार्थतत्त्वम्। अमत्सरस्त्वं प्रतिगृह्य चार्थं सनातनं

ब्रह्म विशुद्धमाद्यम् ॥" इति वसिष्ठकरालसंवादे विस्तरेणोक्त्वा, अयमेव परमार्थ इति महर्षिर्निगमयामास । अत्र मुक्तविषये स्वतन्त्र इत्युक्तिः अकर्मवश्यत्वपरा । मुक्तविषयं स्वराट्शब्दम् "अकर्मवश्यः" इति भाष्यकारो व्याचचक्षे ।

इत्थं श्रुतिस्मृतिसूत्रेषु साम्यस्य कण्ठोक्तत्वात् मुक्तदशायामैक्यं प्रतिपादयन्तः सर्वे प्रदेशाः, "[20]रामसुग्रीवयोरैक्यं देव्येवं समजायत" इत्याद्युक्तरीत्या भेदश्रुत्यविरोधेन नेयाः । अन्यथा, "[29]यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विजः । तदा स केवलीभूतः षड्विंशमनुपश्यति ॥ अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः ॥ अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः । तेनैतन्नाभिजानन्ति पञ्चविंशकमच्युतम् ॥ जन्ममृत्युभयाद्भीताः सांख्ययोगाश्च काश्यप । षड्विंशमनुपश्यन्ति शुचयस्तत्परायणाः", "[22]उत्तमः पुरुषस्त्वन्यः", "[23]तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः । स तु नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥ न लिप्यते कर्मफलैः पद्मपत्रमिवाम्भसा । कर्मात्मा त्ववरो योऽसौ मोक्षबन्धैः स युज्यते ॥", "[24]अयःपिण्डे यथा वह्निर्भिन्नस्तिष्ठत्यभिन्नवत् । तथा विश्वमिदं देवो ह्यावृत्य परितिष्ठति ॥" इत्यादिप्रमाणसहस्रं विरुध्येत । अतो मुक्तस्य ज्ञानभोगादिनिबन्धनं परमसाम्यमेव भवति । ईश्वरस्य छत्रचामरादिवल्लक्षणत्वेनोक्तानि जगत्कारणत्व-मोक्षप्रदत्व-सर्वाधारत्व-सर्वनियन्तृत्व-सर्वशेषित्व-सर्वशरीरित्व सर्वशब्द-वाच्यत्व-सर्ववेदवेद्यत्व-सर्वलोकशरण्यत्व-सर्वमुमुक्षूपास्यत्व-सर्व-

फलप्रदत्व-सर्वव्याप्तज्ञानानन्दस्वरूपत्व-लक्ष्मीसहायत्वादीनि प्रतिनियतानि । मुक्तस्याऽऽधेयत्वविधेयत्वशेषत्वाणुत्वादीनि व्यवस्थितानि ॥

(मुक्तस्य पुनरावृत्तिशङ्कापरिहारः)

एवं सति, "[25]न संपदां समाहारे विपदां विनिवर्तने । समर्थो विद्यते कश्चित् तं विना पुरुषोत्तमम् ॥" इत्युक्तस्थितिकानामस्वतन्त्राणां मुक्तानां येन केन चिद्धेतुनाऽऽवृत्तिशङ्का किं न स्यादिति चेत्—सा न स्यात् । "[26]सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः ॥" इति स्वयमेवानुजग्राह किल । मुमुक्षुदशायां केवलचिदनुभवरूपयोरैश्वर्यकैवल्ययोर्विषये वैराग्यं जातम्, मुक्तेन ब्रह्मात्मकतया सर्वस्य साक्षात्करणेन केवलानुभवप्रसङ्गाभावात्, तत्र पुरुषार्थान्तरगतदोषस्य पश्चान्नित्यप्रत्यक्षितत्वाच्च प्रतिष्ठितं सिद्धम् । अतः स्वेच्छानिबन्धनाऽऽवृत्तिशङ्का न भवति । चिदचिदीश्वरतत्त्वत्रयविषये हेयोपादेयविषये च पूर्वं जातं ज्ञानमिदानीं विच्छेदसंकोचरहिततया विकसितं संपन्नम् । अतः स्वाज्ञाननिबन्धनाऽऽवृत्तिशङ्का न युज्यते । भगवद्विषयवैलक्षण्यज्ञानेन पूर्वं जातं भक्तिशब्दवाच्यं प्रीतिरूपापन्नज्ञानमिदानीं शास्त्रगोचराणां सर्वेषां भगवद्वैलक्षण्यानां साक्षात्क्रियमाणत्वान्निरतिशयप्रीतिरूपापन्नं पूर्तिं प्राप्तम् । एवंभावात् "[27]स च मम प्रियः" इत्युक्तः ईश्वरस्य प्रीत्यतिशयस्तेनापि नियमयितुमशक्यो यथा स्यात् तथा वेलामतिक्रामन् एतेन सह परम्परासंबन्धवत्स्युन्नतस्थलान्यप्यारुह्य तेषु प्रवहद्रूपः संपन्नः । अतः, कर्माभावेऽपि स्वतन्त्रेश्वरेच्छया पुनरावृत्तिः किं भवेदिति न

शङ्कनीयम् । शास्त्रवश्याधिकारस्य निवृत्तत्वात् मुक्तदशायामाज्ञातिलङ्घनं नास्ति । तत्प्रीतेरेव स्वप्रीति[हेतु]त्वात ईश्वराभिमतविपरीतानुष्ठानं न भवति । अतः कैङ्कर्यपर्यन्तपरिपूर्णब्रह्मानुभवरूपो मोक्षाख्यपुरुषार्थः पश्चात् यावदात्मभावीति सिद्धम् । इदं सर्वमभिप्रेत्य, "[२४]अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इति सूत्रकारोऽनुजग्राह ॥

(अधिकारार्थसंग्राहिका गाथा)

आरुह्य तेजोमयं पदं सर्वेषामात्मनां हितमभिनन्दन्तं सुगन्धतुलसीकिरीटं नाथं प्राप्य कैङ्कर्ये आस्माकमंशं स्वीकृत्य गुरुसमूहानां शब्दायमानमञ्जीरकपदयोरधस्तात् , परिवर्तनमन्तरा प्रीत्या वर्धमाने भोगे प्रतिष्ठिता भवेम ॥

अविश्रान्तश्रद्धाशतकलहकल्लोलकलुषा
ममाविर्भूयासुर्मनसि मुनिसिद्धादिसुलभाः ।
मधुक्षीरन्यायस्वगुणविभवासञ्जनकन-
न्महानन्दब्रह्मानुभवपरिवाहा बहुविधाः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे परिपूर्णब्रह्मानुभवाधिकारो द्वात्रिंशः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—o—o—

---

परियेड़िरुपदमेल्लात्तुयिरुक्कुमिदमुकक्कुम्
नारुतुड़ाय्मुडि नादनै नण्णि यडिमैयिनम्
कुरुकचरन्दु कुरुक्कल् कुड़ाङ्गल् कुरैकड़रकीड़्
मारुदलिन्रि महिड़्न्देड़ुम् बोकत्तमन्नुवमे.

सन्दष्टः सारवाग्वित् स्वपरनिशितधीः सङ्गजिन्नैकसंस्थः
स्पष्टोपायोऽतिखिन्नः सपरिकरभरन्यासनिष्पन्नकृत्यः ।
स्वावस्थार्हं सपर्याविधिमिह नियतं व्यागसं क्वापि बिभ्रत्
निर्मुक्तस्थूलसूक्ष्मप्रकृतिरनुभवत्यच्युतं नित्यमेकः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
अर्थानुशासनभागः प्रथमः पूर्णः
श्रीमते निगमान्तमहादेशिकाय नमः ॥

—o—o—

श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

## द्वितीयः स्थिरीकरणभागः

## तत्र सिद्धोपायशोधनाधिकारः

युगपदखिलं प्रत्यक्षेण स्वतः सततं विदन्
निरवधिदयादिव्योदन्वान् अशक्यविवर्जितः ।
जलधिसुतया सार्धं देवो जगत् परिपालयन्
परमपुरुषः सिद्धोपायः प्रतीष्टभरः सताम् ॥

(पूर्वोक्तद्वाविंशतिसंख्याकाधिकारार्थसंग्रहः)

अनादिकालात् संसरणं प्राप्तवता **क्षेत्रज्ञेनावसरप्रतीक्षया भगवत्कृपया** (संसाराद्) विनिवृत्तेन सता, **समीचीनशास्त्रमुखेन तत्त्वहितपुरुषार्थान्** विशदं विज्ञाय **मुमुक्षुणा** भूतेन, **स्वाधिकारानुरूपं कञ्चिदुपायविशेषं** परिगृह्य **कृतकृत्येन, स्वनिष्ठां** विशदं विज्ञाय **तदनुरूप**मिह जीवनकाले **यथाशास्त्र निरपराधं** क्रियमाणस्य **कैङ्कर्यरूपपुरुषार्थस्य** स्थितिप्रकारम्, **शरीरपातानन्तरमर्चिरादिगत्या अप्राकृतदेशविशेषे** प्राप्ते सति अस्या**नवच्छिन्नभगवदनुभवपरीवाहात्मना संपद्यमानायाः परिपूर्णकैङ्कर्यरूपपरमपुषार्थसिद्धेः प्रकारं च**ावोचाम ॥

(व्यामोहहेतुभूतभगवन्निग्रहनिवर्तकहेतुत्रयम्)

एष्वर्थेषु ज्ञातव्यतमे सिद्धोपायविषये साध्योपायविषये एतदुपायप्रभावविषये च कर्मवश्यानां झटिति विशदज्ञानस्यानुत्पत्तये स्वतन्त्रेण सर्वेश्वरेण एतदीयपूर्वापराधानुगुणं कृतस्य संकल्पस्य निवर्तनार्थं प्रधानकारणानि त्रीणि भवन्ति। तानि कानीति चेत्—"अस्तु" इत्यपेक्षणे कृते सति, "अस्तु ते तथैव सर्वं संपत्स्यते" इति श्रीमुखसूक्तिः, सदाचार्यानुग्रहः, सत्संप्रदायसिद्धिश्चेति। एषु सदाचार्यानुग्रहस्य व्याजभूतानि कारणानि एतत्फलविशेषाश्च पराशरमैत्रेयसञ्जयाश्वलायनादिवृत्तान्तेषु द्रष्टव्यानि। सत्संप्रदायसिद्धिर्नाम—स्वयं सत्त्वोत्तरस्य्युपसन्नसावधानावस्थायां ख्यातिलाभपूजानिरपेक्षेण कारुण्यपरतन्त्रेण सदाचार्येण सर्वेषां प्रथमाचार्यात् सर्वेश्वरादारभ्योपदेशपरम्परया प्राप्तयोः तत्त्वहितयोरनपेक्षितविस्तरापेक्षितसंकोचराहित्येन "सर्वेषामेव लोकानां पिता माता च माधवः। गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः॥" इत्युक्तरीत्योपदेशस्य (उपदिष्टयोः) प्राप्तिः

बहुक्लेशे बुद्धिचलनसंभावनार्हे शास्त्रपरिश्रमेऽनधिकृतानां परमास्तिकानां सतामयमुपदेश एव प्रधानम्।

(सूक्ष्मबुद्धीनां शास्त्रपरिचयस्यावश्यकत्वम्)

अन्येषां स्वयं विशदज्ञानप्राप्त्यर्थं कुतर्कैर्व्यामुह्यतां प्रतिबोधनार्थञ्च समीचीनयुक्तिभिः सह श्रवणं प्राप्तम् (समुचितम्)

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥" इत्युक्तरीत्या इमान् अर्थान् समीचीनतर्कैः प्रबुध्यमानाः, "काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः" इत्युक्तरीत्या हैतुका भूत्वा **वेदविरोधितर्कैः प्रामाणिकार्थान् अपहरन्ति** । अयमपहारो **विभूतिविषयको विभूतिमद्विषयकश्चेति** द्विविधो भवति । तत्र विभूतिमतोऽपहरणं नाम—**श्रियः पत्यौ सर्वेश्वरे** नास्तित्वाभिमानः, अन्यं कञ्चिदीश्वरत्वेन परिकल्प्य सर्वेश्वरस्य **विभूतिकोटौ** निवेशनञ्च । **विभूतेरपहरणं** नाम—विभूतेः कयाचिद्विधया नास्तित्वसाधनम्, सत्ताभ्युपगमेऽपि ईश्वरसंबन्धं निराकृत्य स्वातन्त्र्यसाधनम्, पारतन्त्र्याभ्युपगमेऽपि स्वपरशेषत्वप्रसाधनञ्च । **एष्वपहारेषु** यस्य-कस्यापि स्वरूपतो मृदुपङ्गे कृतात्मसमर्पणे पुंसि विपरीतसंसर्गादुपनतो सः "दत्तस्य हरणेन च" इत्युक्तापहारतोऽपि क्रूरतरः स्वयमपहृत्य दत्तस्य द्रव्यस्य पुनरपहार इव संपद्येत ।

(हैतुकसंसर्गस्यावश्यपरिहरणीयत्वम्)

अतो बहुविधेषु **व्यामोहकारणेषु हैतुकसंसर्गः** सुदूरे परिहरणीयः । इममर्थं "पाषण्डिनो विकर्मस्थान् बैडालव्रतिकान् शठान् । हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥", "डम्भिहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत् ।" "नासद्भिः किञ्चिदाचरेत् ॥", "त्यज दुर्जनसंसर्गम्", "वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥" इत्यादिषु प्रपञ्चयामासुः । **इदं हैतुकसंभाषणं** "माययाऽपहृतज्ञानाः" इति रीत्या लब्धज्ञान-

अष्टमापाद्य, "चतुर्विधा मम जना भक्ता एव हि ते श्रुताः" इतीश्वरेणास्मदीया इत्युक्तेषु चतुःप्रकारेष्वनन्तर्भाव्य, "[1]अनुकम्पनीया अस्मद्बालाः" इत्युक्तत्वविषयतामपाद्य, 'न मां दुष्कृतिनो मूढाः प्रपद्यन्ते" इत्युक्ते भगवदभिमानबाह्यवर्गेऽन्तर्भावयति ।

(प्रपन्नस्यापि व्यामोहसंभवसमर्थनम्)

अशरण्यशरण्यं सर्वेश्वरं शरणतया स्वीकुर्वतः परमास्तिकस्य कैश्चित् सह संगत्या बाह्यतायाः संभवाभावेऽपि तस्य व्यामोहोत्पत्तिं तस्य सदाचार्यैः परिहरणं च पश्यामः । महर्षयोऽपि "एकं यदि भवेच्छास्त्रं ज्ञानं निस्संशयं भवेत् । बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम् ॥" इति, "निस्संशयेषु सर्वेषु नित्यं वसति वै हरिः । ससंशयान् हेतुबलान् नाध्यावसति माधवः ॥" इत्यूचुः किल । "न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः " इत्यादीनि आत्मगुणपरिपूर्णाधिकारिविशेषविषयाणि भवन्ति । अतः आरुरुक्षूणां व्यामोहः संभवतीत्ययमर्थः, "श्रूयते किल गोविन्दे भक्तिमुद्वहतां नृणाम् । संसारन्यूनताभीतास्त्रिदशाः परिपन्थिनः ॥", "सत्यं शतेन विघ्नानां सहस्रेण तथा तपः । विघ्नायुतेन गोविन्दे नृणां भक्तिर्निवार्यते ॥" इत्यादिषु प्रसिद्धः ।

(वक्ष्यमाणार्थप्रतिज्ञानम्)

तत्र प्रथमतः सिद्धोपायविषये जायमानान् व्यामोहान् तेषां परिहारांश्च ब्रूमः ।

---

1 अलियनम् पैय्यल्—तिरुमाले-37

अनादिकालादनादृतवता ईश्वरेणाद्य कस्यचिदादरणं स्वस्वातन्त्र्यमात्रात् किल भवति । एवं न भवति चेत्, "[2]अद्य मां पदार्थं कृत्वा स्वं मदन्तः स्थापितवता तदा मम बहिर्गमनाय संकल्पनं किञ्चिकीर्षया" इति दिव्यसूरौ विज्ञापितवति सति, सर्वेश्वरः "[3]व्याप्ताकाशेऽलंकारभूता मेघास्तूर्यघोषमकुर्वन्" इत्येतत्करणातिरेकेणान्यदुत्तरमनुगृहीतवान् किम् । अतोऽस्माभिः किञ्चिदुपायानुष्ठानं किमर्थं कार्यम् । "[4]मध्ये आगत्योज्जीवयन्तं नाथम्" इत्युक्तरीत्या करुणामयीं चिन्तां दासोपरि कृत्वा स एव यदा रक्षेत् तदा द्रष्टव्यमित्येतावदेव किल इति केचिद्व्यामुह्यन्ति ।

एतेषां प्रतिबोधनं यथा—ईश्वरः स्वतन्त्रः सन्नपि वैषम्यनैर्घृण्यरूपयोर्दोषयोः स्वस्मिन्नप्रसङ्गार्थमेतत्सविधे कमपि व्याजमुत्पाद्य तमवलम्ब्यैव रक्षति ।

(व्याजसापेक्षत्वस्य श्रीशठकोपसूर्यभिमतत्वनिरूपणम्)

इममर्थं "तिरुमालिरुञ्शोलै (महत्तमवन) गिरिरित्यवोचमिति यत श्रीवल्लभो मद्धृदये पूर्णतया प्राविशत्" इति दिव्यसूरिः स्वयमेवानु-

---

2 इन्नैप्पोरुलाक्किक्तन्नैयेन्नुल्वैत्तान् अन्नैप्पुरम्पोकप् पुणर्तन्शेय्वान्—तिरुवाय्मोऴि-10-8-9

3 शूऴ्विशुम्बणिमुकिल तूरियम् मुऴक्किन—
तिरुवाय्मोऴि-10-9-1

4 नडुवे वन्दुय्यक्कोलिकिन्रनातन्—तिरुवाय्मोऴि-1-7-5

5 तिरुमालिरुञ्शोलैमलै येन्रेनेन्नत्तिरुमाल् वन्देन्नेञ्जुनिरैय प्पुगुन्तान्—तिरुवाय्मोऴि-10-8-1

लमाह। अयं व्याजोऽपि यदीश्वरेणैवोत्पाद्यते, तर्हि अयं पूर्वमेव कुतो नोत्पादित इति चेत्—एषामात्मनामनादिकर्मप्रवाहाणां विषमविपाकसमयकत्वेनावस्थितत्वात् ईश्वरस्य कर्मानुरूपफलप्रदत्वाभावे वैषम्यदोषस्य प्रसङ्गाच्च पूर्वमस्यावसरो न जात इत्येतत् कार्यविशेषदर्शनात् कल्पितम्। एवमनभ्युपगमे सर्वसिद्धान्तिनामपि इतः पूर्वमनुत्पन्नस्य मोक्षश्रद्धादेरिदानीमुत्पत्तौ किं बीजमिति प्रश्ने उत्तरप्रतिपादनार्थमुपायो नास्ति। अनादिकर्मप्रवाहवैचित्र्यादित्युत्तरणं तु ईश्वरमभ्युपगच्छतामनभ्युपगच्छतां च तुल्यम्। ईश्वरस्वातन्त्र्यं यत्किञ्चिद्व्याजावलम्बनेन तत्संकल्पितसमये रक्षणस्य निवारकाभावस्य च प्रयोजकम्।

(पूर्वोक्तगाथादिनिर्वाहः)

एवं सति "अद्य माम्" इति गाथायाः तन्मूलभूतवचनानां च कथं निर्वाह इति चेत्—तं ब्रूमः। ईश्वरस्य सहजयोः स्वातन्त्र्यकारुण्ययोः प्राधान्यात् एतद्व्याजभूतविशेषकारणानि अनादृत्य, 'पूर्वं मम पराङ्मुखत्वापदनस्य अद्य ममाभिमुख्यापादनस्य च तव स्वातन्त्र्यं कृपां च वर्जयित्वाऽन्यत् किमपि प्रधानकारणं न पश्यामि, मह्यमप्रदर्शितं स्वतः सर्वज्ञेन त्वया दृष्टमस्ति चेत् तत् ब्रूहीत्युक्त्वा, ईश्वरस्य निरुत्तरतयाऽवस्थितत्वात् स्वातन्त्र्यकृपयोः प्राधान्यं लोकाय प्रकाशयति। अतोऽस्य चेतनस्य लीलोपकरणत्वापादनस्य प्रधानकारणमीश्वरस्वातन्त्र्यम्, अस्य सहकारिकारणं प्रवाहानादि स्वतन्त्राज्ञातिलङ्घनम्, अस्य भोगोपकरणत्वापादनस्य प्रधान-

कारणमीश्वरस्य स्वाभाविककारुण्यम् , एतत्प्रतिबन्धकमीश्वरसंकल्पं शमयन्तः सन्तः सहकारिकारणत्वेन प्रथिता एतदीयसुकृतविशेष-द्वारककृपामूलका वशीकरणविशेषाः इति, ईश्वरस्य स्वभावं वैषम्य-नैर्घृण्याभावं बन्धमोक्षादिव्यवस्थां च प्रमाणप्रतिनियतप्रकारेणा-नुसन्धाय स्वतन्त्रस्य कृपायामवधानं विधाय वर्तनं युक्तमिति भावः ॥

(स्वातन्त्र्यकारुण्ययोरावश्यकत्वम्)

निष्कृपस्य स्वातन्त्र्यं बाधकम् । अस्वतन्त्रस्य कारुण्यं परेषामनुपकारकं स्वस्यापि क्लेशावहं भवति । स्वतन्त्रस्य कारुण्यं संकल्पितस्य निर्वहणात् स्वस्याप्यतिरसावहमाश्रितानां सर्वेषां सदैवा-निष्टनिवृत्तेरिष्टप्राप्तेश्च हेतुर्भवति ।

(वस्तुतो दुःखित्वाभावः)

एवम्भावादेवावतारदशायाम्, "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः" इत्येवंरीत्या प्रतिपाद्यमानानि सर्वाण्यपि (चेष्टादीनि) अनुग्रहविषयाणां सतां केषाञ्चिद्रञ्जनार्थानि आसुरप्रकृतीनां मोहनार्थानि चेत्येव । इममर्थं "कालस्य हि च मृत्योश्च जङ्गमस्थावरस्य च । ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः । कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ तेन वञ्चयते लोकान् मायायोगेन केशवः । ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥", "कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः । मोहयित्वा जगत् सर्वं गतः स्वं स्थानमुत्तमम् ॥", "मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते । लीला जगत्पतेस्तस्य च्छन्दतः संप्रवर्तते ॥"

इत्यादिषु महर्षयो निर्धारयामासुः। अतोऽवतारवृत्तान्तेऽपि दुःखाभिनयमात्रमेवास्ति। तदपि कृपामूलम्। इदं स्वतन्त्रस्य स्वस्य लीलापि भवति। कुब्जवामनादीनां साभिनन्दनं रक्षणं निरपेक्षाणां राज्ञां लीलारूपं कृपाकार्यं च पश्यामः किल। एवम्भावादेव हि, "उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमान्" इत्युक्तम्। इत्थं परहितव्यापाराश्रयत्वादाश्रितानां रक्षकः, उपायान्तरस्थाननिवेशादुपायश्च भवति। रक्षणव्यापारफलाश्रयत्वात् शेषी, ततो हेतोः प्राप्यश्च भवति। एवंभावोऽस्य स्वरूपप्रयुक्त इति धर्मिग्राहकप्रमाणसिद्धम्।

(साधारणासाधारणगुणविवेचनम्)

इत्थं रक्षकस्येश्वरस्य प्रधानभूतासु ज्ञानशक्तिकरुणासु ज्ञानं शक्तिश्च निग्रहानुग्रहसाधारणे। कारुण्यमनुग्रहस्यासाधारणम्। एषु कारुण्यं नाम–परहितप्रवणता।

(कारुण्यकार्यविशेषपरम्परानिरूपणम्)

इदं त्रिविधचेतनानां सत्तास्थित्योः, अनुकूलवृत्तीनाम्, नित्यानां नित्यानुभवस्य, मुक्तानामनावृत्तेः, लीलाविभूतौ सामान्यसृष्ट्यादीनाम्, स्वावताररूपायाः शुद्धसृष्टेः, शास्त्रप्रवर्तनस्य, तन्मूलकतत्त्वहितविषयकज्ञानोत्पादनस्य, मोक्षश्रद्धोत्पादनस्य एतत्प्रदानार्थं व्याजभूतस्य सुकृतविशेषस्य, अधिकारानुरूपनिग्रहशमनोपायप्रदानस्य, अत्र करणप्रेरणादिदशायां सहकारित्वेनावस्थानस्य, उपासकस्यान्तराये प्राप्ते प्रतिसमाधानकरणस्य

अकिञ्चनानामुपायान्तरस्थानेऽवस्थितिपूर्वं निरपायरक्षणस्य, एत-द्व्याजावलम्बनेन प्रसन्नस्यानादिकालकृतानन्तापराधानादरण-पूर्वकमनन्तसुखे विश्रमणं यथा स्यात् तथा संसारनिवर्तकत्वस्य, आर्त-प्रपन्नेभ्यस्तदैव मोक्षप्रदानस्य, जीवनकाले निरपराधेन वर्तितव्यमिति फलप्रार्थनं विस्मृतवतां दृप्तप्रपन्नानां प्रारब्धकर्मवशादुपनतस्यापराधस्य कृतेऽनुतापमुत्पादयतोऽधिकारानुरूपे प्रायश्चित्तविशेषे प्रवर्तनस्य, तथाभूतमृदुप्रकृतिकभिन्नानां यमविषयगमनमभिमतफलप्रतिबन्धं च निरुध्योपक्लेशैः शिक्षणस्य च प्रधानं सामान्यनिदानं भवति ।

(भगवतः कारुण्यविशिष्टस्य सिद्धोपायत्वम्)

एवंविधकृपाविशिष्ट ईश्वरः, 'कृष्णं धर्मं सनातनम्' इत्युक्तरीत्या सिद्धोपायः । अस्य प्रसादनभूते भक्तिप्रपत्ती साध्योपायौ ।

(प्रपत्तेरधिकारिविशेषणत्ववादनिरासः)

कस्यचिदधिकारिविशेषस्य कर्तव्यतया "मामेकं शरणं व्रज" इति विधीयमानां प्रपत्तिम् अधिकारिविशेषणत्वेन यत् केचिदवोचन्, सोऽधिकारिविशेषणस्य विषये उच्यमानेन लक्षणेनानन्वयादतिवादः । अन्यथा ईश्वरे उपायत्वेनावस्थिते सति उपासनादिशास्त्रार्था अप्यधिकारिविशेषणानि स्युः ।

(प्रपत्त्यनुपायत्ववादतात्पर्यम्)

अतः—प्रपत्तिरपि नोपाय इति कैश्चित्क्रियमाणोऽतिवादोऽपि, सिद्धोपायप्राधान्यमूलक इत्येव । तस्य प्राधान्यं च प्रसादनैः प्रति-बन्धके निग्रहे शान्ते सति स्वाभाविकानुभवस्य प्रयोजकत्वात् ।

तत् कथमिति चेत्---रत्नस्य मालिन्ये नष्टे सति जायमानः स्वाभाविकः प्रभाविकासो यथा तदनुरूपभगवत्संकल्पमात्रनिबन्धनो भवति, तथा मुक्तस्य जायमानाः ज्ञानविकासादयोऽपि तदनुरूपव्यवस्थित-भगवत्संकल्पनिबन्धना भवन्ति । एवं नित्यानामपि । इममर्थम् "इच्छात एव तव विश्वपदार्थसत्ता" इत्यभियुक्ताः संजगृहुः ।

अतः सिद्धोपाये प्रधाने सत्यपि तद्वशीकरणार्थसाध्योपाया-नुष्ठानस्य "अद्य माम्" इत्यादिपूर्वाचार्यवाक्यविरोधो नास्ति ।

(तन्मूलवचनतात्पर्यम्)

"यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः । शेषवृत्ति-विधानेऽपि किं सुप्तः सोऽथवा मृतः ॥" इत्यादीन्यपि रक्षकान्तरा-न्वेषणार्थमुक्तानीत्येव । अन्यथा भोजनादिव्यापारा अपि त्याज्याः प्रसज्येरन् । "स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य देहिनः ।" "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥", "अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी । मोदते भगवान् भूतैर्बालः क्रीडनकैरिव ॥" इत्यादिषु जीवस्य पारतन्त्र्यमी-श्वरस्य कर्मानुगुणप्रवर्तनप्रकारश्चोच्यत इत्येतावदेव । अस्या गाथाया एषां वचनानां चैवं तात्पर्ये असति सर्वशास्त्रविरोधः पूर्वापर-विरोधश्च प्रसज्येयाताम् ।

(संबन्धविशेषमूलकशङ्कापरिहारः)

एवमीश्वरस्वातन्त्र्यसहजकारुण्यमूलकानां जायमानानां व्यामोहानां परिहारान् अवोचाम । अथ सम्बन्धविशेषमूलकमुपनमतो

-व्यामोहस्य परिहारं ब्रूमः । **ईश्वरे शेषित्वेनावस्थिते**, अस्मासु च "गर्भभूतास्तपोधनाः" इति न्यायेन **स्तनन्धयप्रायेषु** सत्सु, मातृस्त-न्यार्थमार्ततया रोदनकरणादतिरेकेण भृतिं ददद्भिरिवास्माभिरात्म-समर्पणस्य करणम् रक्षा कार्येत्यपेक्षणं, विश्वसनं, च कार्यमित्येवंप्रकारेणो-च्यमाना इमे सर्वेऽपि स्वरूपानुरूपाः कथं स्युरिति केचित् **सिद्धोपाय-मुखेन साध्योपायशरीरं** विनाशयितुमुद्युञ्जते ।

एषां निवारणं यथा—**महर्षिभिर्भाष्यकारादिभिश्च विश्वासपूर्वकप्रार्थनात्मनिक्षेपादीनि** स्वयमनुष्ठाय अत्र **शास्त्राणि** प्रमाणीकृत्योप**देशपरम्परायाः** प्रवर्तितत्वात् **शेषित्वादिसंबन्धस्य नित्यत्वेऽपि कर्मवतां जीवानां विषये** ईश्वरः कश्चित् **साध्योपाय-विशेषमपुरस्कृत्य** न रक्षेदिति **शास्त्रनिष्ठैः** परिग्राह्यम् । **शास्त्रे** त्यक्ते **अस्य संबन्धस्य** प्रतिपादनार्थे(अपेक्षितः) ईश्वरोऽपि न लभ्येत ।

अतः सम्बन्धाद्धेतोरीश्वरो रक्षायां स्वतः (अधिकृतः) इति, शेषभूतोऽयं स्वरक्षणे न प्राप्तः (नाधिकृतः) इति पूर्वोक्तमपि (प्रधान-प्रतितन्त्राधिकारोक्तमपि) रक्ष्यरक्षकभावस्य लोकदृष्टप्रक्रिययौचित्य-प्रदर्शनार्थं, न त्वेतावदेव **रक्षणस्य निरपेक्षकारणमिति** प्रतिपादनार्थम् । तथाऽभ्युपगमे **सर्वेऽपि नित्यमुक्ताः** प्रसज्येरन् । **स्वातन्त्र्येण नियमे** उच्यमाने, पूर्वोक्तरीत्या **वैषम्यनैर्घृण्ये** प्रसज्येयाताम् ।

(संबन्धज्ञानस्यैव रक्षाहेतुत्वमिति वादनिरासः)

**युक्तिमात्रेणेमान्** अर्थान् वदद्भिः **सम्बन्धज्ञानमेवापेक्षितम्** **रक्षापेक्षादीनि** नापेक्षितानि इति वक्तुमशक्यम् । **अचिद्द्रव्येषु**

पशुमृगपक्ष्यादिषु स्तनन्धयेषु च रक्षापेक्षारहिततयैव सम्बन्धज्ञानरहिततयापि सत्सु तेषां रक्षणं पश्यामः किल । सत्यं तथा अद्राक्षम ; तथापि शास्त्रबलादत्र सम्बन्धज्ञानमपेक्षितमित्युच्येत चेत्—शास्त्रोक्तरीत्या ज्ञानविशेषः स्वीकर्तव्यः ।

(अनिवारणमात्रस्य रक्षाहेतुत्वमिति वादनिरासः)

स्वस्येश्वरेण रक्षणसमये सम्बन्धेन सहानिवारणमेवापेक्षितमिति चेत्—तदप्यनुपपन्नम्—सुषुप्त्याद्यवस्थासु सर्वेभ्योऽपि मोक्षप्रदानप्रसङ्गात् । स्वयंनिवारणस्य योग्यायामवस्थायामनिवारणमेवापेक्षितमिति च वक्तुमशक्यम् , निवारणयोग्यताशून्यानामचितां निवारयतां पश्वादीनां पुत्रादीनां च रक्षणस्य दर्शनात् ।

("ये नाथवन्तः" इति श्लोकार्थः)

अतो ",ये नाथवन्तो हि भवन्ति लोके ते नात्मकार्याणि समारभन्ते । तेषां हि कार्येषु भवन्ति नाथाः शैब्यादयो राम ! यथा ययातेः ॥" इति श्लोके नाथशब्दव्युत्पत्त्या निर्भरतोपयुक्तसम्बन्धविशेषप्रतिपादकमतुप्प्रत्ययेन च याचनमात्मनिक्षेपश्च व्यज्जिते भवतः । अन्यथाऽतिप्रसङ्गादिदोषाः स्युः । नाथवन्त इत्यत्र एतावद्विवक्षाया अनङ्गीकारे लोकनीतौ दृष्टानां सर्वेषामर्थानां मोक्षशास्त्रे ऊहनं वचनविरुद्धम् ।

(आप्तोक्तितात्पर्यनिरूपणम्)

सर्वरक्षके ईश्वरे स्थिते सति स्वरक्षणव्यापारेऽस्माकमन्वयो नास्तीत्याप्तवचनस्य तात्पर्यं ब्रूमः—

यदर्थं तु कृतो न्यासस्तदर्थं न पुनः क्रिया।
पूर्वमप्यपराधीनप्रवृत्तावस्य नान्वयः ॥

यथाप्रमाणं स्वरक्षणभरसमर्पणं कृतवतः पश्चात् स्वरक्षणार्थ-व्यापारे प्राप्तिर्नास्ति। पूर्वमपि स्वेन स्वरक्षणार्थं कृतस्य समर्पणादि-व्यापारस्य सर्वकर्त्रा तेनैव बीजाङ्कुरन्यायेनानादिप्रवर्तितकर्म-प्रवाहविशेषहेतुकयत्किञ्चिद्याद‍ृच्छिकसुकृतादिविशेषकारणं पुरस्कृत्य संपादितत्वात् वयमेवास्मान् रक्षाम इत्यवस्थानस्य प्राप्तिर्नास्ति। सर्वरक्षकतया मूलमन्त्रादौ शिक्षितोऽयमेवास्मान् कस्मिंश्चिदुपाये व्यापार्य तेन व्यापारेण प्रसन्नः सन् रक्षतीति स्थातुं युक्तम्।

स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम्।
स्वदत्तस्वधिया स्वार्थं स्वस्मिन् न्यस्यति मां स्वयम् ॥

इयमात्मसमर्पणदशायां ख्यातिलाभपूजाफलसङ्गकर्तृत्वो-पायत्वरूपदोषरहिता भगवदनुसन्धानपद्धतिः।

अतो मातृस्तन्यवदुपनमत ईश्वरप्रसादस्य स्तनन्धयीय स्तनचूषण-व्यापारवदस्यापेक्षादीनि। अनेन सिद्धोपायस्वरूपस्य दोषो न भवति।

(लक्ष्मीसंबन्धविषयकव्यामोहपरिहारः)

एवं नारायणशब्दे सिद्धान् गुणविशेषसम्बन्धविशेषान् हेतुत्वेन अवलम्ब्य जायमानानां व्यामोहानां परिहारान् उदाहार्ष्म। इतः परं "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया। रक्षकः सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥" इत्युक्तरीत्या सपत्नीकस्य सतः सर्वरक्षणदीक्षितस्य सर्वेश्वरस्य श्रीमच्छब्दोक्तपत्नीसंबन्ध-विषये जायमानानां व्यामोहानां दिङ्मात्रेण परिहारं प्रदर्शयामः।

(द्वये पूर्वखण्डेऽपि विशेषणत्वम्)

केचित् द्वये पूर्वखण्डे श्रीमच्छब्द उपलक्षणपर इति, उत्तरखण्डे श्रीमच्छब्दो विशेषणपर इति विभज्य व्याचचक्षिरे। अत्र शब्दे एकरूपे वर्तमाने सति, स्वारस्यस्य बाधके चासति, "स्वरूपं स्वातन्त्र्यं भगवत इदम्" इत्यादिषु प्रसिद्धस्य कूटस्थसंप्रदायस्य विरुद्धतया क्रियमाणोऽयं विभागोऽनुपपन्नः ॥ अनन्योपायत्ववि-रुद्धस्य उपायद्वित्वस्य प्रसङ्गोऽत्र बाधक इति चेत्— अनन्यप्रयो-जनत्वविरुद्धस्य प्राप्यद्वित्वस्य प्रसङ्गादुत्तरखण्डेऽपि विशेषणत्वं त्याज्यं प्रसज्येत। तर्ह्युभयत्राप्युपलक्षणं भवत्विति चेत्—गुणविग्रह-व्यापारविशेषा अपि उभयत्रोपलक्षणानि प्रसज्येरन्। उपयुक्तत्वात् ते विशेषणानीति चेत्—इदं पूर्वोत्तरखण्डयोः पत्नीसंबन्धेऽपि तुल्यम्। उपयोगविशेषास्तत्तद्वस्त्वनुरूपरीत्या प्रमाणसंप्रदायाभ्यां द्रष्टव्याः। वस्त्वनुरूपो ह्युपयोगो भवति।

(श्रिय उपयोगप्रकारः)

उपायोपेयपरे वाक्यद्वयेऽपि श्रुतस्यास्य विशेषणस्यो-पयोगप्रकारं "परिमलाविनाभूतपुष्पोपरि वर्तमाना कर्माणि निवर्तयेत्"[1] इति, "तव श्रीरूपां पङ्कजवासिन्याः श्रीरूपां चावलम्ब्य तव मन्दिरं सम्मार्ज्य"[2] इति श्रीशठकोपसूरयोऽनुजगृहुः। "अलमेषा

1 वेरिमाराद पूमेल् इरुप्पाळ् विनै तीर्कुम-तिरुवाय्-4-5-11

2 निन् तिरुवरुळुं पङ्कयत्ताळ् तिरुवरुळुङ्गोण्डु
निन्कोयिल् शीय्त्तु ,, 9-2-1

परित्रातुं राक्षस्यो महतो भयात्" इति, "अलमेषा परित्रातुं राघवात् राक्षसीगणम्" इति च श्रीवाल्मीकिर्भगवान् शरणागतिसारे आदिकाव्ये निबबन्ध। "संसारार्णवतारिणीम्" इति हिरण्यगर्भकाश्यपादयोऽप्यवोचन्। "वाचः परं प्रार्थयिता प्रपद्येन्नियतः श्रियम्" इति श्रीशौनकभगवान् विदधौ। "आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी" इति वसिष्ठपुलस्त्यवरप्रसादलब्धपरदेवतापारमार्थ्यज्ञानवान् श्रीपराशरब्रह्मर्षिरनुजग्राह। "विमुक्तिफलदायिनी" इत्यस्याऽऽत्मविद्याविशेषणत्वेऽपि तत्सामानाधिकरण्यात् सा अस्या विभूतिः सिद्धा। श्रियः पतिरपि "यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम्। निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणाः॥" इति श्रीसात्वतसंहितायां श्रीपतिरूपध्यानेऽनुजग्राह। तत्परेषु शास्त्रेषु सत्सु, इमानि मध्यस्थशास्त्राणि अतिप्रबलानि। श्रीयामुनाचार्योऽपि "जगत् समस्तं यदपाङ्गसंश्रयम्" इति, "श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादात् ऋते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित्" इति चानुजग्राह। श्रीभाष्यकारोऽपि, श्रीवैकुण्ठगद्येऽपि "शेषशेषाशनादिकं सर्वं परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या" इति भगवत्कैङ्कर्यरूपपरमपुरुषार्थः यथैतन्नियोगमनुष्ठेय इत्यनुजग्राह। श्रीकूरेशोऽपि "स्वस्ति श्रीर्दिशतादशेषजगतां सर्गोपसर्गस्थितीः स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन् हरिः। यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्यथा(दा)ऽस्य रसदा स्यादैकरस्यात् तया॥"

इति संगृहीतमर्थं "देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते" इत्यारभ्य व्यस्तृणीत। श्रीभट्टोऽपि, "ऐश्वर्यमक्षरगतिं परमं पदं वा कस्मैचिदञ्जलिभरं वहते वितीर्य। अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब त्वं लज्जसे कथय कोऽयमुदारभावः ॥" इति श्रौतमुदारशब्दं व्याचचक्षे। श्रीसूक्तभाष्ये महायतिरपि अपेक्षितार्थान् सर्वान् उपपादयामास। इत्थं श्रुतिस्मृतिसंप्रदायस्थितीरवलम्ब्य श्रीमच्छब्दोक्तविशेषणस्य विग्रहादीनामिव वस्त्वनुरूपा उपयोगविशेषाः सहृदयैर्ज्ञातव्याः ॥

भरस्वीकाररहितं रक्षासंकल्पवर्जितम्।
गुणादिकमिहेष्टं हि शरण्यस्य विशेषणम् ॥
ऐकरस्यजुषोः शेषिदम्पत्योः सर्वकर्मसु।
विशेषणविशेष्यत्वं श्रुतं कस्मान्न रोचते ॥
प्रतर्दनादिविद्यासु वेद्येऽपि परमात्मनि।
अचेतनवदिच्छामश्चेतनं च विशेषणम् ॥
इत्थं प्रपत्तिविद्यायां तत्तन्मन्त्रानुसारतः।
विभुः पत्न्या गुणाद्यैश्च विशिष्टो विषयोऽत्र नः ॥

अत्र केवलतर्कान् आश्रित्य प्रमाणानि न बाधनीयानीति पूर्वमेवावोचाम। अतो यथाप्रमाणं शरण्याभिप्रायविशेषानुगुणं विशिष्टस्योपेयत्ववत् विशिष्टस्योपायत्वेऽपि न कश्चिद् दोषः। नारायणशब्दचरणशब्दप्रतिपादितगुणविशेषविग्रहविशेषादिविशिष्टस्यैकस्योपायत्ववत् तुल्ययोगक्षेमश्रीमच्छब्दप्रतीतनित्यपत्नीसंबन्धवैशिष्ट्ये-

ऽपि उपायैक्यस्य न क्षतिः। **उपायविशेषणानि** सर्वाणि हित्वो-**पायस्यैकत्वं** संपादनीयमिति चेत् **उपायत्वमपि** विशेषणं न भवेत्।

विशेषणप्रयुक्तेन विशेष्ये उपनमतोत्कर्षेण विशेष्यस्य वैगुण्यादिकं न भवतीति, "स्वतः श्रीस्त्वं विष्णोः स्वमसि तत एवैष भगवान् त्वदायत्तर्द्धित्वेऽप्यभवदपराधीनविभवः। स्वया दीप्त्या रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यं भवति च न चान्याहितगुणम् ॥" इत्यस्मिन् **श्लोके** निरणायि। **विशेषणेन विशेष्यस्य** जायमानो-ऽतिशय **इव विशेष्यस्य स्वरूपानुबन्धी अतिशयोऽपि**, "अनन्या राघवेणाहं भास्करेण प्रभा यथा" इति दृष्टान्तानुसारेण द्रष्टव्यः। **भास्करस्य प्रभायाश्च स्वतःसिद्धतेजस्त्ववत्** उभयोरपि "अनन्याधीन-कल्याणम्" इत्युक्तरीत्या **स्वभावसिद्धकल्याणत्वात्** "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति "तव श्रिया" इति "तव श्रीः" इति, "श्रियः श्रीः" इति, "श्रिया अपि श्रीभूत" इति चान्योन्याति-शयावहयोर्विशेषणविशेष्ययोर्निर्देशस्य न दोषः।

(विशेषणविशेष्ययोर्हविःसमर्पणप्रतिसंबन्धित्वनिरूपणम्)

**श्रुतिबलेन** "द्वौ च सदैकशेषी" इत्युक्तप्रकारेण "उभ-याधिष्ठानं चैकं शेषित्वम्" इति श्रीराममिश्रेण (सोमाशियाण्डान्) षडर्थसंक्षेपे निष्कृष्टरीत्या उभयोरपि **एकशेषित्वाश्रयत्वात्** **हविर्विशेषेषु** अग्नाविष्णुप्रभृतीनामिवात्मसमर्पणप्रतिसंबन्धिभावस्य नानुपपन्नत्वम्।

---

3 उन्तिरु-तिरुवाय्-10-10-2

4 तिरुवुक्कुंतिरु-पेरियतिरु-7-7-1

(एकमितिनिर्देशस्याबाधकत्वम्)

युवत्वादौतुल्येऽप्यपरवशताशत्रुशमनस्थिरत्वादीन् कृत्वा भगवति गुणान् पुंस्त्वसुलभान् । त्वयि स्त्रीत्वैकान्तान् प्रदिमपतिपारार्थ्य-करुणाक्षमादीन् वा भोक्तुं भवति युवयोरात्मनि भिदा ॥" इत्युक्त-रीत्या **पत्न्या नित्यपतिपारार्थ्यात् यागतन्त्र इव पतिप्राधान्येन शास्त्रेषू**पदेदेशान म् , एको यजमान इतिवत् एकव्यपदेशस्य च न दुष्टत्वम् "पङ्कजालयावल्लभमेकमेव विषयीकरोति ज्ञानम्" इति सूक्तेरपीदमेव **तात्पर्यम्** । "तदन्तर्भावात् त्वां न पृथगभिधत्ते श्रुतिरपि" इत्येवंरूपाः पन्थानोऽपि द्रष्टव्याः । भगवन्निर्देशस्थले श्रीरपि निर्दिष्टे(ष्टप्राये)त्यारभ्य श्रीभाष्यकारानुगृहीतां वार्तां **प्रणतार्तिहराचार्य**-(आचान्) सन्निधौ श्रुत्वा वेदान्तिमुनिः (नञ्जीयर्) संजग्राह ।

(काम्यलक्ष्मीरूपेऽपि प्रणम्यतादेः समर्थनम्)

अतः **काम्यप्रधानेऽधिकारार्चनरूपेऽपि विष्णुपत्नीत्वस्य प्रतिष्ठितत्वात् लयभोगार्चनप्रवृत्तानामनन्यप्रयोजनानां मुमु-क्षूणां काम्यप्रधानभगवद्रूप इव मातृत्वाद्युपाधिकानां प्रणामाद्या-चाराणां** न दोषः ।

इत्थं **मध्यस्थदृष्ट्या प्रामाणिकार्थेषु** प्रतीयमानेषु सत्स्वपि गृहीतस्यापरित्यागे, "दृढपूर्वश्रुतो मूर्खो धर्माणामविशारदः । वृद्धान् अपृच्छन् सन्देहान् अन्धः श्वभ्रमिवर्च्छति ॥", "अन्यथा मन्दबुद्धीनां प्रतिभाति दुरात्मनाम् । कुतर्कव्यालदष्टानां विभ्रान्तेन्द्रियवाजिनाम् ॥" इतीयं दशा भवति ।

---

5 तामरैयाळ् केल्वनोरुवनैये नोक्कुमुणर्वु-मुदल्तिरु-67

अतः **सिद्धोपायशब्दवाच्यविमर्शे** "नानयोर्विद्यते परम्" "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम", "अस्या देव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम्। तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥", "व्यापकावतिसंश्लेषादेकतत्त्वमिवोदितौ" इत्युक्तरीत्या एकशेषित्वात्, एकाभिप्रायकत्वात् परस्परप्रावण्यातिशयात् स्वरूपरूपादिषु वियोगानर्हान्वयविशेषात्, "गाढोपगूढानि ते" इति यथोच्येत तथा **सुश्लिष्टविशिष्टतत्त्वस्थि**त्यबाधेन सविशेषणनारायणशब्देन प्रतिपादनप्रकारस्यानुसंधानं **सत्त्वस्थानां** न्यायप्राप्तम्।

**समस्तपुरुषार्थानां साधकस्य दयानिधेः।**
**श्रीमतः पूर्वसिद्धत्वात् सिद्धोपायमिमं विदुः ॥**
**भक्तिप्रपत्तिप्रमुखं तद्वशीकारकारणम्।**
**तत्तत्फलार्थिसाध्यत्वात् साध्योपायं विदुर्बुधाः ॥**
**साध्योपायोत्तरङ्गेण सिद्धोपायस्य शेषिणः।**
**लीलाप्रवाहः कारुण्यप्रवाहेण निरुध्यते ॥**
**तेनैव सर्वे लीयन्ते सिकतासेतुबन्धवत्।**
**स्वतन्त्रस्यापि संकल्पाः स्वकैङ्कर्यनिरोधकाः ॥**
**प्रसादनस्योपायत्वे शास्त्रीयेऽपि फलं प्रति।**
**कर्तृत्वाव्यवधानाद्यैः सिद्धोपायप्रधानता ॥**
**स्वतन्त्रन्यासनिष्ठानां सिद्धोपाये विभौ स्थितिः।**
**क्षणात् स्वयत्नविरतिव्यक्त्यै प्रोक्ता विशेषतः ॥**
**अतो यदर्थं स्वभरः सिद्धोपाये निवेशितः।**
**तदर्थं शान्तयत्नोऽसौ सिद्धोपायं प्रतीक्षते ॥**

प्रपत्तेर्लक्षणे मन्त्रे विधौ वाक्यान्तरेषु च ।
भाष्यादौ संप्रदाये चोपायत्वं ब्रह्मणि स्थितम् ॥
पूर्वसिद्धस्य देशादेर्धर्मत्वं यद्वदिष्यते ।
एवं तत्त्वविदः प्राहुः कृष्णं धर्मं सनातनम् ॥

(रहस्यत्रये सिद्धोपायानुसंधानप्रदेशनिरूपणम्)

अयं सिद्धोपायो रहस्यत्रये प्रथमाक्षरादिस्थानेष्वनुसन्धेयः ॥

(अधिकारार्थसंग्राहिका गाथा)

स्थिरः सर्वविधबन्धुः अज्ञाननाशककृपासमुद्रः स्वसंकल्पात् तत्सर्वं धृत्वा वर्धमानोऽद्वितीयः स्वामी मधुरामृतजामृतरूपया (श्रिया) अनुकम्पमानः श्रीनारायण एव नित्यं हढं शरणमनन्योपायतया वृणुताम् ॥

विश्राम्यद्भिरुपर्युपर्यपि दिवा नक्तं बहिर्दर्शनैः
अस्मद्देशिकसंप्रदायरहितैरद्यापि नालक्षितः ।
स्वप्राप्तेः स्वयमेव साधनतया जोघुष्यमाणः श्रुतौ
सत्त्वस्थेषु भजेत सन्निधिमसौ शान्तावधिः शेवधिः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
सिद्धोपायशोधनाधिकारः त्रयोविंशः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

---

6 मन्नुमनैत्तुरवाय् मरुल् माट्रूरलाड़ियुमाय्
तन्निनैवालनैत्तुंतरित्तोङ्गुंतनियिरैयाय्
इन्नमुदत्तमुदालिरङ्गुन्तिरुनारणने
मन्नियवन् शरण् मट्रोर् पट्रिन्रि वारिप्पवर्के.

श्रीः

## साध्योपायशोधनाधिकारः

यथाधिकरणं प्रभुर्यजनदानहोमार्चना-
भरन्यसनभावनाप्रभृतिभिः समाराधितः ।
फलं दिशति देहिनामिति हि संप्रदायस्थितिः
श्रुतिस्मृतिगुरूक्तिभिर्नयवतीभिराभाति नः ॥

इत्थं **सर्वज्ञस्य सर्वशक्तेः परमकारुणिकस्य सर्वशेषिणः सपत्नीकस्य सर्वलोकशरण्यस्य सिद्धोपायविशेषस्य** विशदं वेदनेऽपि, "आरोग्यमिन्द्रियौत्कण्यमैश्वर्यं शत्रुशालिता । वियोगो बान्धवैरायुः किं तत् येनात्र तुष्यति ॥" इत्युक्तरीत्या अविवेकिना **गुणतया** प्रतीतेष्वपि **दोषतादर्शनेन संसारवैराग्ये पूर्णे** जातेऽपि, "परमात्मनि यो रक्तः" इत्युक्तरीत्या **प्राप्यरुचौ** जातायामपि, "महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया । प्राप्तुं दुःखोदधेः पारं त्वर यावन्न भिद्यते ॥" इत्युक्तरीत्या **त्वरायामुत्पन्नायामपि अनाद्यनुवृत्ताज्ञातिलङ्घनाद्धेतोर्जातस्य बन्धकस्य भगवन्निग्रहस्य प्रशमन**त्वेन "मामेकं शरणं व्रज" इति **विधिवाक्येन**, "प्रपद्ये" इत्य**नुष्ठानवाक्येन** च प्रतिपादितस्य **साध्योपायविशेषस्य** यथावद्वेदनाभावे, **सिद्धोपायभूतस्य सर्वेश्वरस्य वशीकरणार्थ**मुपायो नास्ति । अतस्तस्याधिकारे, स्वरूपे, परिकरेषु चोपनमतो व्यामोहान् शमयामः ।

(प्रपत्तेः सर्वाधिकारकत्वाभावशङ्कानिरासः)

इयं प्रपत्तिरपि कश्चिद्वैदिकधर्मः किल। इयमपि कश्चित् यागविशेष इति किल न्यासविद्यायामाम्नायते । अत इयं सर्वाधिकारा कथं भवितुमर्हतीति केचिद्विचारयन्ति। इदम् , सर्वेश्वरं सर्वस्य शरणमित्यामनन्त्याः श्वेताश्वतरश्रुतेर्बलात् परिहृतम् । अयमर्थः "सर्वलोकशरण्याय" "सर्वयोग्यमनायासमप्रमादमनूपमम् । प्रपन्नार्तिहरं विष्णुं शरणं गन्तुमर्हसि" इत्याद्युपबृंहणैः, "त्रयाणां क्षत्रियादीनाम् "इत्यारभ्य शूद्रपर्यन्तान् वर्णान् उपादाय "प्रपन्नानां च तत्वतः" इति प्रतिपादयता श्रीसात्त्वतवचनेन, "कुयोनिष्वपि संजातो यः सकृच्छरणं गतः । तं मातापितृहन्तारमपि पाति भवार्तिहा ॥" इति प्रतिपादयता सनत्कुमारसंहितावचनेन च दृढीकृतः । अत्रोपासनं त्रैवर्णिकाधिकारिकमित्यपशूद्राधिकरणे समर्थितत्वेऽपि वैदिकानां सत्यवचनादीनामिव प्रपत्तेरपि सामान्यधर्मत्वात् यथाधिकारं वैदिकमन्त्रेण तान्त्रिकमन्त्रेण वा सर्वेषां प्रपत्त्यनुष्ठानस्य न विरोधः । काकादीनपि प्रपन्नत्वेन शास्त्रेषु शृणुमः । "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥" इति भगवदाश्रयणमात्रं सर्वसाधारण्येन शरण्य एवानुजग्राह ।

उपासनस्यापि---प्रारम्भस्त्रैवर्णिकशरीर एवेति सत्यपि अवसानं सर्वस्मिन् शरीरे घटत इत्येतत् "धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासात् जुगुप्सिते । वर्णावरत्वे संप्राप्ताः संसिद्धिं श्रमणी यथा ॥" इति

श्रीविष्णुधर्मे प्रत्यपादि । इत्थमुपासनस्य त्रैवर्णिकमात्रारम्भणीयत्ववत् प्रपत्तौ केनचिन्नियामकेन सामान्यवचनसंकोचस्याभावाद्विशेषवचनप्राबल्याच्चेदं प्रपदनं सर्वेषां योग्यम् । अत एवास्य विशिष्यापेक्षितमधिकारांशं पूर्वमेवावोचाम ।

अतस्त्रैवर्णिकत्वादे र्भावोऽभावोऽपि कस्य चित् ।
नाधिकारः प्रपत्तेः स्यात् आकिञ्चन्यमनाश्रितः ॥

(स्वोक्तार्थस्य सांप्रदायिकत्वम्)

अयमर्थः, कुलयोर्द्वयोरेकस्मिन्नपि न जातोऽस्मि'' इति गाथायाम्, ''जनित्वाऽहं वंशे'' इति श्लोके च द्रष्टव्यः । अतः शरण्यशरणागतिज्ञानमाकिञ्चन्यादिकं च प्राप्तवतां सर्वजातीयानामपि प्रपत्त्यधिकारः सिद्धः ॥

(प्रपत्तिस्वरूपविषयव्यामोहनिवर्तनप्रारम्भः तत्र)
विश्वासस्याङ्गित्वप्रतिपादकवचनतात्पर्यम्)

अस्योपायस्वरूपस्य विषये ''नारायणं सलक्ष्मीकं प्राप्तुं तच्चरणद्वयम् । उपाय इति विश्वासो द्वयार्थः शरणागतिः'' इत्यभियुक्तवचनमधिकारकोटावङ्गकोटौ च निविष्टस्य विश्वासस्य प्राधान्यख्यापनार्थमित्येव ग्राह्यम् ।

तथैव ''प्रपत्तिर्विश्वासः । सकृत् प्रार्थनामात्रेणापेक्षितं दास्यतीति विश्वासपूर्वं प्रार्थनमिति यावत्'' इति वाक्यमपि प्राधान्यविवक्षया प्रथमतो विश्वासं प्रतिपाद्य, ''अनन्यसाध्ये'' इति भरतमुनि-

---

कुलङ्गलायवीरिरण्डि लोन्रिलुं पिरन्दिलेन्

प्रणीतलक्षणवाक्यानुसारेण विश्वासपूर्वं प्रार्थनमिति निष्कर्षः । इदं वाक्यमपि, आत्मनिक्षेपोऽङ्गी, इतराण्यङ्गानीति प्रतिपादयद्भिः, "न्यासः पञ्चाङ्गसंयुतः" इत्यादिवचनैः प्रार्थनाया अप्यङ्गत्वात्, "रक्षापेक्षां प्रतीक्षते" इत्युक्तरीत्या ईश्वरोऽपेक्षामात्रसापेक्षोऽस्तीति अस्याङ्गस्य प्राधान्यविवक्षया प्रयुक्तम् ।

लघुगद्ये विश्वासपूर्वकप्रार्थनां कृत्वा "नमोऽस्तु ते" इति निगमनात् उपायवरणशब्दसामर्थ्याच्च निक्षेपः सिद्धः । नमसः आत्मनिक्षेपपरत्वम्, "नमस्कारात्मकं यस्मै विधायात्मनिवेदनम्" इत्यादिषु प्रसिद्धम् । श्रीवैकुण्ठगद्ये प्रार्थनापूर्वकात्मनिक्षेपः कण्ठोक्तः एव ।

(निक्षेपरूपाङ्गिविधायकवचनप्रदर्शनम्)

अतः "अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् ।", "आत्मात्मीयभरन्यासः" इत्यादिषु अङ्गिविधानम् । अन्यथा "षड्विधा शरणागतिः" इत्यस्मिन् वाक्ये आपातप्रतीतिमाश्रित्य "स्नानं सप्तविधं स्मृतम्" इत्याद्युक्तस्नानादिभेदवत् पृथक् पृथक् प्रपत्तिविशेषाः प्रसज्येरन् । "प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम्" इत्यादिवचनबलात् नियमनेऽभिमते, तथैव प्रार्थनाविश्वासादीनां प्रपत्तित्वप्रतिपादकानां वचनानां नियमनपूर्वकं "न्यासः पञ्चाङ्गसंयुतः" इत्यादिरीत्या, निक्षेप एक एवाङ्गी, इतराण्यङ्गानीति मन्तुं युक्तम् । भूयसां न्यायस्य दर्शनेऽपि सात्यकितन्त्रलक्ष्मीतन्त्राहिर्बुध्न्यसंहितादिषु प्रपत्त्यध्यायेषु निक्षेपः अङ्गीत्येव प्रसिद्धः ।

"त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः । शरणागतिरित्युक्ता" इति वचनमपि तत्प्रकरणे प्राधान्येन प्रतिपादितभरन्यासपर्यन्त-मित्येतत् अवधारणसहकृतोपायशब्देन व्यञ्जितम् ।

(विश्वासवाचिधातूनामात्मनिक्षेपपर्यन्तत्वनिरूपणम्)

तत्तद्विवक्षाविशेषैरङ्गानां प्राधान्येन प्रतिपादनं लोकेऽपि वर्तते । आलम्भशब्दस्य यागपर्यन्तत्ववत् "शरणं व्रज" इत्यादिषु धातुभिःन्यासनिक्षेपत्यागादिशब्दोक्तात्मयागप्रतिपादनं वैदिक-मर्यादाया अप्यनुगुणम् । यागो नाम—अमुकदेवतार्थममुकहवि-रित्येवंरूपः कश्चिद्बुद्धिविशेषः । इत्थं मदात्मरूपं स्वादुतमं हविः श्रीमन्नारायणार्थमित्येवंभूतः कश्चिद्बुद्धिविशेषोऽत्राऽऽत्मयागः । अस्मिन् आत्मनिक्षेपे सर्वफलार्थिनां साधारणकर्तव्यस्वरूपं रक्षाभरन्यास इत्येतमर्थं पूर्वमेवावोचाम ॥

हविस्समर्पणादत्र प्रयोगविधिशक्तितः ।
आत्मरक्षाभरन्यासोऽकिञ्चनस्यातिरिच्यते ।
अतः श्रीराममिश्राद्यैर्भरन्यासविवक्षया ।
स्वप्रवृत्तिनिवृत्त्यंशः प्रपत्तिरिति लक्षितः ॥

अकृते तु भरन्यासे रक्षापेक्षणमात्रतः ।
पश्चात् स्वयत्नविरतिर्न प्रसिध्यति लोकवत् ॥

आकिञ्चन्यभरन्यासोपायत्वप्रार्थनात्मनाम् ।
त्रयाणां सौहृदं सूक्ष्मं यः पश्यति स पश्यति ॥

इत्थमङ्गपञ्चकसंपन्न आत्मरक्षाभरन्यास एव प्रपत्ति-शास्त्रेषु सर्वेषु प्रधानविधेय इति श्रीविष्णुचित्त-वादिहंसाम्बुवाह-वरदाचार्यादयः सञ्जगृहुः ॥

(शेषत्वज्ञानमात्रस्य प्रपत्तित्ववादव्युदासः)

अत्र केचित्—शास्त्रार्थतत्त्वस्य सम्यग्ज्ञानकाले शेषत्वानुसंधानं कृतवान् किल । "स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि । आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर ॥" इति वचनमपि, '**परमपुरुषार्थतदुपायौ** अपेक्षसे चेत्, त्वं दासः, ईश्वरः स्वामीत्येवम्भावः स्वभावसिद्ध इति तत्त्वविषये विशदः ज्ञानवान् सन् वर्तस्व' इत्येवंपरं किल । एवंसति इदानीमात्मसमर्पणमिति विधेयं किं भवतीत्याचक्षते । इदमपि **वाक्यजन्यज्ञानमात्रेण मोक्ष** इतिवत् अनादरणीयम् ।

जितकौस्तुभचौर्यस्य सम्राजः सर्वपाप्मनाम् ।
शिष्टं ह्यात्मापहारस्य निष्कृतिः स्वभरार्पणम् ॥
परशेषत्वधीमात्रमधिकारिविशेषकम् ।
पश्चादात्मापहारस्य निरोधाय च कल्पते ॥

शेषत्वादिविशिष्टमात्मतत्त्वं शास्त्रेण यथावद्विदितवतो-ऽधिकारविशेषेण परिकरविशेषेण फलसंकल्पविशेषेण च सहितः शेषत्वप्रतिसंधानगर्भः स्वात्मरक्षाभरन्यासो हि अनाद्यपराध-मूलनिग्रहनिवृत्तेरुपायत्वेन विधीयमानमात्मसमर्पणम् ।

तत्त्वज्ञानान्मोक्ष इत्येतदपि किञ्चिदुपायानुष्ठानं पुरस्कार्येत्य-यमर्थः "भजस्व माम्" "मामेकं शरणं व्रज" इत्यादिविधिबलप्राप्तः ॥

ज्ञानान्मोक्षोपदेशे हि तत्पूर्वोपासनादिना ।
उपासनादिरूपाद्वा ज्ञानान्मोक्षो विवक्षितः ॥

शास्त्रजन्यं शेषत्वज्ञानमात्रं निवृत्तिधर्माणां न्यासोपासनादीनां सर्वेषां साधारणं भवति । शेषवृत्तिरूपकैङ्कर्यस्यैव मुमुक्षोः पुरुषार्थकाष्ठत्वात् शेषत्वज्ञानं विना मोक्षोपायानुष्ठानं न घटेत किल । शेषत्वज्ञानं विना मोक्षार्थं विहितानां धर्माणामनुष्ठानेऽपि त एव धर्माः स्वयं शेषत्वज्ञानमुत्पाद्य पूर्णानुष्ठानमुखेन किल मोक्षहेतवो भवन्ति । अतोऽत्र विधेयं समर्पणं न शेषत्वज्ञानमात्रम् ॥ किमन्यदिति चेत्—शेषत्वज्ञानादियुक्तः स्वरक्षाभरन्यासः ।

वाक्यमात्रेण सिद्धत्वात् सिद्धोपाय इहोच्यते ।
प्रपत्तिरिति वादोऽपि विधिनाऽत्र विहन्यते ॥

(चरमश्लोकस्य विधितात्पर्यकत्वाभावशङ्कानिरासः)

"शरणं व्रज" इत्येतत् इममर्थं जानीहीत्येतावन्मात्रं सत् कर्तव्योपायविधिपरतां विनैव किं न स्यादिति चेत्–इदं शब्दस्वारस्यविरुद्धम् "प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम्" इत्यादिभिः सपरिकरस्फुटतरप्रपत्तिविधिभिश्च विरुध्येत । ईश्वरो मोक्षोपाय इत्येतावन्मात्रस्यात्र वक्तव्यत्वे मोक्षाधिकारिणो विधेयान्तरे चासति इदं प्रस्तुतभक्तियोगापेक्षिततत्त्वोपदेशमात्रं संपद्येत ।

(स्वयत्ननिवृत्तिरेव प्रपत्तित्वमिति पक्षस्य निरासः)

अत्र तत्त्वज्ञानवतः स्वरक्षणार्थस्वव्यापारनिवृत्तिरेव प्रपत्तिरिति सर्वधर्मस्वरूपत्यागमात्रं साध्यत्वेन विधीयत इति वदतां

निवृत्तिरूपत्वेऽपि साध्यत्वेन विहितस्य सर्वधर्मस्वरूपत्यागस्यैव स्वरक्षणार्थस्वव्यापारत्वात् स्ववचनविरोधः, साङ्गप्रपत्ति-विधायकवाक्यविरोधश्च प्रसज्यते ।

प्रपत्तेः साधनत्वस्य सिद्धसाधनसहकारित्वस्य वाऽऽश्रयणं सिद्धोपायस्येश्वरस्य एकत्वं सिद्धत्वं परमचेतनत्वं परमकारुणिकत्वं सर्वशक्तित्वं निरपेक्षत्वमित्यादि स्वभावविशेषविरुद्धं भवेत् इत्येते प्रसङ्गाः श्रुतिस्मृतिविरोध-व्याप्तिशून्यत्वादिदोषैस्तर्काभासाः । एतेषु सत्तर्कत्वाभिमाने, उपासनेऽभ्युपगतेषु साधनभावादिष्वपि एते प्रसङ्गाः प्रवर्तेरन् ॥ उपासनमपि साधनं नेति चेत्, "सर्वधर्मान् परित्यज्य" इत्यत्रोपासनस्यापि धर्मशब्दार्थत्वेन व्याख्यानात् स्ववचनविरोधः स्यात् ॥ गर्वदमनार्थमनपेक्षितभारस्यारोपणेनान्यपरात् शास्त्रात् जातयाऽर्जुनबुद्ध्या धर्मत्वेन प्रतीतत्वात् "सर्वधर्मान्" इत्यनुवाद इति चेत्—"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यत् योगेनात्मदर्शनम् ॥", "सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः", "न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम्" इत्यादिभिः परमधर्मत्वेन प्रसिद्धानां निवृत्तिधर्माणां धर्मत्वाभावे प्रतिपादिते कैमुतिकन्यायेन प्रवृत्तिधर्माणामपि धर्मत्वाभावप्रसङ्गेन सर्वशास्त्राणां प्रामाण्याभावप्रसङ्गात् परबाह्यकुदृष्टिपक्षेषु प्रवेशः स्यात् ।

(प्रपत्तेः साधनत्वे चरमश्लोकविरोधशङ्कापरिहारः)

अथापि उपासनादेरिव शरणवरणस्यापि धर्मशब्दवाच्यत्वादिदमपि साधनत्ववेषेण त्याज्यं किल । अतः प्रपत्तेः,

साधनत्वस्य सिद्धसाधनसहकारित्वस्य वाऽभ्युपगमः एतद्वचनविरुद्धः किलेति चेत्--अत्र **साक्षात्साधनत्वबुद्धेस्त्याज्यत्वे** विवक्षिते **भक्तियोगादिष्वपि** तत् तुल्यम् । **प्रसादनत्ववेषेणापि धर्मत्वमस्य** त्याज्यमिति चेत्—**सर्वशब्दसंकोचाप्रसङ्गार्थमेव**, "कृष्णं धर्मं सनातनम्" इत्याद्युक्तरीत्या **धर्मभूते सिद्धोपायेऽपि साधनत्वबुद्धिस्त्याज्या** प्रसज्येत ॥ एतद्वाक्यप्रतिपाद्यधर्मव्यतिरिक्ताः किल त्याज्या भवन्तीति चेत्—इदमत्र **विहितायां शरणागतावपि** तुल्यम् ।

(भक्तिप्रपत्त्योः सिद्धोपायोपकारकत्वप्रकारः)

**उपासनादिवत्** स्वस्योत्पादकरूपेण, **वर्धकरूपेण**, **सहकारिरूपेण**, द्वाररूपेण वा किमपि यथा स्वेन नापेक्ष्येत तथा **नित्यस्योपचयापचयरहितस्य सर्वदापरिपूर्णस्य सहजकारुण्यादिमतः** संकल्पे सति द्वारनिरपेक्षकार्यजननौपयिकसत्यसंकल्पवतः सतः **सिद्धोपायस्य भक्तिप्रपत्ती** केनाकारेणोप**कारिके** भवत इति चेत्—इमे **अनाद्यपचारपरम्परयोत्पन्नस्य संसारहेतुभूतस्य** सतो **निग्रहस्य शमनेनो**-पकुरुतः । एते **फलान्तरोपायत्वदशायां ज्योतिष्टोमादिवत् तदनुगुणप्रीतिविशेषमुत्पाद्य** तन्मुखेनोपकारिके भवतः ।

(सिद्धोपायकृत्यनिरूपणम्)

**मुमुक्षोः साध्योपायरूपव्याजमात्रेण शान्तनिग्रहः सिद्धोपायो निग्रहफलानि ज्ञानसंकोचादीनि** विनिवर्त्य **परिपूर्णकैङ्कर्यपर्यन्तफलं** प्रदाय तद् यावदात्मभावि यथा स्यात् तथोपकरोति ।

अतो **मुमुक्षोः सर्वानिष्टनिवृत्तिपूर्विका** परिपूर्णकैङ्कर्य-पर्यन्ता **फलपरम्परा** सर्वाऽपि, सिद्धोपायकार्या भवतीति, प्रसादनात् साध्योपायादुपनमतीति च प्रतिपादयन्ती **प्रमाणे** द्वे अपि **सुसंगते** ॥

(प्रपत्तेरविधेयत्वशङ्कापरिहारः)

अथाप्ययं **प्रपत्तिरूप उपायविशेषः** किं **शास्त्रेण** विधातव्यः ? लोके स्वस्य रक्षणविषये उपायशून्यो दुःख्यन् कश्चित् यथा तदात्वे **सन्निहितं रक्षणसमर्थ**माश्रयति, तथा स्वस्वरूपे ईश्वरस्वरूपे च **सिद्धपरशास्त्रेण** विदिते सति स्वयमेव तं शरणत्वेन किं नाश्रयेत् ? अतोऽकिञ्चनस्य **भक्तिस्थाने प्रपत्ति**र्न विधातव्येति केचिदाचक्षते । अयमपि **औचित्यमूलोऽतिवादः** । कथमिति चेत्—लोके केन चित् कस्यचिदाश्रयणे प्राप्ते, अनेन प्रकारेणाश्रयणे कृते अयं दयेतेत्येतमर्थं केनचित् प्रमाणेन विदित्वा यथाऽऽश्रयणं क्रियते, तथाऽत्रापि ईश्वरस्यानेन प्रकारेणानेनाधिकारिणा आश्रयणे क्रियमाणे एतमीश्वरो रक्षेत् इत्यर्थस्य ज्ञानार्थं **कर्तव्यपरशास्त्रं** विनाऽन्यत किमपि **प्रमाणं** नास्ति । अस्माभिराश्रयणे कृते रक्षेदित्य**नुमानेन** निर्णीयाश्रयणे क्रियमाणे, ईश्वरतत्त्वज्ञानवद्भिः सर्वैरेवमनुष्ठीयेतेति **उपासनविधायकशास्त्राणि निरर्थकानि** स्युः । **समर्थः उपासनादि** कुर्यात्; तत्रासमर्थः **प्रपत्तिं** कुर्यादिति **विशिष्य** नियमनमनुमानेनाशक्यम् । इतरेषूपायेषु सामर्थ्याभावे सति, तत्स्थाने **प्रपत्तिं** कुर्यादिति **शास्त्रेणाविधाने**, पूर्वं विहितस्योपायस्यानर्हत्वात् तत्फलाप्राप्तिरेव स्यात् । कथमिति चेत्—**लोके** राजसेवादीनां तत्फलानां च दृष्टत्वेऽपि, **मालाकरण-**

दीपारोपणस्तुतिनमस्कारादीनां शास्त्रनैरपेक्ष्येणानुष्ठानेऽपचार-प्रसङ्गात् सपरिकरनियमानां भगवत्सेवादिप्रकाराणां तत्फलानां च नियतता शास्त्रेणैव यथा विज्ञायते, तथाऽत्रापि **लोके प्रपत्ते-स्तत्फलानां** च दृष्टत्वेऽपि **सदाचार्योपदेशापेक्षमन्त्रविशेषादि-सहितप्रपत्तेः फलविशेषाणां** च **साध्यसाधनभावस्य** शास्त्रवेद्यत्वात् तत्तत्फलार्थं **सेवाविशेषाणां विधानवत्** प्रपत्तिरपि विधीयते । अन्यथा राजसेवावत् भगवत्सेवाऽप्यविधेया स्यात् । **प्रपत्तेः सदा-चार्योपदेशपूर्वकमन्त्रग्रहणादयोऽप्यनपेक्षिताः** प्रसज्येरन् । **मन्त्राद्यनर्हाणां शरण्यविशेषफलविशेषानुबन्धिनोऽन्यूनाधिक-कर्तव्यविशेषस्याध्यवसानार्थमनन्यथासिद्धमनुमानमलभ्यम्** । अतः **सपरिकरसेवाविशेषाणामिव सपरिकरभरसमर्पणस्याप्यत्र** विधेयत्वे न कश्चिद्दोषः ।

(उपासनादीनां स्वरूपविरुद्धत्वशङ्कापरिहारः)

इत्थं यथाधिकारमेषु शास्त्रेण विहितेष्वपि, उपासनादीनि स्वरूपविरुद्धानीति केचिदाचक्षते । अयमपि प्रपत्तिस्तुत्यर्थं कृतोऽतिवाद इत्येवमेव भवति । कथमिति चेत्—

(1) नित्यस्या(त्वादा)त्मस्वरूपस्य, इमानि नाशकानि सन्ति स्वरूपविरुद्धानीति वक्तुमशक्यम् ।

(2) प्रपत्त्यनुष्ठाने कैङ्कर्ये चेव, भक्त्यादिष्वपि "कर्ता शास्त्रार्थ-वत्त्वात्", "परात्तु तच्छ्रुतेः" इत्युक्तरीत्या भगवदधीनकर्तृत्वस्य

सत्त्वात्, आत्मस्वरूपस्यात्यन्तनिर्व्यापारत्वोक्तौ सत्त्वलक्षणस्यार्थक्रियाकारित्वस्याभावेन तुच्छत्वप्रसङ्गात्, ज्ञानचिकीर्षाप्रयत्नाश्रयत्वरूपं कर्तृत्वं निषिध्य आत्मनः सन्निधिमात्रमेव व्यापार इत्युक्तौ भोक्तृत्वादेरप्यभावप्रसङ्गेन अस्यात्मनः संसारस्यापि मिथ्यात्वेन मोक्षोपायनैरपेक्ष्यादिप्रसङ्गापाताच्च, सांख्यादिवचनानुसारं स्वरूपे कर्तृत्वाभावादुपासनादीनि स्वरूपविरुद्धानीति वक्तुमशक्यम्। "अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठति। कर्मी कर्मानुसृत्यान्यो न प्राप्यमधिगच्छति॥" इति वचनमपि शास्त्रचोदितोपायानां न नैरर्थक्यप्रतिपादनपरम्; किन्तु पूर्वानुष्ठितकर्मविशेषाणां फलविशेषप्रतिपादकमेव।

(3) मोक्षप्रतिकूलरागाद्युपाधिमूलककाम्यनिषिद्धवद् बन्धकत्वाभावात् मोक्षार्थिनं प्रत्येव विहितत्वाच्च, उपासनादीनां शास्त्रमुखेनानर्थावहत्वरूपः स्वरूपविरोधो वक्तुमशक्यः।

अतः आत्मस्वरूपविषये उपासनादीनां नाशकत्वासंभावितत्वानर्थावहत्वाभावात् केनापि प्रकारेण स्वरूपविरोधप्रसङ्गो नास्ति।

(वर्णाश्रमादिनिबन्धनत्वेन स्वरूपविरुद्धत्वशङ्कापरिहारः)

(4) अथाप्यात्मनो देहादिविलक्षणत्वात् स्वरूपे वर्णाश्रमादिकं नास्तीति प्रबुद्धस्य 'ब्राह्मणोऽहम्' 'क्षत्रियोऽहम्' इत्येवमभिमानपूर्वकं कर्तव्यानां वर्णाश्रमादिधर्माणां तत्संबद्धानामुपायान्तराणामनुष्ठेयत्वाभावादेतद्वर्णाश्रमादिनिबन्धनधर्माः स्वरूपविरुद्धा इत्युक्तौ

को दोष इति चेत्—इदमप्यनुपपन्नम् । कथमिति चेत्—स्वरूपे ब्राह्मणत्वादीनि न सन्तीति प्रबुद्धत्वेऽपि कर्मविशेषाद्धेतोः ब्राह्मणत्वादिविशिष्टशरीरेण सह संबद्धतयाऽवस्थानादेतच्छरीरसंबन्धनिबन्धनक्षुत्पिपासादिपरिहारकरणन्यायेन यावच्छरीरत्यागं तत्तद्वर्णाश्रमादीनां स्वशक्त्यनुरूपमनिष्टनिवृत्तीष्टप्राप्त्युद्देशेन शास्त्रविहितानां धर्माणां त्यागो न युज्यते। अत इमान् धर्मान् देहात्मविवेकाद्धेतोः स्वरूपविरुद्धान् आपाद्य एषां त्याज्यता वक्तुं न युज्यते । देहात्मविवेकवत एव पारलौकिकभोगसाधने धर्मेऽधिकार इति एषां धर्माणामनुष्ठानस्य स्वरूपे ब्राह्मण्यादिभ्रमो नाधिकारः; ब्राह्मण्यादिविशिष्टशरीरसंबन्ध एवाधिकारः । अतः सर्वधर्मानुष्ठानोपयुक्तप्रकृत्यात्मविवेकाद्धेतोरुपासनादीनां स्वरूपविरोधं न पश्यामः ।

(उपासनादेरहंकारगर्भत्वादिनिरासः)

(5) उपासनादयोऽहंकारादिगर्भा इत्येतत्तु शास्त्रानभिमतम् । एवन्त्वेऽपीदमारोपयामासुरित्येव भाव्यम् । कर्मोपार्जितकरणकलेबराद्युपाधीनवलम्ब्यानुष्ठेयत्वात् कर्मयोगादयो निरुपाधिकस्वरूपविरुद्धा इति वदतां स्वरूपज्ञान-द्वयश्रवणादयोऽपि मनः—प्रभृतिसापेक्षत्वात् तुल्यदोषाः ।

(उपासनादेः पारतन्त्र्यात्मक स्वरूपविरुद्धत्ववाद निरासः)

(6) अथापि शेषभूतत्वात् स्वेन स्वस्य रक्षणेऽप्राप्तस्य, अत्यन्तपरतन्त्रत्वात् स्वेन स्वस्य रक्षणेऽशक्तस्य च सतोऽस्य स्वरक्षणार्थं कर्तव्यत्वेन

कस्यचिदुपायस्य विधानम्, स एतत्साध्यत्वात् साध्योपाय इति नाम लभते इत्युक्तिश्च कथमुपपद्यते अतो ? **भक्तियोगादयः शेषत्वानुरूपत्वाभावात् स्वरूपस्यानिष्टावहा** इति, **अत्यन्तपारतन्त्र्यविरुद्धत्वादसंभाविता** इति च किं न वक्तुं युज्यते इति चेत्–इदं **सर्वमोक्षप्रसङ्गादिभिः** पूर्वमेव **परिहृतम्** । एतत्कृतयत्किञ्चिद्व्याजाप्रतीक्षया मुक्तत्वापादने अनादिकालान्मुक्तत्वापादनं प्रसज्येत । **ईश्वरेण केवलस्वातन्त्र्यादभिमतसमये** मुक्तत्वापादने **वैषम्यनैर्घृण्यादिदोषा अपि** प्रसज्यन्ते । **मोक्षोपायविधायकानां** शास्त्राणां सर्वेषां निरर्थकता च स्यात् । अतोऽनेन शेषत्वेनास्य व्यवस्थितविषयाश्रयणे औचित्यं स्वस्य रक्षणे औचित्यं च सिध्येत् ; अत्यन्तपारतन्त्र्येण चास्य तत्प्रत्तस्वातन्त्र्यवहनपूर्वं **तदभिमतोपायानामनुष्ठानं** फलप्राप्तये तद्धस्तप्रतीक्षणावश्यम्भावश्च सिध्येत् । इमे **शेषत्वपारतन्त्र्ये उभे अपि** **फलदशायां** तदभिमतकैङ्कर्यस्य तदाज्ञप्तपद्धत्या करणस्य हेतू भवतः । एते हेतूकृत्य **स्वरक्षणार्थस्वव्यापारो** न युज्यत इति वदताम्, स्वेन **यथाशास्त्रं भगवत्प्रीत्यादिफलमुद्दिश्यानुष्ठीयमाने कैङ्कर्ये, साध्यत्वेन विधीयमानायां प्रपत्तौ च स्वरूपविरोधबुद्ध्याऽधिकारो** न स्यात् । **वाक्यजन्यात् संबन्धज्ञानादिमात्रादतिरिक्तरूपेण** "शरणं व्रज" इति विधेयत्वात् साध्यभूतं प्रपत्तिस्वरूपमिति पूर्वमेवावोचाम । अतः **शेषभूतस्य परतन्त्रस्यास्य यथाधिकारं स्वरक्षणार्थस्वव्यापारकरणे न दोषः** ॥

(पारमैकान्त्यविरुद्धत्वरूपस्वरूपविरुद्धत्ववादनिरासः)

(7) अथाप्यनन्यार्हशेषभूतत्वेनात्मानं प्रतिबुध्य परमैकान्तिनः सतोऽस्य देवतान्तरद्वारकाः वर्णाश्रमधर्माः, तदितिकर्तव्यताकाः भक्तियोगादयश्च ऐकान्त्यविरुद्धाः किं न भवन्ति ? शुद्धयाजिनां हि परमैकान्तित्वं युज्यत इति चेत्—इदं भाष्यादिगतनिष्कर्षाज्ञाननिबन्धनं चोद्यम् । कथमिति चेत्—प्रतर्दनादिविद्यासु परमात्मा इन्द्रादिशरीरको मुमुक्षोरुपास्य इति निर्धारयामास । विद्याङ्गेषु वर्णाश्रमधर्मेष्वपि तत्तद्देवताशरीरकः सन् वर्तमानः परमत्मा आराध्य इति निश्चकर्ष । अतः स्वातन्त्र्येण कासांचिद्देवतानामाश्रयणे सति, फलान्तरकामनया स्वनित्यनैमित्तिकबहिर्भूतदेवतान्तरान्वये सति च परमैकान्तित्वं विरुद्ध्यते । फलान्तरसङ्गं विनैव परमात्मनो विशेषणत्वेन देवताः स्थापयित्वा अग्न्यादिशब्दान् विशेष्यपर्यन्ततयाऽनुसन्धाय, "साक्षादप्यविरोधं जैमिनिः" इति न्यायेनाग्नीन्द्रादिशब्दान् साक्षाद्भगवद्वाचकत्वेनानुसन्धाय च स्वधर्मानुष्ठाने क्रियमाणे विधिबलात् परमैकान्तित्वविरोधो न भवति ॥

(अभिचारादिवदनर्थावहत्वरूपस्वरूपविरुद्धत्ववादनिरासः)

(8) अथाप्यभिचारादिविधानशैल्या शास्त्रप्ररोचनादिष्वभिसंन्धिनाऽधिकारिविशेषे उपासनादिकं विहितमित्येतावदेव किल युक्तम् । मुमुक्षोः प्राप्यप्रापकयोरेकत्वात् प्राप्यानुरूप उपायः सर्वेश्वर एक एव । अत एव हि, "अथ पातकभीतस्त्वं सर्वभावेन भारत । विमुक्तान्य-

समारम्भो नारायणपरो भव" इति धर्मदेवता स्वपुत्रायोपदेशे उपासनादिकं प्राप्यविरोधीति मत्वा निनिन्देति चेत्—तदप्यत्यन्तानुपपन्नम् । कथमिति चेत्—अभिचारादीनि फलविशेषमूलकतया किलानर्थहेतवो भवन्ति । अत्र फलस्य मोक्षरूपत्वात् तन्मुखेनानर्थप्रसङ्गो नास्ति । एकाधिकारिविषये एकफलार्थं गुरुभूतं किमपि उपायत्वेन प्रदर्श्य लघुभूते कस्मिंश्चित् रुच्युत्पादनमित्येतत् विवक्षितविपरीतम् । अङ्गेऽङ्गिफलनिर्देशरूपं स्तुतिमात्रमिति किल तदा फलेत् । प्राप्यस्येदृशमनुरूपमित्यर्थस्य शास्त्रवेद्यत्वात् युक्तिमात्रेण प्राप्यविरोधो वक्तुं न युज्यते । आगमसिद्धेषु एकस्य विरुद्धतर्कैर्बाधने तुल्यन्यायेन सर्वशास्त्राणि, प्रपत्तिशास्त्रं च अप्रमाणानि स्युः । "अथ पातकभीतस्त्वम्" इत्यत्रापि पातकशब्देन उपासनादीनि निन्द्यन्ते इत्यत्र प्रमाणं नास्ति । अतो मुमुक्षोर्विहितत्वात् भक्तिप्रपत्ती द्वे अपि यथाधिकारं परिग्राह्ये ॥

(उपासनादेः शिष्टपरिग्रहविरुद्धत्ववादनिरासः)

(9) 'विहितत्वेऽपि आचार्यरुचिपरिगृहीतत्वाभावादतिथिसत्कारादिषु विहितगवालम्भादिवदुपासनादीनि शिष्टपरिग्रहविरुद्धत्वादनादरणीयानि न किम्' इति वचोऽपि न निरूपकवाक्यम् । सर्वाचार्यपरिग्रहाभावे किल, "अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु" इति त्याज्यता भवति । अत्र "तस्मै नमो मुनिवराय पराशराय" इत्येवं श्लाघ्यैः पराशरादिपूर्वाचार्यैरनुष्ठितत्वात् सर्वशिष्टबहिष्कारो वक्तुं न युज्यते ॥

(कलिकालाननुगुणत्ववादनिरासः)

(10) इत्थं-युगान्तरेष्वेषां धर्मत्वेऽपि कलियुगे यथोक्तपरमात्मोपासनादीनामधिकारिदौर्लभ्यात् इमान्यस्य कालस्याननुगुणानि ; अत एव किल, "कलौ संकीर्त्य केशवम्" इति, "कलेर्दोषनिधेः राजन् अस्ति ह्येको महान् गुणः । कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥" इत्युच्यते—इत्यपि न युक्तम् । "कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे । यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः ॥" इत्युक्तरीत्या अस्मिन् कालेऽपि उपासनादीनामधिकारिणः स्वयंप्रयोजनयोगनिष्ठपूर्वाचार्यवत् संभाविताः किल । अन्यथा संकीर्तनव्यतिरिक्तायाः प्रपत्तेरपि, "किं नु तस्य च मन्त्रस्य कर्मणः कमलासन । न लभ्यतेऽधिकारी वा श्रोतुकामोऽपि वा नरः ॥" इत्याद्युक्तरीत्या महाविश्वासादियुक्तानामधिकारिणां दौर्लभ्यात् तत्रापि अयं प्रसङ्गः प्रवर्तेत ।

(उपासनादेः स्वाधिकारविरोधसमर्थनम्)

अतः उपासनादिष्वन्यस्य कस्यचिद्विरोधस्याभावात् यथा-शास्त्रमातुरादीनामवगाहनादीनीव इमानि, "अकिञ्चनोऽनन्यगतिः" इति वर्तमानस्याधिकारिणः स्वाधिकारविरुद्धानीति वक्तुं युक्तम् । इममधिकारविरोधमज्ञात्वा उपासनादिषु प्रवर्तमानं प्रति, "नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते" इत्युक्तम् । अत इमान्युपासनादीनि अधिकार्यन्तरस्य यथाधिकारमनुगुणानि ॥

(सुकरत्वादिना प्रपत्तेराधिक्यम्)

तेषु सामर्थ्याभावात् विलम्बाक्षमत्वाभावाद्वा इमां प्रपत्तिं स्वतन्त्रोपायत्वेन परिगृहीतवन्तम् — "कृतयागः" इति "कृतकृत्यः" इति "अनुष्ठितक्रतुशतः" इति चोक्त्वा, अस्य मरणान्तं प्रवर्तमानान् व्यापारान् अवभृथपर्यन्तकर्तव्यकलापत्वेन स्तुत्वा च, क्रत्वन्तरानुष्ठानं कृतवतां पाश्चात्यनित्यनैमित्तिकवत् अस्य स्वतन्त्रविधितो वर्णाश्रमधर्मेषु प्रवर्तमानेष्वपि अनुष्ठितात्मयागफलार्थं कर्तव्यान्तरनिरपेक्षोऽयमिति च दिव्यसूरयो महर्षयो भगवच्छास्त्राणि वेदाश्च घोषयन्ति । अतः, "तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः । कर्मिभ्यश्चाधिको योगी तस्मात् योगी भवार्जुन ॥" इत्यादिभिः प्रवृत्तिधर्मेभ्यो निवृत्तिधर्मा यथा श्रेष्ठाः (उत्कृष्टाः), तेष्वपि आत्मविषयकयोगो यथा श्रेष्ठः, आत्मविषययोगापेक्षया "योगिनामपि सर्वेषाम्" इत्युक्तरीत्या वसुदेवनन्दनविषयो योगो यथा श्रेष्ठः, तथा परमात्मविषयविद्याविशेषेभ्यः सर्वेभ्यो न्यासनिक्षेपादिशब्दोक्तो विद्याविशेष एव सुकरत्वसकृत्कर्तव्यत्वशीघ्रफलप्रदत्वादिभिः श्रेष्ठतमः ।

(भक्तितः प्रपत्तेः श्रैष्ठ्योपपादनम्)

न्यासविद्यायां कण्ठोक्तममुमर्थं, "तेषां तु तपसां न्यासमतिरिक्तं तपः श्रुतम्", "सत्कर्मनिरताः शुद्धाः सांख्ययोगविदस्तथा । नार्हन्ति

शरणस्यस्य कलां कोटितमीमपि ॥" इति भगवच्छास्त्रमुपबृंहयामास । अवगाहनादिषु सामर्थ्यहीनस्य "मानसं विष्णुचिन्तनम्" इति भगवच्चिन्तनस्य स्नानत्वेन विधाने तत् स्नानान्तरसाध्यां शुद्धिमुत्पाद्य पापान्तराणि च प्रशमय्य तदानीमेव भगवदनुभवरसं च यथोत्पादयति, तथोपासनादिष्वसमर्थं प्रति प्रपत्तेर्विधाने इयं प्रपत्तिरेव तत्प्रदेयानि फलानि, तान्यपि च प्रदातुं प्रभवन्ती अकिञ्चनस्योत्तारिका तदपेक्षितकाले फलाविनाभावं च वहतीत्यधिकप्रभावा भवति ॥

(अज्ञानां संभावितस्वभावत्ववादनिरासः)

इत्थमस्योपायस्याधिकारे स्वरूपे चोपनमतो व्यामोहान् अशीशमाम । अथ परिकरेषु जायमानान् व्यामोहान् शमयामः—

अस्योपायस्यानुकूल्यसंकल्पादयः कुतोऽपेक्षिताः ? "आर्तो वा यदि वा दृप्तः" इति, "मित्रभावेन संप्राप्तं न त्यजेयं कथं चन । दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् ॥" इति, "यदि वा रावणः स्वयम्" इति च वदन् रिपूणामपि वत्सलः शरण्यः शरणागतस्य दोषान् किमु पश्येत् ? अनालोचितविशेषाशेषलोकशरण्य इति किल पूर्वेषां वचः । अत एते संभावितस्वभावा इत्येव हि (युक्तम्) इति केचिदाचक्षते । अस्य वचनस्य-प्रपत्त्युत्तरकालमानुकूल्यादीनामननुवृत्तावपि प्रतिसमाधानजननात् प्रपत्तिफलमन्यूनं भवतीति तात्पर्यं सुग्रहम् । अन्यथेदम्, "षड्विधा शरणागतिः" इति,

"न्यासः पञ्चाङ्गसंयुतः" इति, "स्वाङ्गैः पञ्चभिरावृताम्" इति चाङ्गाङ्गीनि विभज्य प्रतिपादयतां बहूनां **प्रमाणानां** विरुद्धमापद्येत। **लोके रक्ष्यद्रव्यसमर्पणमर्यादाया** अप्यननुगुणं स्यादितीममर्थम्, एषामङ्गानां सकृत्करणादिप्रकारांश्च पूर्वमेवावोचाम। **ब्रह्मास्त्रमपि स्वाङ्गसापेक्षं** किल भवति। अतः, "प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते। सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा॥" इति वचनमपि **धर्मान्तरनैरपेक्ष्य**प्रतिपादनपरम्। अन्यथा एतैरभ्युपगतं **महाविश्वासमपि** अनया रीत्या **संभावितस्वभावं** कर्तुं शक्यम्॥

(महाविश्वासविषयशङ्कापरिहारः)

अस्मिन्नवकाशेऽन्ये केचित्—**आस्तिक**(सामान्य)**स्य** जायमानात् **शास्त्रार्थविश्वासा**दधिकः कोऽयं **महाविश्वासो** नाम? अतोऽयमपि **सर्वशास्त्रार्थसाधारण**त्वातिरेकेण **प्रपत्तेर्विशिष्याङ्गं** कथं भवितुमर्हति—इति मन्यते। तदपि, "न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्" इत्यादिषु **विश्वासतारतम्यस्य** प्रसिद्धत्वात्, अत्र **'अतिशयितविश्वासोऽङ्गम्'** इति प्रतिपादयतो वचनाच्च परिहृतम्। **पुरुषविशेषेषु विश्वासतारतम्यं** संभवतीत्येतमर्थं **श्रीमदष्टाक्षरब्रह्मविद्यायाम्**, "यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तावती। एतावानिति नैतस्य प्रभावः परिमीयते॥" इति **श्रीनारदभगवान्** अनुजग्राह। **मन्दविश्वासान् प्रपन्नाभासानप्यन्ते सर्वेश्वरो रक्ष**ति। कथमिति चेत्—"सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेन मोक्षाय गमनं प्रति॥" इत्यादिषु, एतदनुसारिषु "त्वदङ्घ्रिमुद्दिश्य",

"उदीर्णसंसार" इति श्लोकयो:, [1]"निविडदृढपापान्तः स्थित्वा" इत्यादि(दिव्यसूक्ति)ष्वपि **अभिप्रेतरीत्या** अनेन **फलसिद्ध्यर्थमुद्दिष्टात्** कालादर्वागेवोपायपूर्तिमुत्पाद्य रक्षतीत्येतमर्थमभिसन्धाय, "वृथैव भवतो याता भूयसी जन्मसन्ततिः । तस्यामन्यतमं जन्म संचिन्त्य शरणं व्रज ॥" इति **देवलं** प्रति **श्रीशाण्डिल्यभगवान्** अनुजग्राह किल । "शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः" इति वचनमपि—**महर्षीणामेव विश्वासः** संभवति, एषां वाक्यानि प्रयुज्य(प्रदर्श्य) **मन्दविश्वासाः** प्रतिबोधनीया इत्येवम्परम् । इत्थं विश्वासतारतम्यस्य सत्त्वात् यथाशास्त्रं महाविश्वासस्य प्रपत्त्यङ्गत्वे न दोषः ।

(विश्वासह्रासपरिहारः)

केषांचिदेषु **विश्वासस्य** ह्रासप्रकारं **तत्परिहारं** च ब्रूमः । **भक्तिप्रपत्ती बुद्धिभेदेन ऐश्वर्यमोक्षरूपे विरुद्धफले** ददाते इति कथं युज्यते ? वापकस्या**भिसन्धिभेदे**नैकस्यैव बीजस्य फलान्तरजनकत्वं किमपश्यामेति केचिदुत्पश्यन्ति । अस्य **परिहारो** यथा—**न्यायाबाध्यत्वरूपेण प्रत्यक्षादिवत् स्वविषये प्रमाणेन शास्त्रेण** प्रदर्श्यमानत्वादेवम्भावो युज्यते । **लोकेऽपि धर्मशीलायोदाराय राज्ञे** क्रयरूपेण कस्यचिदर्पणे महतो मूल्यस्य लाभं तस्यैवोप**हारबुद्ध्या** समर्पणेऽपेक्षितस्य सर्वस्यापि लाभं च पश्यामः किल । इमे **भक्तिप्रपत्ती प्रयोजनान्तरपरस्य प्रवृत्तिधर्मकोटौ** निविशेते । **भगवच्चरणार्थिनां निवृत्तिधर्मौ** भवतः । अयमर्थो **नित्यनैमित्तिकादि**ष्वपि समानः ।

---

1 मोय्त्त वल्विनैयुळ् नित्रु

( अन्यादृशवैषम्यशंकासमाधानम् )

इत्थमेव-आवृत्त्यनावृत्त्यादिभिर्विषमस्वभावे उपासनप्रपदने कथमेकफलसाधने भवत इति चेत्, अस्योत्तरमपि-अधिकारिविशेषात् लोकवेदरीत्या सिद्धम् ॥

मुमुक्षूणां स्वतन्त्रप्रपत्तिं कृतवतामुपाये मोक्षे चैकरूपे सत्यपि संसारे पादसंतापेन (आर्त्या)जायमानायास्त्वरायास्तारतम्य-मनुसृत्य स्वस्वेच्छाकृतनिर्देशे काले संभवद्भ्यामाधिक्यन्यूनत्वाभ्यां फले विलम्बाविलम्बौ युज्येते ।

दिव्यसूरिनाथमुनिपर्यन्तानां भगवत्साक्षात्कारादिषु जातेषु स्थितेषु केषाञ्चिदेतद्राहित्येनावस्थितेः कारणं प्रपत्तिकालिकसंकल्पे वैषम्यं वा प्रारब्धसुकृतविशेषो वा । पूर्वमुद्दिष्टस्य फलांशस्य सकृत्प्रपत्त्या सिद्धत्वेऽपि पश्चाज्जाततीव्रसंवेगैः अनुद्दिष्टांशोद्देशेन पुनः प्रपत्तिः कर्तुं युज्यते ।

( कर्मवैगुण्याद्यभावे प्रपत्तेः सर्वफलसाधनत्वम् )

अन्ये केचित् दृष्टार्थप्रपत्तिषु कासांचिन्निष्फलत्वं दृष्ट्वा सकल-फलसाधनभूतायां प्रपत्तौ अतिशङ्कां कुर्वते । तेऽप्यन्यान्यशास्त्रार्थे-ष्विव कर्मकर्तृसाधनवैगुण्यं प्रदर्श्य प्रतिबोधनीयाः । अत्र कर्मवैगुण्यं नाम महाविश्वासादीनां न्यूनता । कर्तृवैगुण्यं नाम प्रपत्त्यर्थतयोक्त-स्याधिकारस्य न्यूनता । साधनवैगुण्यं नाम यथाशास्त्रं प्रपत्त्यनुष्ठान-मूलभूतसदुपदेशादिराहित्येनावस्थानम् । एतद्वैगुण्यशून्यतया प्रपत्तौ अनुष्ठितायां सत्यां तत्फलत्वेनोद्दिष्टानां दृष्टानामपि सिद्धिं पश्यामः ॥

( चरमश्लोकस्याङ्गप्रपत्तिविधिपरत्वशङ्कापरिहारः )

अन्ये केचित् **प्रपत्तिशास्त्रान्तरनिर्विशेषं सर्वशास्त्राणां प्रवर्तकेषु व्यासादिषु,** "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥" इति, "हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः" इति, "स्मर्तव्यः सततं विष्णुः" इति च **निष्कर्षत्सु** सत्सु **सकृत्प्रपत्तिमात्रेण मोक्षः कथं** युज्येत ? "मामेव ये प्रपद्यन्ते" इत्यादीनाम**ङ्गप्रपत्तिविषयकत्ववत् चरमश्लोकादीनां** सपरिकरप्रपत्तेर्भक्त्यङ्गतया विधायकत्वं हि युक्तमित्याचक्षते । इदमप्यनुपपन्नम् । "शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥" इति, "यत् येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत् सांख्येन योगेन न च भक्तितः ॥ प्राप्यते परमं धाम यतो नाऽऽवर्तते यतिः । तेन तेनाऽऽप्यते तत् तत् न्यासेनैव महामुने ॥ परमात्मा च तेनैव साध्यते पुरुषोत्तमः ॥" इत्यादिभिर्वचनैः **स्वतन्त्रप्रपत्तेः सिद्धौ** एतन्निष्ठावतः **श्रीवैकुण्ठगद्योक्तरीत्या स्वयं फलरूपेण** "ध्येयो नारायणः सदा" इत्युक्तेऽर्थे स्वतःप्राप्तांशान्वयस्य विरोधो नास्ति । इदमरोगेणारोग्यार्थिना च क्षीरं सेव्यमित्युक्त्या तुल्यम् । **साङ्गस्य ध्यानविशेषस्य सर्वाधिकारकत्वा**भावेऽपि, भगवद्विषयेऽधिकारानुरूपं यावद् ज्ञातुं शक्यम् , तावत्पर्यन्तस्य "[1]निरन्तरं यथा चिन्तनं स्यात् तथा त्वया संकल्पनीयम्" इत्याद्युक्तरीत्याऽनुसन्धानस्य न क्षतिः ।

---

1 निरन्तरं निनैप्पदाह नीन्निनैक्कवेण्डुम्

( स्वतन्त्रप्रपत्तिनिष्ठायाःश्रीभाष्यकाराभिमतत्वम् )

श्रीभाष्यकारोऽप्येतदुपायनिष्ठां लघुगद्ये पृथुगद्ये च प्रतिपाद्य **श्रीवैकुण्ठगद्ये** इमां निष्ठां संक्षेपेण प्रदर्श्य—जीवनकाले **प्राप्यरुचि**र्यथा न विनश्येत्, प्रत्युत वर्धेत—तदनुगुणमनुसन्धान**विशेषं** "ततश्च प्रत्यहमात्मोजीवनायैवमनुस्मरेत्" इत्यारभ्यानुजग्राह । अस्य प्रपन्नस्य "[1]पूजयित्वाऽयापयं कालम्" इत्युक्तमनन्यप्रयोजनं पूजाविशेषम् "अथ परमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्ये । भगवत्कैङ्कर्यैकरतिः परमैकान्ती भूत्वा" इत्यारभ्य **नित्ये,** "अत्यर्थप्रियाविरतविशदतमप्रत्यक्षरूपानुध्यानेन ध्यायन् आसीत" इत्यनुजग्राह ।

(अभिगमनादीनां स्वयंप्रयोजनत्वेन कर्तव्यत्वम् )

इममनन्यप्रयोजननिरन्तरभगवदनुसंधानपरीवाहरूपे **कैङ्कर्ये भगवच्छास्त्रोक्तं व्यासदक्षादिमहर्षिमतैः संगतं** "[2]कोपोज्ज्वलम्" इति गाथायां "[3]द्वयोस्त्रिषु कालेषु च स्तुत्वा" इति पदजातविवक्षितत्वेनाचार्यैर्व्याख्यातं कालविभागम्, "अभिगच्छन् हरिं प्रातः पश्चात् द्रव्याणि चार्जयन् । अर्चयंश्च ततो देवं ततो मन्त्रान् जपन्नपि ॥ ध्यायन्नपि परं देवं कालेषूक्तेषु पञ्चसु । वर्तमानः सदा चैवं पाञ्चकालिक-

1 पूशित्तप्पोक्किनेन् पोदु—नान्मुकन् तिरुवन्तादि. 63
2 मरन्तिगड़म्—पेरुमाल् तिरुमोड़ि 1-7
3 इरुमुप्पोड़देत्ति—पेरुमाल् तिरुमोडि 1-7

वर्त्मना ॥ स्वार्जितैर्गन्धपुष्पाद्यैः शुभैः शक्त्यनुरूपतः । आराधयन् हरिं भक्त्या गमयिष्यामि वासरान् ॥" इति, भाष्यकारानुगृहीतं श्रुत्वा, वङ्गिपुरपूर्णो नित्ये संजग्राह । इत्थं महायतिपर्यन्तानां नित्येषु द्रष्टव्यम् । अत्रत्यानि वैषम्याणि तत्तत्संहिताविशेषेषूक्तैर्विकल्पैः संगतानि । एवंभावात्, "न देवलोकाक्रमणम्", "भवांस्तु सह वैदेह्या", "यत्र कुत्र कुले वासो येषु केषु भवोऽस्तु मे । तव दास्यैकभोगे स्यात् सदा सर्वत्र मे रतिः ॥", "कर्मणा मनसा वाचा शिरसा वा कथञ्चन । त्वां विना नान्यमुद्दिश्य करिष्ये किञ्चिदप्यहम् ॥", "[4]स्वार्थमेव (त्वदर्थमेव) यथा स्याम् तथा मे स्वीकरणमेव" इत्युक्तरीत्या भगवत्प्रीतिमात्रप्रयोजनके कैङ्कर्ये स्वाचार्योपदिष्टां काञ्चिच्छास्त्रीयप्रक्रियामवलम्ब्य यथाकालमन्वेतुं युक्तम् ।

(भगवदभिगमनादीनामार्थं फलम्)

एवं नित्यतया विहितेषु भगवदभिगमनादिषु लोकायतिकवत् ख्यातिलाभपूजार्थतां वा तत्त्वज्ञानवैराग्यादिविधुरवत् प्रयोजनान्तरार्थतां वा अपूर्णोपायवत् मोक्षार्थतां वा विनैव मुक्तवत्, स्वाम्यभिमतं निर्वहणीयमिति रुच्या यथाशास्त्रं स्वयंप्रयोजनभावेन प्रवृत्तौ इमान्यभिगमनादीनि अन्याभिगमन-अन्यार्थप्रवृत्ति-अन्ययजन-अन्यशब्द-अन्यचिन्तनरूपच्छिद्राणां प्रवेशाप्रसङ्गार्थं प्राकारायन्ते ।

---

4 तनक्केयाक पणैक्कोल्लुमीदे—तिरुवाय्मोऴि-2-9-4

(अन्याभिगमनादीनां निषिद्धत्वे प्रमाणोल्लेखः)

**अन्याभिगमनं** न युक्तमित्येतमर्थम् "[5]इतः परं गत्वा कंचित् प्रणम्य द्वारि स्थितिः त्वन्महिमनाशहेतुः ; पश्य" इति महासूरिरनुजग्राह । **अन्यार्थप्रवृत्तिर्न** युक्तेत्येतमर्थम् ; "[6]वस्त्रान्ने एते नापेक्षे" इत्यनुजग्राह । **अन्ययजनं** न युक्तमित्येतमर्थम् "[7]स्मृत्वाऽन्यत्किमपि दैवं नाश्रयेत् तं विना" इति, "[8]देवादस्मत्स्वामिनोऽतिरिक्तस्य पुष्पं पूजनं चानुरूपं किम्" इति, "[9]प्रसूतवत्यां स्थितायां दारकं जलेन स्नपयित्वा" इति, "[10]अन्यमत्र कंचिन्नूतनं देवं स्तुवन्तो दासाः प्रसूतवत्यां मातरि स्थितायां दारकमुष्णजलेन स्नपयध्वे हेयुक्तकरणाक्षमाः दयाया अगोचराः" इत्यादिभिरनुजगृहुः ।

**सप्तर्षिसंवादेऽपि** "विष्णुं ब्रह्मण्यदेवेशं सर्वलोकनमस्कृतम् । त्रैलोक्यस्थितिसंहारसृष्टिहेतुं निरीश्वरम् ॥ आधातारं विधातारं

---

5 इनिप्पोय् ओरुवन् तनक्कु प्पणिन्दु कडैत्तलैनिर्कै निन् सा यै अड़िवु कण्डाय्" पेरियाड़्वार तिरुमुड़ि-5-6-3

6 कूरै शोरिवै वेण्डुवदिल्लै—पेरियाड़्वार तिरु. 5-1-4

उण्णित्तु मट्रोरु दैवं तोड़ाले अवनैयल्लाल्—तिरुवाय्मोड़ि 4-6-10

देवनेम्बेरुमानुक्कल्लाल् पूवुं पूशनैयुं तकुमे—तिरुवाय्मोड़ि 2-2-4

9 ईन्रोलिरुक्क मणैनीराट्टि—तिरुवाशिरियम् 9

10 मर्टुं इरोर् पुदुदेय्वं कोण्डाडुं तोण्डीर

पेट्रवायिरुक्क मणै वेन्नीराट्टिदिरो माट्टाद

तकव्विलीर. पेरियतिरुमुडि 11-6-6

सन्धातारं जगद्गुरुम् । विहाय स भजत्यन्यं विसस्तैन्यं करोति यः ॥ विष्णुधर्मपरो न स्यात् विष्णुधर्मपराङ्मुखः । कुधर्मवृत्तशीलः स्यात् विसस्तैन्यं करोति यः ॥" इत्युक्तम् ।

अन्यकीर्तनं न युक्तमित्येतमर्थम्, "[11]वाक् तं विनाऽन्यं न स्तुयात्", "[12]अभिधाने विरोधः" इत्यादिषु अनुजग्राह । अन्यचिन्तनं न युक्तमित्येतमर्थं "[13]चिन्ताया अन्यस्य कस्यचिद्विषये अप्रवृत्तिरूपं स्वभावं देवनायको जानाति" इति, "[14]आगन्तुकदेवा अन्ये सन्तीति मन्मनसि किंचिदपि न भावये" इत्यनुजग्राह ।

(भगवत्समाराधनानधिकृतानां कैङ्कर्यसिद्धिप्रकारः)

एषु समाराधनादिकर्मेष्वनधिकृतैरपि एषु सर्वेषु स्वार्हैर्नित्यनैमित्तिकैः संकीर्तनादिभिः, समाराधनादियोग्यानां परमभागवतानां परतन्त्रतया यथाधिकारं शक्यसेवाकरणेव चैतत् कैङ्कर्यमजहद्भिः स्थातुं शक्यम् । इममर्थम्, "आराधनानां सर्वेषां विष्णोराराधनं परम् । तस्मात् परतरं प्रोक्तं तदीयाराधनं परम् ॥"

---

11 वाय् अवनै यल्लदु वाड़ताडु—मुदल्द तिरुवन्तादि 11

12 शोन्नाल् विरोधं—तिरुवाय् मोड़ि 3-9

13 चिन्तै मट्रोन्रिन् तिरत्ततल्लात्तम्मै देव पिरानरियुम्—तिरुवाय मोड़ि 7-10-70

चरुदेवर् मट्रुळर् एन्रु एन्मनत्तुडिरैयुं करुतेन्—पेरियतिरुम 8-10-2

15 कुत्रमेड्त्त पिरान् अडियारोडुमोन्रि निन्र शठकोपनुरै शेयल्—तिरुवाय् मोड़ि 7-4-11

इति, "[16]पर्वतमुद्धृतवत उपकारकस्य दासैः सहैकीभूय स्थितस्य शठकोपस्य वाग्वृत्तौ" इति "(भगवन्तं) स्तुवतो जयेत् भागवतान् आश्रित्य वर्तमानानां तपः' इति चानुजगृहुः । इमानि कैङ्कर्याण्यनुष्ठाय प्रीयमाणानाम्, इमानि दृष्ट्वा प्रीयमाणानां च **जगद्व्यापाराधिकृतस्येश्वरस्य मुक्तानामिव च भोग एकरूपः** । "धर्मः श्रुतो वा दृष्टो वा स्मृतो वा कथितोऽपि वा । अनुमोदितो वा राजेन्द्र पुनाति पुरुषं सदा ॥" इत्युक्तस्य **पावनत्वस्येव भोग्यत्वस्याप्यैकरूप्ये न दोषः** ।

(यथाशक्तिस्मरणमपि ध्यानम्)

तथैव, "तस्मात् सप्रणवं शूद्रो मन्त्रामानि न कीर्तयेत्" इति **महाभारते**, "अष्टाक्षरजपः स्त्रीणां प्रकृत्यैव विधीयते । न स्वरः प्रणवोऽङ्गानि नाप्यन्यविधयस्तथा । स्त्रीणां तु शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते ॥" इति **नारदीयादिषु**, "नमो नारायणेत्युक्त्वा श्वपाकः पुनरागमत्" इति **श्रीवराहपुराणे**, "[17]वाचा नमो नारायणेत्युक्त्वा मस्तकमध्ये हस्ताभ्यामञ्जलिं बद्ध्वा" इति, "[18]नामोच्चारणे नमो नारायण इत्येव" इति चोक्तरीत्या श्रीमन्त्ररूपेऽष्टपर्वणि इक्षुदण्डे मूलाग्रभागयोस्त्यागे मध्यस्थांशस्य सर्वोपजीव्यत्ववत् प्रपत्तिनिष्ठानां

---

16 एत्ति यिरुप्पारै वेल्लुमे मट्टवरैच्चात्ति
यिरुप्पार् तवम्—नान्मुकन् तिरुवन्तादि 18

17 वायिनाल् नमो नारायणा वेन्र मत्तकत्तिडै
कैकलैक्कूप्पि—पॆरियाऴ्वार् तिरुमोऴि 4-5-2

18 नामञ्शोल्लिल् नमो नारायणमे—पॆरियाऴ्वार् तिरु 6-10-1

सर्वेषां (योगरूपध्यानायोगेऽपि) सर्वकालेऽपि भगवदनुस्मरणस्य न विरोधः। **सपरिकरविलक्षणभक्तियोगरूपत्वे** हि केषांचिद्विरोधः संभवी। **क्षणमात्रसाध्यस्य प्रपदनस्य** सिद्धत्वेऽपि, "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता" इति शरण्योऽनुजग्राह किल।

अतः, "ध्येयो नारायणः सदा" इत्युक्तस्यापि यथाधिकारं कैश्चिदुपायतया कैश्चित् फलतया च स्वीकृतत्वादिदं न स्वतन्त्रप्रपत्तिविरुद्धम्।

अस्याः **प्रपत्तेरङ्गत्वरूपं** वेषं भाष्यादिषूदाजहार। **स्वातन्त्र्यवेषं** गद्येऽनुजग्राह। "क्लेशानां च क्षयकरं योगादन्यन्न विद्यते", "न कर्मणां क्षयो भूप जन्मनामयुतैरपि। ऋते योगात्, कर्मकक्षं योगाग्निः क्षपयेत् परम्॥" इत्यादीन्यपि **स्वतन्त्रप्रपत्तिविधिबलादधिकार्यन्तरविषयाणि** स्युः। इत्थं **साध्योपायविषये** जायमानानामन्येषामपि व्यामोहानां **परिहारो निक्षेपरक्षायां** द्रष्टव्यः॥ अयं **साध्योपायोऽत्र शोधितरीत्या रहस्यत्रये** यथास्थानमनुसंधेयः॥

(अधिकारार्थसंग्राहिका गाथा)

[19]वृणुते परो यमिति ('यमेवैष वृणुते' इति वेदे प्रकाश्यमानमपि पापिनः व्याजेन केनचित् इत्यतो वयं प्रोक्तस्य सन्मार्गस्य विचारणप्रकारेषु विचारं विधाय लोकधारकस्य तारकस्य कृपया धृता भवामः॥

---

19 वरिक्कित्रनन् परन् यावरै येत्रु मरैयदनिल्
विरिक्कित्रदुं कुरियोन्राल् विनैयरै यादलिल् नाम्
उरैक्कित्र नन्नेरियोरुं पडिकलिलोरन्दुलकम्
तरिक्कित्र तारकनार् तकवाल् तरिक्कित्रनमे.

तत्तद्धैतुकहेतुके कृतधियस्तर्कैन्द्रजालक्रमे
बिभ्राणाः कथकप्रधानगणने निष्ठां कनिष्ठाश्रयाम् ।
अध्यात्मश्रुतिसंप्रदायकतकैरद्धा विशुद्धाशयाः
सिद्धोपायवशीक्रियामिति हि नः साध्यां समध्यापयन् ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
सिद्धोपायशोधनाधिकारश्चतुर्विंशः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## प्रभावव्यवस्थाधिकारः २५.

स्वरूपं यत् यादृग् गुणविभवलीलादि च विभोः
तदाज्ञासेतुश्च श्रुतिभिरवसेयं तदखिलम् ।
तथा तद्भक्तानां तदुपसदनादेश्च महिमा
यथाधीतं सद्भिर्यतिपतिमुखैरध्यवसितः ॥

इत्थं द्वये (मन्त्रे) द्वितीयान्तपदप्रकाशितसिद्धोपायविषये आख्यातपदोक्तसाध्योपायविषये च जायमानानां व्यामोहानां

प्रशमनस्य पन्थानं प्रादीदृशाम। एतदुपायप्रभावविषये प्रमाणप्रदर्शित-सीमापेक्षयाऽधिकज्ञानन्यूनज्ञानाभ्यां जायमाना: व्यामोहा: प्रशमनीया:।

(उपायनिष्ठानां प्रभावातिशय:)

"आस्फोटयन्ति पितर: प्रनृत्यन्ति पितामहा:। वैष्णवो न: कुले जात: स न: सन्तारयिष्यति ॥" इति, "[1]केशवीया अधस्तादुपरि च मदीया: सप्तसुसप्तसु जन्मस्वपि महाचातुर्यमिदं प्राप्ता:" इत्युक्तरीत्या **अनुबन्धिनामपि उत्तारकं** प्रभावमावहन् किल **एतदुपायनिष्ठो** वर्तते। "यो ह्येनं पुरुषं वेद देवा अपि न तं विदु:" इति **भगवज्ज्ञानिन: प्रभावो देवैरप्यपरिच्छेद्य** इत्यूचु: किल।

(प्रभावे सत्यपि जातिव्यवस्था)

अथाप्येतदविरुद्धप्रमाणबलेन प्रथमतो **जातिव्यवस्थां** ब्रूम:।

(जातिव्यवस्थानङ्गीकारे शास्त्रविरोध:)

"न शूद्रा भगवद्भक्ता विप्रा भागवता: स्मृता:। सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ॥" इति **भगवद्भक्तिरूपगुणविशेषसद्-सद्भावाभ्यामपकृष्टजाती**यानामुत्**कृष्टजातीयवा**चकशब्देन निर्देशन-**मुत्कृष्टजातीयानामपकृष्टजातीयवाचकशब्दै**र्निर्देशनं च स्थितम्। **एतस्माद्धेतोर्भगवद्भक्ता:** सर्वेऽप्येकजातीया: किलेति **मृदुप्रज्ञा** मन्यन्ते। एवं सति **भागवतब्राह्मण** इत्थमेव वर्तेत, **भागवतशूद्र** इत्थमेव वर्ततेति **आचारनियमप्रतिपादकानि सर्वशास्त्राणि** विरुध्येरन्।

---

1 केशवन् तमरकीऴ्मेलेमरेऴेऴु पिरप्पुं
मा शदिरिदु पॆट्रुं—तिरुवाय 2-7-1

(तत्र पूर्वाचार्यकृतमुपपादनम्)

केवलब्राह्मणस्य केवलशूद्रस्य च विद्यमानं तारतम्यं भागवतब्राह्मणस्य भागवतशूद्रस्य च विषये स्वीकार्यमिति, एषां साम्यबोधकानि शास्त्राणि परमपुरुषार्थसाम्यादिभिः प्रवृत्तानीति च किडाम्बियप्पुळ्ळार्स्वामिनः (वादिहंसाम्बुदाचार्याः) अन्वगृह्णन्। "[2]कुलं दद्यात्" इति गाथां व्याख्यातवन्तोऽभियुक्ता अपि, 'जन्मना वृत्तेन निहीनस्य कस्यचिद्भगवत्संबन्धे जाते सति, तद्विषये एतद्वता अपकर्षज्ञानप्रसक्तौ संयमः कार्य इत्येवं किलास्ति भगवत्प्रभावप्रकारः। (सत्यम् ;) परं तु तैः सह कन्यादानाऽऽदानव्यवहारो नास्ति किलेति चेत्—स जातिनिबन्धनः ; श्लाघा गुणनिबन्धना' इति निष्कर्षं चक्रुः।

(कुलस्य भिन्नत्वेऽपि जातेरभेद्यत्वम्)

"कुलं दद्यात्" इत्येतत् "[3]प्राचीनकुलं परित्यज्य" इत्येतच्च दासकुलोत्कर्षप्रतिपादनपरम्। देवतान्तरादिसंकीर्णकुलं नास्ति किलैतदीयम्। "मा जनिष्ट स नो वंशे जातो वा द्राग् विपद्यताम्। आजन्ममरणं यस्य वासुदेवो न दैवतम्" इति किलैकान्तिकुले वचः। इत्थं कुलान्तरत्वेऽपि जातिशब्दकुलशब्दयोर्भिन्नार्थकतयाऽपि प्रयुक्तत्वाज्जातिर्न भिद्येत, कुलं भिद्येत। श्रीसुरभिभावेऽपि गोत्वं न हीयेत किल।

(जात्यन्तरत्वप्रतिपादकशास्त्रतात्पर्यम्)

महर्षयोऽपि, "स शूद्र इति मन्तव्यः" इत्याद्युक्तरीत्या प्रतिपत्तिविशेषतात्पर्येणोत्कृष्टविषये अपकृष्टशब्दम्, अपकृष्टविषये

---

2 कुलं तरुम्—पेरियतिरुमोऴि 1-1-9

3 पण्डैकुलत्तैत्तविरन्दु—तिरुप्पल्लाण्डु 5

**उत्कृष्टशब्दं** च प्रयुयुजिरे इत्येतावदेव। अतो **भगवद्भक्त**भिन्ना ब्राह्मणाः **शूद्रवदनादरणीया** इति भगवद्भक्ताः शूद्रा, ब्राह्मणवत् **श्लाघनीया** इति च शास्त्रतात्पर्यम्।

(जात्यपगमाङ्गीकारे बाधकम्)

अन्यथा, "चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः", "चण्डालाः प्रत्यवसिताः परिव्राजकतापसाः", "न तेन वृद्धो भवति येनास्य पलितं शिरः। बालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः॥" इत्येवंरीत्या **निन्दाप्रशंसापरवाक्यावलम्बनेन सर्वमर्यादा व्याकुला** भवेयुः। अतः—

**प्रतिपत्तिविशेषार्थमन्यत्रान्यत्वकीर्तनम्।**
**विशेषविधिसाकाङ्क्षास्तत्र तत्तत्प्रवृत्तयः॥**

इति इहोक्तानामपि (वचनानां) **समाधानम्।**

(जात्यनपगमे शिष्टाचारप्रदर्शनम्)

**श्रीविदुरोऽपि स्वजात्यनुरूपं** विवाहादीन्यकरोत्। भुक्तवत्सु द्विजाग्र्येषु निषण्णः परमासने। विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च॥" इत्येतच्छ्रुत्वा दुर्योधने, "भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन। किमर्थं पुण्डरीकाक्ष भुक्तं वृषलभोजनम्॥" इति पृष्टवति सति, "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्। पाण्डवान् द्विषसे राजन् मम प्राणा हि पाण्डवाः॥" इत्युत्तरदानात् **श्रीविदुरविषये दुर्योधनोक्तं जातिविशेषं भगवानङ्गीचकारेति** सिद्धम्।

तथापि ब्राह्मणानां क्षत्रियाणां च शूद्रपक्वान्नभोजनं निषिद्धं किलेति चेत्—"आर्याधिष्ठिता वा शूद्रा अन्नसंस्कर्तारः स्युः" इत्यापस्तम्बाद्युक्तरीत्या युगान्तरेष्वार्यपरतन्त्राणां गुणवच्छूद्राणामार्यार्थान्नसंस्कारकत्वेनानुज्ञातत्वात् तत्र न निषेधः। इदम्, "शुचिस्तु प्रयतो भूत्वा विदुरोऽन्नमुपाहरत्" इति श्रीविदुरगुणविशेषप्रतिपादनेन सूचितम्।

(श्रीविदुरविषये धर्मपुत्रकृतब्रह्ममेधस्योपपत्तिः)

ब्रह्मविदि अस्मिन् योगप्रभावेण देहन्यासं कृतवति सति पश्चात् प्राप्तेन युधिष्ठिरेणानुष्ठितः संस्कारविशेषः तूष्णीमनुष्ठितो वा व्यक्तिविशेषनियतो वेत्येवमेव। एतदवलम्ब्य व्यक्त्यन्तरेषु न्यायसंचारः कर्तुं न युज्यते। अन्यथा धर्मोत्तराणां पाण्डवानां केनचिन्नियतिविशेषेणोपनतं दारसाधारण्यं निमित्तीकृत्य सर्वे लोका व्याकुलाः स्युः।

(जात्यनुसारेण सर्वैः कैङ्कर्याद्यनुष्ठानम्)

अतः स्वस्वजातीरविजहद्भिः सद्भिः तत्तज्जात्युचितप्रक्रियया यथाधिकारं भगवत्कैङ्कर्यं कर्तुं युक्तम्। मोहनशास्त्रोक्ताः जात्युद्धारादयः प्रामाणिकैः स्मर्तुमपि न युज्यन्ते।

(विश्वामित्रादेर्जात्यन्तरप्राप्तेश्चरुव्यत्यासाद्यधीनत्वम्)

चरुव्यत्यासादिभिः कैश्चिद्विशेषनिदानैर्जनिता (जनितत्वात्) विश्वामित्रादीनां स्थितिरन्येषामपि केषाञ्चित् युज्यत इति वादो वचनविरुद्धः।

**उत्कृष्टशब्दं** च प्रयुयुजिरे इत्येतावदेव। अतो **भगवद्भक्त**भिन्ना ब्राह्मणाः शूद्रवदनादरणीया इति भगवद्भक्ताः शूद्रा, ब्राह्मणवत् श्लाघनीया इति च शास्त्रतात्पर्यम् ।

(जात्यपगमाङ्गीकारे बाधकम्)

अन्यथा, "चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः", "चण्डालाः प्रत्यवसिताः परिव्राजकतापसाः", "न तेन वृद्धो भवति येनास्य पलितं शिरः। बालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः ॥" इत्येवंरीत्या **निन्दाप्रशंसापरवाक्यावलम्बनेन सर्वमर्यादा व्याकुला** भवेयुः । अतः—

**प्रतिपत्तिविशेषार्थमन्यत्रान्यत्वकीर्तनम् ।**
**विशेषविधिसाकाङ्क्षास्तत्र तत्तत्प्रवृत्तयः ॥**

इति इहोक्तानामपि (वचनानां) **समाधानम् ।**

(जात्यनपगमे शिष्टाचारप्रदर्शनम्)

**श्रीविदुरोऽपि स्वजात्यनुरूपं विवाहादीन्यकरोत्** । भुक्तवत्सु द्विजाग्र्येषु निषण्णः परमासने । विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ॥" इत्येतच्छ्रुत्वा दुर्योधने, "भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन । किमर्थं पुण्डरीकाक्ष भुक्तं वृषलभोजनम् ॥" इति पृष्टवति सति, "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत् । पाण्डवान् द्विषसे राजन् मम प्राणा हि पाण्डवाः ॥" इत्युत्तरदानात् **श्रीविदुरविषये दुर्योधनोक्तं जातिविशेषं भगवानङ्गीचकारेति** सिद्धम् ।

तथापि **ब्राह्मणानां क्षत्रियाणां** च शूद्रपक्वान्नभोजनं **निषिद्धं** किलेति चेत्—"आर्याधिष्ठिता वा शूद्रा अन्नसंस्कर्तारः स्युः" इत्यापस्तम्बाद्युक्तरीत्या **युगान्तरेष्वार्यपरतन्त्राणां गुणवच्छूद्राणामार्यार्थान्नसंस्कारकत्वेनानुज्ञातत्वात्** तत्र न निषेधः। इदम्, "शुचिस्तु प्रयतो भूत्वा विदुरोऽन्नमुपाहरत्" इति श्रीविदुर-**गुणविशेषप्रतिपादनेन** सूचितम्।

(श्रीविदुरविषये धर्मपुत्रकृतब्रह्ममेधस्योपपत्तिः)

**ब्रह्मविदि** अस्मिन् **योगप्रभावेण देहन्यासं** कृतवति सति पश्चात् प्राप्तेन **युधिष्ठिरेणानुष्ठितः** संस्कारविशेषः **तूष्णीमनुष्ठितो** वा **व्यक्तिविशेषनियतो** वेत्येवमेव। एतदवलम्ब्य **व्यक्त्यन्तरेषु न्याय-संचारः** कर्तुं न युज्यते। अन्यथा **धर्मोत्तराणां पाण्डवानां** केनचिन्नियतिविशेषेणोपनतं **दारसाधारण्यं** निमित्तीकृत्य सर्वे लोका व्याकुलाः स्युः।

(जात्यनुसारेण सर्वैः कैङ्कर्याद्यनुष्ठानम्)

अतः स्वस्वजातीरविजहद्भिः सद्भिः **तत्तज्जात्युचितप्रक्रियया** यथाधिकारं भगवत्कैङ्कर्यं कर्तुं युक्तम्। **मोहनशास्त्रोक्ताः जात्युद्धारादयः प्रामाणिकैः** स्मर्तुमपि न युज्यन्ते।

(विश्वामित्रादेर्जात्यन्तरप्राप्तेश्चरुव्यत्यासाद्यधीनत्वम्)

**चरुव्यत्यासादि**भिः कैश्चिद्विशेषनिदानैर्जनिता (जनितत्वात्) **विश्वामित्रादीनां** स्थितिरन्येषामपि केषाञ्चित् युज्यत इति वादो **वचनविरुद्धः।**

(दिव्यसूर्यनुष्ठानदृष्टान्तीकरणस्यानुचितत्वम्)

विदुरादिभ्योऽप्युत्कृष्टप्रभावाणां दिव्यसूरीणां वृत्तान्तविशेषा अस्मदनुष्ठानस्य न दृष्टान्तीकार्याः । तेषां वृत्तान्तेषु परिशीलितेषु स्वजातिनियमातिक्रमो नोपलभ्यते च ।

(शूद्रादिभ्योऽपि तत्त्वज्ञानवैशद्यस्य संपादनीयता)

"विष्णुर्नित्यं विद्यया तात ईड्यस्तस्माद् ज्ञानं नित्यरूपं वरेण्यम् । प्राप्यं ज्ञानं ब्राह्मणात् क्षत्रियाद्वा वैश्याच्छूद्राद्वापि नीचादभीक्ष्णम् ॥" इति श्लोके **भगवज्ज्ञानस्यावश्यं संपादनीयत्वात् पूर्वपूर्वालाभे**ऽन्येभ्यो ज्ञानमात्रं **विशदं संपादनीयमि**त्येतावदेव प्रत्यपादि ।

(ब्राह्मणादिभ्य एव विद्यामन्त्राणां ग्राह्यता)

एवंसत्यपि **विद्यामन्त्रादीनां ग्रहणं ब्रह्मणादित एव** कार्यमित्येतत्, "शूद्रयोनावहं जातो नातोऽन्यत् वक्तुमुत्सहे" इति **विदुरवाक्यात्** सिद्धम् । **तुलाधार-धर्मव्याधादयो**ऽपि **धर्मसन्देहात्** प्रष्टुमागतान् **ब्राह्मणान्** संभाव्य. **तीर्थयात्रायां मार्गं** सन्दिहानानां मार्गयोजनमात्रकरणवत्, तान् संप्रबोध्य व्यसृजन्नित्येतावदेव ; न तु **मुख्यमाचार्यकं** चक्रुः । इमे प्रकाराः ए**ष्वितिहासेषु** द्रष्टव्याः ।

(भक्तम्लेच्छादिविषयकपूज्यादिशब्दार्थः)

"भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥" इति वचनमपि न **कन्यादानादिपरम्**, किन्तु **ज्ञानप्रदानादिपर**मिति व्याचख्युः । **पूज्य** इति **शब्दस्य** साधारणत्वात्, 'भागवतत्वे सति सर्वेऽपि यथाशास्त्रोक्तमर्यादमा-

दरणीयाः ; एषां सजातीयसाम्यबुद्ध्याऽवज्ञाने कृते सति **नरको** भवति' इत्येतावत्येव तात्पर्यम् । इममर्थं "यः शूद्रं भगवद्भक्तम्" इत्यारभ्य महर्षिः संजग्राह । अतो **जातिव्यवस्था** यथा क्षोभरहिता वर्तेत, तथा **भागवतप्रभावो** द्रष्टव्यः ।

> अतो जातेर्निकृष्टायाः सर्वस्या वा विनाशतः ।
> साजात्यं विष्णुभक्तानामिति मन्दमिदं वचः ॥
> वैष्णवत्वेन मान्यत्वं समानं मुनिसम्मतम् ।
> जात्यादिध्वंसतः साम्यं मुक्तिकाले भविष्यति ॥

(जातिव्यवस्थापकप्रमाणप्रदर्शनम्)

भगवद्गीतादिषु, "स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्", "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥", "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः", "तस्मात् सप्रणवं शूद्रो मन्नामानि न कीर्तयेत्", "न चलति निजवर्णधर्मतो यः" इत्यादिभि**र्भागवतस्यैव यथापूर्वं जातिव्यवस्था**, तदनुरूप**वृत्तव्यवस्था** च सुस्पष्टं प्रतिपादिता । इत्थं **भागवतत्व**रूपे **गुणे** तन्निबन्धने **पुरुषार्थविशेषे** च **समाने** सत्येव **जातिविशेषाः वृत्तिविशेषाश्च नित्यव्यवस्थिता** इत्ययमर्थः, "शूद्रः साधुः कलिः साधुः" इत्यादिष्वपि प्रसिद्धः ।

(ब्राह्मण्यादिद्वयपरतया सर्वशास्त्राविरोधः)

"तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम्" इत्यादिषूक्तरीत्या सत्त्वादिगुणतारतम्यवति शरीरे ब्राह्मण्यादीन्यन्यानि । मनसि

सत्त्वादिगुणविशेषनिबन्धनानि प्रशंसावाक्यैः सर्वजातिष्वपि प्रतिपादितानि ब्राह्मण्यादीन्यन्यानि । अत्र शारीरगुणविशेषनिबन्धनतया व्यवस्थिताः शारीरजातिविशेषा उत्पत्तिसिद्धा आमरणं स्थिरा भवन्ति । मानससत्त्वादिगुणोन्मेषनिबन्धनतया प्रतिपादिता ब्राह्मण्यादयः सर्वजातीनामपि संभाविताः, प्रह्लादादीनां जन्मसिद्धा अन्येषामाचार्यसम्बन्धादिहेतुभिरागन्तुकाश्च भवन्ति । अत्र शारीरजातिविशेषविषयकतया कानिचिच्छास्त्राणि नियतानि । मानसब्राह्मण्यादिविषयकतया तदनुरूपाः पुरुषार्थतदुपायाः प्रशंसादयश्च सर्वजातिषु संभाविताः । अत्र ब्राह्मणादिषु मानसविपरीताकाराणां जनने, शमदमादियोग्यतया शास्त्रसिद्धे जन्मनि जनित्वा भ्रष्ट इति अतीव निन्दा प्रवर्तेत । जात्यन्तरेषु जनित्वा गुणोत्तरो वर्तेत चेत्, "एतैः समेतः शूद्रोऽपि वार्धके मानमर्हति" इत्याद्युक्तरीत्या प्रशंसाऽत्यन्तं प्रवर्तेत । अत्र शारीरो मानसश्च जायमान उत्कर्षः गर्वहेतुश्चेत्, अनर्थकरः । एतदुभयप्रकारसिद्धोऽपकर्षः "कुलयोर्द्वयोर्द्वयोः" इति गाथायाम् "जनित्वाऽहं वंशे" इति श्लोके चोक्तरीत्या स्वस्थितिप्रबोधनपूर्वकं कार्पण्यमुत्पाद्याकिञ्चनाधिकारे उपायविशेषे प्रवर्तयेच्चेत्, पुरुषार्थकारणत्वात् श्लाघ्यो भवति । इत्थं जातिव्यवस्थायां जात्यनुरूपवृत्तव्यवस्थायां च सत्यामपि सर्वेषां भागवतत्वनिबन्धनायाः पूर्वं समर्थिताया उद्देश्यत्वप्रतिपत्तेर्विरोधो नास्ति ॥

(ऐकान्त्यादिहेतुभूतोत्कर्षतारतम्यम्)

एषु भगवत्परेषु, "ऐकान्त्यं भगवत्येषां समानमधिकारिणाम्"

इत्युक्तरीत्या **प्रयोजनान्तरस्पर्शशून्याः परमैकान्तिनः** । तेष्वन्तर्भूतानां **विलम्बाक्षमाणाम्, सर्वशक्तिशेषिसन्निधौ भरन्यासं** कृत्वा क्रियमाणस्य कैङ्कर्यस्य मोक्षमपि प्रयोजनत्वेनानुद्दिश्य **कैङ्कर्यैकप्रयोजनानां** सतां परमैकान्तित्वं **षोडशवर्णस्वर्ण**तुल्यम् । एतदतिशयवेदिनो **महर्षय** एतेषां **परमैकान्तिनां माहात्म्यं प्रपञ्चयामासुः** ॥

(नारायणैकनिष्ठस्येत्यादिश्लोकतात्पर्यम्)

**एतत्प्रभावगोचरयोः** "नारायणैकनिष्ठस्य याया वृत्तिस्तदर्चनम् । योयो जल्पः सस जपस्तद् ध्यानं यन्निरीक्षणम् ॥ तत्पादाम्बतुलं तीर्थं तदुच्छिष्टं सुपावनम् । तदुक्तिमात्रं मन्त्राग्र्यं तत्स्पृष्टमखिलं शुचि ॥" इति श्लोकयोः प्रमाणत्वेऽपि, अत्र "या या वृत्तिस्तदर्चनम्" इत्येतत् न **शास्त्रविरुद्धवृत्ति**प्रतिपादनपरम्, किंतु **देशकालवैगुण्याद्** "आपत्स्वनन्तरा वृत्तिः" इत्युक्तायां स्थितावनुष्ठानेऽपि तत् **समाराधनोपयुक्तं सम्यगुपादान**मित्येवम्परम् । "मन्निमित्तकृतं पापमपि धर्माय कल्पते" इत्यस्यापीदमेव **तात्पर्यम्** । अन्यथाऽतिप्रसङ्गः स्यात् । "या या चेष्टा" इति पाठेऽपि **अर्थप्राप्तशास्त्रप्राप्तवत् स्वभावप्राप्तानां निमेषोन्मेषादीनामपि समर्पणीयतया रहस्यशास्त्रसिद्धत्वात्** "तदर्चनम्" इति वक्तुं शक्यम् । इदं **निषिद्धे** न प्रसज्येत । अप्रतिषिद्धानि **स्वभावार्थशास्त्रप्राप्तानि** हि समर्पणीयत्वेनाम्नातानि । **एतदुपबृंहणस्य** "यत्करोषि यदश्नासि" इति श्लोकस्यापीत्थं **शास्त्राविरुद्धविषये तात्पर्यम्** । एषु शास्त्रविरुद्धानामुपनिपातेऽधिकारानुरूपं **नैमित्तिकं निग्रहशमनं कैङ्कर्यम्** (कार्यम्) ।

"यो यो जल्पः स स जपः" इत्येतदपि, "पारुष्यमतिवादश्च पैशुनं चैव सर्वशः। अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥" इति शास्त्रप्रतिषिद्धवृथाजल्पपरं न; किं तु तत्त्वहितविषये शिष्यगुरुसब्रह्मचारिशिष्टश्रेयोर्थिभिः सहाज्ञातज्ञापनार्थं ज्ञातस्थिरीकरणार्थं संशयनिराकरणार्थं च क्रियमाणाः उक्तिप्रत्युक्तिपरम्पराः प्रतिपादयति। "न विगृह्य कथां कुर्यात्" इति सामान्येनोक्तत्वेऽपि "यथाशक्ति निगृह्णीयात् देवतागुरुनिन्दकान्" इति विशिष्य धर्मशास्त्रसिद्धत्वाद् बाह्यकुदृष्टिविषये विजिगीषुभावेनोच्यमानां वाक्यपरम्परां "जल्प" इति प्रतिपादयतीति वा।

"तद् ध्यानं यन्निरीक्षणम्" इत्येतदपि निषिद्धनृत्तादिदर्शनं न ब्रवीति, किं तु कैङ्कर्यार्थं प्रवृत्तौ एतद्दृष्टिगोचराणां पदार्थानां सर्वेषाम्, "अहं हरिः, सर्वमिदं जनार्दनः" इत्याद्युक्तरीत्या, "[4]तिष्ठन् सर्वं महाव्याप्तुग्धो भगवान्" इति ब्रह्मात्मकतयाप्रतीयमानतारूपं प्रकारं ब्रवीति।

"तत्पदाम्ब्वतुलं तीर्थम्" इत्येतदपि प्राप्तविषये गुणाधिक्यं प्रतिपादयति। पादोदकं तीर्थमित्युक्तविषये नारायणैकनिष्ठत्वे सति तत् सर्वाधिकतीर्थमित्युक्तं भवति; न तु भागवतस्य पादे यादृच्छिकसम्बन्धवन्ति निर्माल्यादीन्यप्यतुलं तीर्थमित्युक्तं भवेत्।

"तदुच्छिष्टं सुपावनम्" इत्येतदपि पुनरुपनयनादिप्रकरणेषु पावनत्वेन शास्त्रप्राप्तस्योच्छिष्टविशेषस्यैतद्गुणविशेषनिबन्धनं पावनत्वातिशयं ब्रवीति; न तु शिष्यपुत्रादीनां नारायणैकनिष्ठत्वे

सति आचार्यादीनामपि तदुच्छिष्टं सुपावनमित्यपि प्रतिपादयेत् । "निर्माल्य भक्षयित्वैवमुच्छिष्टमगुरोरपि । मासं पयोव्रतो भूत्वा जपन् अष्टाक्षरं सदा । ब्रह्मकूर्चं ततः पीत्वा पूतो भवति मानवः ॥" इति भगवद्धर्मनिष्ठस्य समयाचारप्रतिपादकं सनत्कुमारसंहितावचनमागमप्रामाण्ये श्रीयामुनाचार्या उदाजह्रुः । अतः "[1]भुक्तशिष्टं दद्युश्चेत् पावनं किल" इत्यपि गुरुविषयमित्येव । साधारण्येऽपि भगवत्संकीर्तनपरा देशकालवैगुण्यात् ऊनवृत्तय ऊनकारकाश्च सन्तोऽपि स्वभुक्तशिष्टं दद्युश्चेत् , तत् पावनमित्येवम्परमित्येतावत् । अत्र शेषशब्दस्य "अन्नशेषः किं क्रियताम् ? इष्टैः सह भुज्यताम्" इत्यादिन्यायेन भाण्डस्थविषयत्वे न विरोधः । उच्छिष्टशब्दोऽपि श्रुत्यादिषु भुक्तशिष्टे पाकपात्रस्थेऽपि प्रयुक्तः । "परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ । धर्मं चाप्यसुखोदर्कं लोकसंक्रुष्टमेव च ॥" इति मन्वादयो व्यवस्थापयामासुः ॥

"तदुक्तिमात्रं मन्त्राग्र्यम्" इत्येतत् अनेन रक्षकतयोपदिष्टानि भाषावाक्यान्यपि श्रीमन्त्रवत् सादरमनुसन्धेयानीत्येवम्परम् ; न तु अनेनोच्यमाना लौकिकव्यवहाराः जपादियोग्या इत्येवम्परम् । "[2]उच्यमानं परिहासवाक्यं श्रुतिः" इत्यस्याप्येवं हितार्थवाक्यमेव विषयः ॥

---

1 पोनकं शेय्दशेडं तरुवरेल् पुनितमन्ने—तिरुमालै 42

2 कोळ्ळुमविड श्रुतियाम्—ज्ञानसारम् 40

"तत्स्पृष्टमखिलं शुचि" इत्येतत् आतुरविषये स्पृष्ट्वास्नानवत् दीक्षाकाले विष्णुहस्तप्रदानाख्यस्पर्शवत् श्रीप्रतिष्ठायां महाभागवतस्पर्शवच्च अन्यान्यस्पर्शविधानस्थलेषु एतस्य स्पर्शे लब्धे स्पृष्टं सर्वमपि परिशुद्धमित्येवम्परम् ; न तु—"उदुम्बरं नखा देतु", "कालिङ्गोदुम्बरालाबुबिम्बानि परिवर्जयेत् । तान्यश्नतस्तु सततं नित्यं दूरतरो हरिः ॥ वृन्ताककतकालिङ्गबिल्वोदुम्बरभिस्सटाः । यो भक्षयति सम्मोहात् तस्य दूरतरो हरिः। कालिङ्गीं क्षुद्रवार्तां च दग्धान्नं मौसलीं तथा । तुम्बिकाफलमश्नीयात् तस्य दूरतरो हरिः ॥ योऽत्ति वार्ताककालिङ्गमसूरविसकान्यपि । अन्त्य(न्त) काले जगन्नाथं गोविन्दं न स्मरिष्यति ॥", "तुम्बं कोशातकं चैव पलाण्डुं गृञ्जनं तथा । छत्राकं विड्वराहं च भुक्त्वा चान्द्रायणं चरेत् ॥ नालिकाचणछत्राककुसुम्भालाबुविड्भवान् । कुम्भीकञ्चुकवृन्ताककोविदारांश्च वर्जयेत् ॥", "क्षीरं लवणसंमिश्रमुच्छिष्टेऽपि च यद् घृतम् । पानं रजकतीर्थे च सुरापानसमं विदुः ॥", "आरनालं न सेवेत कदाचित् भगवत्परः । सुराकल्पं हि तद् ज्ञेयं तस्मात् यत्नेन वर्जयेत् ॥", "प्रमादादपि कीलालं यः स्पृशेद्वैष्णवो नरः । उपचारशतेनापि न क्षमामि वसुन्धरे ॥", "एकादश्यां सुरश्रेष्ठ यो भुङ्क्ते द्विजजन्मवान् । प्रतिग्रासमयं भुङ्क्ते किल्बिषं श्वानविट्समम् ॥", "एकादश्यां तु यो भुङ्क्ते शक्तः सन्निरुपद्रवः । सुरापानसमं पापं भवेत् तस्य न संशयः ॥ मद्यपानात् सुरश्रेष्ठ पतेत नरकं व्रजेत् । एकादश्यन्नकामस्तु पितृभिः सह मज्जति ॥" "अन्नदोषादशमनात् नानाविषयदर्शनात् । देहशौचादिविरहात् समलं जायते मनः ॥", "आलस्यादन्नदोषाच्च

मृत्युर्विप्रान् जिघांसति ।" इत्यादिभिर्निषिद्धानि सर्वाण्यप्येतत्स्पर्शमात्रेण शुद्धानि भवन्तीति । एवं विषयव्यवस्थाया अकरणे परिगृहीतत्तमैर्बहुशास्त्रैः शिष्टानुष्ठानैश्च विरोधादतिवादमात्रं संपद्येत ।

(परमैकान्तिनामपि शास्त्रानतिक्रमावश्यकत्वम्)

महाप्रभावाणां परमैकान्तिनामपि विषये अस्य शास्त्रीयनियमस्याविचारयता श्रीनाथमुनियामुनार्यभाष्यकारान्तानां परमाचार्याणामन्तिमदशावधिकानि अनुष्ठानानि श्रुत्वा ज्ञातव्या ।

(तामसराजससात्त्विकत्यागनिरूपणम्)

वेदवैदिकशास्त्रोक्तानां नियमानां बाह्यैः कुदृष्टिभिश्च भ्रान्त्या त्यागस्तामसत्याग इतीममर्थम्, "नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात् तस्य परित्यागस्तामसः परिकीर्तितः" इति श्लोकेनानुजग्राह । कुटुम्बभरणाद्यर्थमटित्वा संन्यासादीनि परिगृह्णद्भिरिव दुःखरूपप्रवृत्तिनिवृत्तीनामालस्येन क्रियमाणस्त्यागो राजसत्याग इतीममर्थम्, "दुःखमित्येव यः कर्म कायक्लेशभयात् त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥" इत्यनुजग्राह । स्वाधिकारानुरूपं त्यक्तव्यानां त्यागपूर्वं कर्तव्यानां करणस्य समये, अहं स्वतन्त्रः करोमीति, ममेदं कर्म शेषभूतमिति, ममैतत्फलार्थमिदमेव साधनमिति च जायमानां बुद्धिं विनिवर्त्य, सर्वेश्वरे कारयति सति तच्छेषभूतस्य कैङ्कर्यस्य तत्प्रीत्येकप्रयोजनत्वानुसन्धानेनानुष्ठानं सात्त्विकत्याग इतीममर्थम्, "कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन । सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥" इत्यनुजग्राह । एतद्भगवत्प्रीतिप्रयोजनकत्वेनानुष्ठा-

नस्थले अस्याः प्रीतेर्मोक्षमपि फलत्वेनानुद्दिश्य, पूर्वप्रपत्तिजेन परम-कारुणिकप्रसादेन मोक्षः सिद्ध इति मत्वा मुक्तकैङ्कर्यवत्, अरोगस्य क्षीरोपस्कृतभोजननन्बानुष्ठानं सात्त्विकत्यागस्य सीमाभूमिर्भवति। इदं बुभुक्षुभोजनमात्रम्। अन्यथा पणवन्धार्थापूपभक्षणमात्रम्।

(चरमश्लोकयोजनाद्वयतात्पर्यम्)

"सर्वधर्मान् परित्यज्य" इत्यत्र प्रथमयोजनायाम्, 'बुद्धि-विशेषरूपः सात्त्विकत्यागः प्रतिपाद्यते' इति भाष्यकारोऽनुजग्राह। अयं बुद्धिविशेषः स्वतन्त्रप्रपत्तिनिष्ठस्य प्रपत्त्यनुष्ठानकाले, पश्चात् स्वयंप्रयोजने उपायासंबद्धे उत्तरकृत्येऽप्युपजीव्यः। द्वितीययोज-नायामल्पशक्तेर्विलम्बाक्षमस्य दुष्करचिरकालसाध्योपायान्तरदर्शनेन शोके जाते तच्छोकापनोदनार्थं सुकरं सकृत्कर्तव्यमुपायान्तरं विधीयत इति कृत्वा, त्वयोपायान्तरेषु न परिश्रमितव्यमिति प्रतिपाद्यत इत्यनुजग्राह। अस्य प्रपत्त्यनुष्ठानस्य पूर्वावस्थायामुपायान्तरानन्वयो दैवादागतोऽस्याः प्रपत्तेर्नैरपेक्ष्ये निविशते। परित्यज्येत्ययमनुवाद इति वदताम् 'अधिकार उच्यते' इत्यत्र तात्पर्यम्। विधिरिति वदतां प्रपत्तिरूपोपायस्य नैरपेक्ष्यादीनि प्रतिपाद्यन्त इत्यत्र तात्पर्यम्। इत्थं परित्यज्येत्यत्राधिकारस्य विवक्षितत्वे मामेकमित्यत्र नैरपेक्ष्यमनु-सन्धेयम्। परित्यज्येत्यत्र नैरपेक्ष्यस्य विवक्षितत्वे "मा शुचः" इति शोकनिषेधेनाकिञ्चनतयाऽवस्थितेः प्रतीत्या अधिकारोऽर्थसिद्धो भवति॥ तदा—

प्रकृतोपासनन्यायात् तदङ्गानामुपस्थितौ ।
अन्येषां चैतदङ्गत्वत्यागोऽत्र प्रतिपाद्यते ॥

एकशब्दः सात्त्विकत्यागेन स्वस्मिन् पराधीनकर्तृत्वादीनां विवक्षणं फलोपायैक्यप्रतिपादनमेकस्यैव सर्वोपायस्थानेऽवस्थितेः प्रदर्शनं च करोति । प्रपत्त्यर्थं कस्याप्यननुष्ठेयत्वेऽपि स्वतन्त्राधिकारेण किङ्करस्यास्य स्वाम्याज्ञातिलङ्घनं न युक्तमिति समर्थयामासुः ॥

आज्ञाविरोधिभिः स्वार्हप्रायश्चित्तपराङ्मुखैः ।
स्वाधिकारोचितः सर्वैः प्रत्यवायो दुरत्ययः ॥
आज्ञानुपालने तत्तत्प्रत्यवायनिवारणम् ।
स्वामिसन्तोषतः प्रीतिरिति लाभद्वयं स्थिरम् ॥
अनिच्छातो निवर्तेत स्वर्गाद्यं कर्मणां फलम् ।
अमर्यादस्य दुर्वारः प्रत्यवायोऽन्यहेतुकः ॥

(प्रपत्तेर्भक्त्यङ्गत्वपरगीताभाष्यतात्पर्यम्)

अस्याः प्रपत्तेर्भक्तियोगाङ्गतया व्याख्यानं प्रपत्तेः सकलफलसाधनत्वस्य प्रकृतभक्तियोगरूपफले उदाहरणम् ।

अत्र द्वितीययोजनायां दुष्करभक्तियोगपर्यन्तोपायस्थानेऽवस्थित उपायविशेषः, प्रथमयोजनायां बुद्धिविशेषपूर्वकं प्रपत्त्यनुष्ठानं कृतोपायस्य स्वयंप्रयोजनं कैङ्कर्यं चानुसन्धेयम् । किंच—

सुदुष्करेण शोचेद् यो येनयेनेष्टहेतुना ।
सस तस्याहमेवेति चरमश्लोकसंग्रहः ॥

भावाभावौ न धर्माणां प्रपत्तेरङ्गमिष्यते ।
स्वतन्त्रशिष्ट्या शक्येहा शेषाभावोऽधिकारगः ॥
ऋत्वनङ्गतया ये तु तदानीमननुष्ठिताः ।
स्वकाले स्वविधेरेव कार्यास्ते तद्वदत्र नः ॥

(त्यज धर्ममित्यादेः स्वरूपत्यागविधित्वनिरासः)

"त्यज धर्ममधर्मं च" इत्येतदपि काम्यनिषिद्धत्यागपरम् । "त्यज सत्यानृते अपि" इत्येतदपि आत्मानुभवैश्वर्ययोः प्रयोजनत्वेनानुद्देश्यतायां तत्परम् । विशिष्य वाचिक(धर्माधर्म)प्रतिपादनपरं वा । अस्य दौर्लभ्यं द्योतयितुम् उभे सत्यानृते त्यक्त्वा" इत्यनूद्यते । त्यागे कर्तृत्वमपि पराधीनमित्यनुसन्धानार्थं "येन त्यजसि तत् त्यज" इत्युच्यते ।

(उत्तराघालेपवादनिरसनम्)

एवम्भावात् आज्ञातिलङ्घनस्य कस्मिंश्चिदपि हेतावसति, केचित्, "तस्मात् त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च ॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसि ह्यकुतोभयम् ॥" इति निवृत्तेरपि त्यागवचनात् 'सर्वधर्मान् परित्यज्य' इत्यत्र सर्वशब्दस्यासंकोचार्थं निवृत्तिधर्माणामपि त्याज्यत्वात् तत्त्यागस्य च निषिद्धानां सर्वेषां यथाशक्त्यनुष्ठानरूपत्वात् प्रपन्नस्य बुद्धिपूर्वोत्तराघलेपो न भवतीति भ्राम्यन्ति । इदमत्यन्तं परिहसनीयम् । कथमिति चेत्—अलेपकाः पापे कृते लेपो न भवतीति ब्रुवन्ति । एते पापमवश्यमनुष्ठेयमिति

ब्रुवन्तीति सिद्धम् । इदम्, "भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् । अन्नाभिलाषी ग्रसते नानुबन्धमवेक्षते ॥" इत्युक्तन्यायमनुसरति । इदं सर्वमभिसन्धाय, "अहो बत महत् कष्टं विपरीतमिदं जगत् । येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥" इति **महर्षिर्निर्विण्णो** बभूव । एत-दुक्तरीत्याऽर्थे सति, यावज्जीवं स्थित्वा क्रियमाणानां **निषिद्धानुष्ठानानां** सर्वेषां प्रपत्त्यङ्गत्वात् साङ्गप्रपदनं सकृत् कर्तव्यमित्येतत् हीयेत । **प्रपत्तिक्षणे** सर्वेषां **निषिद्धानामनुष्ठानमशक्यम्** । तदा **यथाशक्ति-निषिद्धानुष्ठानपूर्वकं** प्रपत्तेः करणमपि न पश्यामः । एतत्पक्षे पापाना-**मग्नीषोमीयहिंसावत् पापशब्दवाच्यत्वाभावात् बुद्धिपूर्वोत्तराघमपि** संमेल्य "सर्वपापेभ्यो मोक्षयिष्यामि" इत्यस्य सकृत्व्याख्यानप्रकारोऽपि विरुद्धः । **यथाशक्ति त्रिविधापचाराः कर्तव्याः** प्रसज्येरन् । इदं **पूर्वानुष्ठानस्य, पूर्वसंप्रदायस्य, स्वानुष्ठानस्य,** किंचेदानीं दृश्यमा-नस्य **मुमुक्षूणामनुष्ठानस्य च विरुद्धम्** । एवं वदद्भिः स्वात्मानं कस्मिंश्चित् प्रपन्ने हिंसितुमुद्युक्ते, अयं **प्रपन्नधर्मः** किलेति तद्विषये **साभिनन्दनं स्थातुं युक्तम्** । **इदं न केवलमनन्तप्रमाणविरुद्धम्,** इहोपात्तानां वचनानां न विवक्षितमपि ।

**(निषिद्धनिवृत्तिरूपाणां धर्मत्वाभावः)**

**निषिद्धनिवृत्तिरूपाः** सर्वेऽपि **सर्वधर्मशब्देन संगृहीताः** इत्येतत् धर्मशब्दार्थाज्ञानेनोक्तमिति केचिदाचार्या निर्वहन्ति । **कथमिति** चेत्—निवृत्तिषु किञ्चित्फलसाधनरूपेण **नियमविशेषैः** सहानुष्ठिताः (निवृत्तयो) धर्मशब्दार्थाः । **सामान्यमहिंसादिमात्रं पापाभावमात्र-**

स्वातिरेकेण न धर्मशब्दमुख्यार्थो भवति । अतः फलविशेषनियम-विशेषयुक्ताहिंसादीनां त्यागो नाम फलानां नियमानां च त्यागः । निवृत्तिशास्त्रोक्तानां निवृत्तीनां त्यागे हेतुर्नास्तीति ।

नियमविशेषाद्ययुक्तस्याहिंसादिमात्रस्य धर्मशब्दार्थत्वेऽपि ब्रूमः ।

(धर्मत्वपक्षेऽपि समाधानम्)

अधर्मपरिहारेऽपि धर्मत्वेन विवक्षिते ।
स्यात् स्वतन्त्रविधेरेव नित्यं तस्य परिग्रहः ॥
आनुकूल्यपरित्यागं प्रातिकूल्यपरिग्रहम् ।
प्रपत्त्यङ्गं प्रतिज्ञातुं न शक्यं साधुसंसदि ॥
प्रपन्नमधिकृत्यैव सदाचारानतिक्रमः ।
प्रपत्त्यध्यायपठितः प्रतिसन्धीयतामिह ॥

(प्रवृत्तिंचेत्यादिवचनतात्पर्यम्)

एवं सिद्धे सति, 'चोदनां प्रतिचोदनाम् । प्रवृत्तिं च निवृत्तिं च' इत्यत्रापि प्रपत्त्यङ्गतया किमपि न कर्तव्यमिति प्रतिपाद्यत इत्येतावदेव । मुमुक्षुमात्रं प्रति, "त्रैवर्गिकांस्त्यजेद्धर्मान्" इत्युक्तन्यायेन फलान्तरसाधनत्वेन चोदितानां प्रवृत्तिनिवृत्तीनां तत्प्रयोजकशास्त्राणां च त्यागः प्रतिपाद्यत इति वा । अनेन, नित्यनैमित्तिकानां स्वरूपत्यागो विवक्षितश्चेत्, पूर्वोक्तसर्वविरोधोऽपि प्रसज्येत । इमं निष्कर्षं सत्त्वनिष्ठा विवेकिनः सन्तः स्वीकुर्वीरन् ।

(उक्तार्थस्य दिव्यसूर्यभिमतत्वम्)

इममर्थम्, "[1]अनाचरितानि न कुर्मः क्रूरोक्ति गत्वा न वदामः" इति, "[2]मा कृथा दुष्कर्मेति कृपां कुर्वन्" इति चानुजगृहुः। "[3]नीचेन मया कृतमपचारं गुणत्वेन स्वीकुरु जगत्पते" इत्येतस्यापि तात्पर्य-पर्यालोचने क्षन्तव्यमित्यपेक्षितत्वमेवेति प्रपन्नस्यापराधोपनतौ, "अज्ञा-नादथवा ज्ञानादपराधेषु सत्स्वपि। प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव केवलम् ॥" इत्युक्तरीत्या क्षमायाचनं युक्तम्।

प्रायश्चित्तान्तराशक्तः कालक्षेपाक्षमोऽपि वा।
पुनः प्रपद्यते नाथमभिन्दन् लोकसंग्रहम् ॥

(मुमुक्षूणां बुद्धिपूर्वोत्तराघासंभावितत्ववादनिरासः)

मुमुक्षुत्वादेव हेतोः बुद्धिपूर्वकनिषिद्धानि न भवेयुरितीयं वार्ताऽपि, "विद्यते ब्राह्मणे दमः" इतिवदौचित्यमूलो वाद इत्येव। मुमुक्षूणामेव बुद्धिपूर्वनिषिद्धेषूपनतेषु परिहाराणां करणं महर्षीणां सन्निधौ ऋषिप्रायाणां सन्निधौ च दृष्टं किल। अन्यथा उपासकानामपि मुमुक्षुत्वात् तेषामपि बुद्धिपूर्वोत्तराघस्यासंभावितत्वात्, "उत्तराघाश्लेषः प्रामादिकविषयः; बुद्धिपूर्वोत्तराघस्य क्षन्तव्यत्वं नास्ति"ति व्यवस्था-करणमयुक्तं स्यात्। उपासकस्य प्रपन्नस्य च वर्णाश्रमजातिगोत्र-

1 शेय्यादन शेय्योम् तीक्कुरलै शेन्रोदों—तिरुप्पावै 2

2 शेय्येल् तीविनै येन्ररुल्शेय्युम्—तिरुवाय्मोऴि 2-9-4

3 नायिनेन् शेय्दकुट्रम् नट्रमाकवे कोल् ञालनाथने--तिरुच्चन्द 111

प्रवरचरणकुलदेशकालावस्थागुणसमयाद्युपाधिकृतयोक्तानां निषिद्धानां परिहरणे विशेषो नास्ति। निषिद्धेषु प्रायश्चित्तस्य यथाधिकारभावाद्वैषम्यमस्ति।

"[1]भद्रासास्तत्र कुर्युः; कृतवन्तश्चेत् साधु कृतवन्तः" इत्येतदप्यपराधसंभवस्य लिङ्गम्। अत्र "कृतवन्तश्चेत् साधु कृतवन्तः" इत्यस्य, 'प्रामादिकस्योत्पत्तौ वयमेव क्षमिष्यामहे; बुद्धिपूर्वकस्योत्पत्तौ तैः क्षमायामयाचितायामपि शिक्षाविशेषैर्वयं शमयिष्यामः, कथंचिदपि न त्यक्ष्यामः' इति तात्पर्यम्। "साधु कृतवन्त इति वादिनमिव" इत्युक्तेः 'नेदं वस्तुवृत्त्या साधु' इति सूचितम्।

(प्रपन्नानामपराधसंभवे प्रायश्चित्तकर्तव्यत्वम्)

"अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत्। प्रायश्चित्तिरियं साऽत्र यत् पुनः शरणं व्रजेत्॥" इत्युक्तत्वात्, बुद्धिपूर्वापराधे निग्रहेच्छानोदियादिति वक्तुमयुक्तम्। सर्वशक्तेर्निग्रहेच्छायामनुदितायां क्षमायाः अयाचने (अघस्य) फलसिद्धिर्नेत्यपि वक्तुमशक्यम्। प्रीत्यभावमात्रं जायेतेत्येवेत्युक्तौ, स्वस्य तेनकस्यापि प्रत्यवायस्याभावे पुनःप्रायश्चित्तं नापेक्षितम्। स्वस्यापि प्रीत्यभावो जायेतेत्येवेति चेत्—प्रत्यवायः सिद्धः। तत्रापि अतीतस्य विषये प्रायश्चित्तं नापेक्षितम्। अग्रेऽप्यनुवर्तमानतया जनिष्यमाणस्य प्रीत्यभावस्यार्थे प्रायश्चित्तमित्युक्तौ एतत्तुल्ययोगक्षेमत्वात् यथासंभवं श्रुत्यादिसिद्धा उपक्लेशा अपि भवेयुरिति भीतेन प्रायश्चित्तं कर्तुं युक्तम्। अत उपक्लेशानाम्, करणाशक्ति—

---

[1] पञ्जडियारदु शेय्यार् शेय्दारेल् नन्रु शेय्दार्—पेरियाऴ्वार् 4-10-2

ज्ञानसंकोच— दुःखादिमूलकयोरैहिकभगवदनुभवविच्छेदसंकोचयोः, अनियतायुषामायुर्वृद्ध्या परमफलविलम्बस्य चाप्रसङ्गार्थं पुनः-प्रपदनं क्रियते । इदं नापेक्षितमिति वदतामपि निषिद्धक्षमान्यायेन अस्यापि क्षमाविषयत्वादिदमेवोचितम् । बुद्धिपूर्वोत्तराघस्य कृते पूर्वं प्रपत्तिः कर्तुमयुक्तेत्येतमर्थम् , पूर्वोद्दिष्टफलातिरेकेण फलान्तरार्थं प्रपत्त्यन्तरकरणे, न विरोध इत्येतमर्थं च पूर्वमेव समर्थितवन्तः स्मः ।

इत्थं भगवदाज्ञासिद्धसदाचारानुपालनेऽप्यविरोधो द्रष्टव्यः ॥

प्रपन्नस्य निषिद्धैरप्यलेपमुपपादयन् ।
यथाभिमतसद्वृत्तनिष्ठेभ्यः किमसूयति ॥
आज्ञातिलङ्घने यस्य रक्षकत्वं न भज्यते ।
आज्ञानुपालने तस्य कथं तदुपरुध्यते ॥
न चाचारं विना किञ्चित् कैङ्कर्यमुपपद्यते ।
न हि शौचमकृत्वैव समाराधनमर्हति ॥
"आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ।"
इति पञ्चमवेदेऽपि सर्वशास्त्रार्थ ईरितः ॥
प्रपत्तिप्रतिसन्धानमाप्तैर्यदुपदिश्यते ।
तत् स्वाधिकारनियतहानोपादानसिद्धये ॥
प्रतिसन्धानतो हि स्यादधीपूर्वेष्वलेपधीः ।
बुद्धिपूर्वेष्वपि पुनः प्रपत्तेरेव संग्रहः ॥
अतो निरपराधेन वर्तितव्यं कृतात्मना ।
अपराधप्रसङ्गे च पुनःप्रपदनं क्षमम् ॥

आदौ, 'निरपराधेन भाव्यम्' इत्युद्दिश्य प्रपत्तिं कृतवतः, पुनरेतदर्थं प्रपत्त्यन्तरं कृतवतश्चोत्तरकृत्यं निरपराधमेव प्रवर्तेत ॥

(पुराणादिविरोधपरिहारः)

इतिहासपुराणेषु किञ्चिद्वृत्तान्तदर्शनमात्रमवलम्ब्य, वचनविरोधं चानादृत्य **भागवतबुद्धिपूर्वोत्तराघं** क्षन्तव्यमिति केचिदाहुः । इदमपि **तत्तत्प्रकरणाभिप्रायापरिज्ञाननिबन्धनम्** । **महाराजस्यापि** समयातिलङ्घनमात्ररूपेऽपराधे भगवतोऽन्तःकरणे शोकाभिभवात् प्रतिभासिते, "न च संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥" इति वचः श्रुत्वा वालस्वामिनि स्वामिनैव यथा शमनीयः स्यात् तथा क्रोधं कृत्वा किष्किन्धां गतवति सति, "कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥" इत्यैन्द्र**व्याकरणपण्डितो महाराजमुपदिदेश** किल । तावति, 'महाराजेनापि स्वीकृत्य, "यदि किञ्चिदतिक्रान्तं विश्वासात् प्रणयेन वा । प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति" इति विज्ञापयितव्यं संवृत्तम् । तदा वालस्वामिनाऽपि स्वेनाधिकतयोक्तानां वार्तानां कृते, "यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् । मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसि" इति क्षमा याचनीया संवृत्ता । इत्थं **प्रपन्नस्य प्रारब्धकर्मविशेषैर्बुद्धिपूर्वाघमपि** संभाव्यते । तेषां संभवेऽनुतापेन क्षमायाचनं कर्तव्यम् ।

(न धर्मनिष्ठोऽस्मीत्यादिवचनतात्पर्यम्)

"न धर्मनिष्ठोऽस्मि", "[1]स्नानोत्तरं त्रयाणामनलानां परिचरणमित्येतल्लक्षणकं ब्राह्मण्यं विनाशितवानस्मि" इत्यादीन्यपि कर्मयोगादिशक्त्यभावं प्रतिपादयन्तीत्येतावदेव ; न तु यथाशक्ति भगवदाज्ञानुपालनस्य त्यागं वदन्ति । अतः प्रपन्नेनापि ब्राह्मण्यादिविशिष्टशरीरत्यागपर्यन्तं तत्तज्जात्यनुरूपं भगवदाज्ञानुपालनं कर्तव्यम् ॥

आहार-ग्रह-मन्त्रार्थजात्यादीनियमैर्युतः ।
कुर्याल्लक्ष्मीशकैङ्कर्यं शक्त्याऽनन्यप्रयोजनः ॥
आचारात्मगुणोपायपुरुषार्थविशेषतः ।
अधिकारिणि वैशिष्ट्यं प्रकृष्येतोत्तरोत्तरम् ॥

अयं प्रभावनियमो रहस्यत्रये ऐश्वरप्रशासितृत्वादिगुणानुबन्धत्वेनानुसंधेयः ॥

(अधिकारार्थसंग्राहिका गाथा)

(गाथा) कृपया ध्रियमाणान् स्वदासान् स्वस्मादप्यधिकमाद्रियमाणस्य यथार्थकृपया विस्मयनीयस्य सत्योक्तेस्तात्पर्यं जानन्तो वेदनीतिमार्गस्य विनाशं नेच्छेयुरित्यस्मद्देशिकास्तत्त्वमवोचन् ॥

---

कुलित्तुमून्रलैयोम्बुक्कुरि कोणन्दणमै तन्नै योलित्तिट्टेन् तिरुमालै 25
नकवाल् तरिक्किन्र तन्नडियारकलैत्तन् तिरत्तिल्
मिकवादरं शेय्युं मेय् यरुळ् वित्तकन् मेय्युरैयिन्
अकवायरिन्दवरारणनीति नेरि कुलैतल्
उकवारेन वेङ्गळ् देशिकरुण्मै युरैत्तनरे.

चातुर्वर्ण्य-चतुर्विधाश्रममुखे भेदे यथावस्थिते
वृत्तं तन्नियतं गुणानुगुणया वृत्त्या विशिष्टं श्रिताः ।
त्यागोपप्लवनित्यदूरशरणव्रज्याविधौ कोविदा—
श्चिन्तामभ्युपगन्तुमन्तिमयुगेऽप्येकान्तिनः सन्ति नः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
प्रभावव्यवस्थाधिकारः पञ्चविंशः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## प्रभावरक्षाधिकारः २६

शिलादेः स्त्रीत्वादिर्विपरिणतिरस्त्वद्भुतमिदं
ततोऽप्येतच्चित्रं यदुत दहनस्यैव हिमता ।
तृणस्यैवास्त्रत्वं रिपुषु निहतेरेव हितता
पदत्रेणैवेद्धं त्रिभुवनपरित्राणमिति च ॥

उपायप्रभावव्यवस्थामवोचाम । अथोपायप्रभावस्य संकुचितत्व-
ज्ञानेन जायमानान् दोषान् परिहरामः ॥

(सिद्धान्तानुवादः पूर्वपक्षपीठिका)

"अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इति न्यायेन, "उपाय-भक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी । साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ॥" इत्युक्तत्वात् प्रारब्धकर्माण्यप्यभिभूय स्वफलप्रदाने समर्थां प्रपत्तिमनुष्ठितवतो विद्यान्तरन्यायेनोत्तरपूर्वाघानि, एतद्विषयां प्रत्यसाधारणसामर्थ्येन प्रारब्धकर्मफलविषये जाताया आर्तेस्सीमामनुरुध्य क्षणान्तर-दिवसान्तर-जन्मान्तरानुवृत्तिश्च नश्येयुरिति "मा शुचः" इति वाक्यस्याभिप्रायः ॥

(प्रपत्तेः प्रारब्धनिवर्तकत्वाभावशङ्कानुवादः)

अस्यार्थस्य तात्त्विकत्वे, प्रारब्धकर्मविशेषफलरूपेण जायमानानां दुःखानां दुःखकारणीभूतकर्मार्जनस्य च निवृत्त्या भवितव्यं किल ॥ आर्तेन सता पुरुषेणार्थितत्वे एव दातव्यमिति चेत्—आनुषङ्गिकानां पङ्क्तिपावनत्वादीनामिवानभिसंहितानामपि हितैषिणेश्वरेण दाने कः प्रतिबन्धः ? एवंकरणस्यादर्शनात् शोकविषया अंशाः सर्वेऽपि निःशेषं प्रपत्त्या नश्येयुरित्येतत् प्रपत्तिप्रभावातिशयविषयकं स्तुतिमात्रम्—इति केचिदस्याः प्रभावं सावधिकं पश्यन्ति ।

अस्योत्तरं यथा—अनुग्रहशीलः, आश्रितानां प्रपत्तिवाक्यो-च्चारणप्रारम्भे झटिति मोक्षप्रदानार्थं त्वरमाण ईश्वरः एतदीयेच्छानुसारेण किञ्चित्कालमत्र स्थापयितुमिच्छति । सत्येवम्, अत्यन्तानि शुद्धसुखानि दुःखप्रसङ्गरहितान्यनुभावयेच्चेत्, अस्येयमाशा कदाचिदपि नोपरमेत ; भगवदनुभवे भोग्यताबुद्धिरपि पल्लविता न स्यात् ।

अतः, "यस्यानुग्रहमिच्छामि धनं तस्य हराम्यहम् । बान्धवैश्च वियोगेन सदा भवति दुःखितः ॥ तेन दुःखेन संतप्तो यदि मां न परित्यजेत् । तं प्रसादं करिष्यामि यः सुरैरपि दुर्लभः ॥" इत्युक्तरीत्या दुःखादिकारणभूतान् प्रारब्धकर्मविशेषान् सन्निहितकशादीनिव सहकारित्वेन स्वीकृत्य पित्रादिभिरिव शिक्षकेणेश्वरेण केषांचित् कठिनप्रकृतीनां विषये क्रियमाणोऽनुग्रहविशेषोऽयमित्यनुसन्धातुमुचितम् । कस्यचिद् व्याधिविशेषस्य विषये, किमयमस्तीति राज्ञि पृष्टवति सति, सोऽपि कश्चिदुपाध्यायोऽस्तीति भट्टा अनुजगृहुः । आयुर्यथा न वर्धनीयं स्यात् तथानियतायुषो जीवनकाल एवोद्वेगजननार्थम् , अनियतायुषामायुष्कामीयादिभिर्वर्धनेच्छाया अभावार्थं च दुःखादयोऽस्योपाध्याया भवन्ति । इदं श्रीकूरेशपर्यन्तेषु प्रसिद्धम् ।

अपचाराणां तत्फलानां च केषांचित् प्रदर्शनपूर्वकं तिरोधापनमपि, "[1]सर्पेण सहैकस्मिन् गृहे निवासवदसहमानं मनश्चलेन्मम पद्मलोचन" इति निर्वेदपूर्तिं झटित्युत्पाद्य, स्वेष्टसंसारनिवर्तने झटित्यस्यापीच्छोत्पादनार्थमित्येव । अत्र प्रतिकूलानुभवांशो दुष्कर्मफलम् । अस्य शिक्षणरूपत्वं प्रायश्चित्तप्रवृत्तिजनकत्वं चोपायफलम् । अत्र कानिचित् शिक्षणादीनि प्रारब्धसुकृतविशेषफलान्यपि स्युः । प्राणार्थिने पतिताय काकाय प्राणप्रदानात् तत्रापि प्रपत्तिफलं पूर्णम् । दुष्प्रकृतेरस्य काकस्य शिक्षारूपेणैकस्याक्ष्णो विनाशनमपि न निग्रहः, किं तु अनुग्रहविशेष एव ।

---

1 पाम्बोडोरुकूरैयिले पयिन्रारप्पोल् ताङ्गुमादुहं तल्लुमेन् तामरैक्कण्णा. पेरियतिरु-11-8-3

अतः आभूतसंप्लव-नरकवासप्रयोजक-क्षणकृतपापकर्मप्रभाव-भूतभगवन्निग्रहविशेषाभ्युपगमवत्, "दुर्गसंसारकान्तारमपारमभिधावताम्। एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः॥" इति, "एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः। दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय॥" इति च सुकृतप्रणामविशेषप्रभावाभ्युपगमवत्, "सकृदेव प्रपन्नाय", "अथ पातकभीतस्त्वम्", "कुयोनिष्वपि संजातो यः सकृच्छरणं गतः" इत्याद्युक्तरीत्याऽस्याः प्रपत्तेः प्रभावोऽपि शास्त्रोपप्लवप्रसङ्गरहितविषये असंकोचेनानुसंधातुं युक्तः॥ "तं मातापितृहन्तारमपि पाति भवार्तिहा" इत्यस्याप्युत्तराघविषयत्वाभावे नास्त्युपप्लवः। उत्तराघविषयत्वे निस्तारक्रमान् पूर्वमेवावोचाम। "शरणं च प्रपन्नानां तवास्मीति च याचताम्। प्रसादं पितृहन्तॄणामपि कुर्वन्ति साधवः॥" इत्यादीन्यपि एवं सुघटितानि॥

अस्मद्दर्शने निष्ठावतां मुमुक्षूणां कर्मज्ञानभक्तिप्रपत्तिषु यया कयाचिच्छास्त्रीयमर्यादया भगवत्प्रवणीभूतानां, वर्तमानसंन्नाद्यवस्थासु अर्थसङ्गादिरूपाणां केषाञ्चिद् व्याधीनां निश्शेषशमनाभावमात्रं निमित्तीकृत्य एते प्राकृतवत् असंभाष्या इति केचित् वैराग्यमात्रप्रधाना आचक्षते। इदमपि भगवच्छास्त्रादिस्थैः खिन्नवृत्त्यादिप्रकरणैः परिहार्यम्। "डम्भिहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत्", "ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम्। ते वै पाषण्डिनो ज्ञेयाः सर्वधर्मबहिष्कृताः॥",

"पुंसां जटाभरणमौण्ड्यवतां वृथैव" इत्याद्युक्तरीतिकानां मार्गभ्रष्टानां विषये वक्तुमुचिता वार्ता सन्मार्गे पदस्खलनवतां विषये वक्तुमयुक्ता खलु। भागवतेषु ऊन-हीन-परिस्रस्त-नष्टविषयेषु तारतम्यस्य विहितत्वेऽपि एकान्त्ये अभग्ने सति, अन्ते केनचिदुपायेनेमे सिद्धार्था भवेयुः; एतद्विषयेऽप्यपचारो न युक्त इति किल शास्त्रेण विधीयते। "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते। स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्॥" इति, "पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते। न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति॥" इति च **कर्मयोगे** वर्णितः **प्रभावो भक्तिप्रपत्त्योः कैमुतिकन्यायसिद्धः** किल। "अपि चेत् सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः॥" इति, "अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन। मुच्यन्ते पातकैः सर्वैः पद्मपत्रमिवाम्भसा॥" इति **सर्वेश्वरः** स्वयमेवार्जुनं **धर्मपुत्रं** च प्रति अनुजग्राह। तथैव **श्रीपुण्डरीक-नारदसंवादे**ऽपि, "चीरवासा जटी वा स्यात् त्रिदण्डी मुण्ड एव वा। भूषितो वा द्विजश्रेष्ठ न लिङ्गं धर्मकारणम्॥ ये नृशंसा दुरात्मानः पापाचाररताः सदा। तेऽपि यान्ति परं स्थानं नरा नारायणाश्रिताः॥", "लिप्यन्ते न च पापेन वैष्णवा वीतकल्मषाः। पुनन्ति सकलं लोकं सहस्रांशुरिवोदितः॥", "जन्मान्तरसहस्रेषु यस्य स्यात् बुद्धिरीदृशी। दासोऽहं वासुदेवस्य सर्वलोकमहात्मनः॥ स याति विष्णुसालोक्यं पुरुषो नात्र संशयः। किं पुनस्तद्गतप्राणाः पुरुषाः संयतेन्द्रियाः॥" इति **भगवत्प्रवणानामनुवृत्तदोषत्वेऽपि यथार्हप्रायश्चित्त-**

मुखेन मोक्षसिद्धौ संशयो नास्तीत्येतमर्थम्, निर्दोषाणां कैमुतिकन्यायेन मोक्षसिद्धिं च प्रतिपाद्य, "अश्वमेधशतैरिष्ट्वा वाजपेयशतैरपि। न प्राप्नुवन्ति सुगतिं नारायणपराङ्मुखाः" इति भगवद्विमुखानामनन्तैरुत्कृष्टसुकृतैरपि सुगतिर्नास्तीति महर्षिरेतान् अर्थान् प्रपञ्चयामास। "यो ह्येनं पुरुषं वेद देवा अपि न तं विदुः" इत्युक्तत्वात् भगवज्ज्ञानवतः प्रभावो नित्यसूरिभिरप्यपरिच्छेद्यः किल।

अतोऽनुवृत्तबुद्धिपूर्वदोषाणां भागवतानामुपक्लेशादिसंभवे अवज्ञादीनि न कार्याणि। "अवैष्णवनमस्कारादवमानाच्च केशवे। वैष्णवे परिवादाच्च पतत्येव न संशयः॥", "यतिनिन्दापरो नित्यं वैष्णवानवमत्य तु। अध्यात्मविमुखः सोऽस्तु बिसस्तैन्यं करोति यः॥ अन्तर्दुष्टो बहिःशान्तो ब्रह्मविद्द्वेषतत्परः। कर्मनिन्दापरः सोऽस्तु बिसस्तैन्यं करोति यः॥ नित्यानुष्ठानसंयुक्तान् अध्यात्मज्ञानदुर्बलान्। व्यामोहयतु दुर्बुद्धिर्बिसस्तैन्यं करोति यः॥" इति ह्युक्तम्॥

(भगवदपचारादीनां तीव्रतमत्वम्)

श्रीभाष्यकारैरकृत्यकरणकृत्याकरणैः सह भगवदपचारादीनां समुच्चित्योपादानं गोबलीवर्दन्यायेन भगवदपचारादीनि तीव्राणीति ज्ञापनार्थम्। सर्वेषां भगवदपचाररूपत्वेऽपि मुखभेदविवक्षया केषाञ्चिदिह भागवतापचारत्वोक्तिः। यान् कांश्चिदपचारान् बहिर्विषये करोति, तथाविधा एव भगवद्भागवतविषये विषयस्वभावात् राजद्रोहादिवत् अतिशयितदण्डहेतवो भवन्तीति विशेषोपादानस्याभिप्रायः।

(निकर्षबुद्धेरपि भागवतापचारत्वम्)

नरकं प्रति क्षेत्रान्तरवर्धनीयसस्यार्थबीजावापक्षेत्रवत् स्थिते संसारमण्डले सन्मार्गगामिषु दुर्लभेषु सत्सु, भगवद्विषयमाश्रित्याधिकारानुरूपमुक्तिमार्गप्रथमपर्वभूतकर्मयोगादिपर्वसु स्थितानां विषये निहीनत्वबुद्धिरपि भागवतापचारः। "न शब्दशास्त्राभिरतस्य मोक्षो न भोजनाच्छादनतत्परस्य। न चैव रम्यावसथप्रियस्य न लोकचित्तग्रहणे रतस्य॥" इत्यादिष्वपि, भगवत्प्रावण्यं विनैव, "शिश्नोदरे येऽभिरताः सदैव स्तेयानृता वाक्परुषाश्च नित्यम्। व्यपेतधर्मा इति तान् विदित्वा दूरात् देवाः संपरिवर्जयन्ति॥" इत्युक्तरीत्या **बाह्यविषयप्रावण्यमेव** वहतां मोक्षो नास्तीत्युच्यते। "पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम्। तेषां तत् परमं ब्रह्म दूरात् दूरतरे स्थितम्" इत्यादिष्वयमर्थः सिद्धः। "तन्मयत्वेन गोविन्दे ये नराः न्यस्तचेतसः। विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके॥" इत्यादीनि **भगवत्पराणां विषयत्यागिनां** विलम्बो नास्तीति प्रतिपादयन्ति।

(भागवतवेषधारिणामपि वेषत्वज्ञानपर्यन्तमादरणीयत्वम्)

आन्तरभावं विनैव गोचर्मणा स्वमावृत्य व्याघ्रस्याऽऽकामतो नीत्या भागवतभावनां कृत्वा पर्यटतामपि हार्दस्थितिज्ञानपर्यन्तम्, उपरिचरादिभिरसुरादीनामादरणवत् रूपनामपुरस्कारेणाऽऽदरणं युक्तम्। एवंविधान् शैलूषवृत्तीन् अभिप्रेत्य, "न लिङ्गं धर्मकारणम्", "फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादनम्। न नामग्रहणेनैव तस्य वारि प्रसीदति॥" इत्युच्यते।

(भगवद्द्वेषहीनानामेव भगवन्नामग्रहस्योत्तारकत्वम्)

"आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः। संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥" इति, "अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः। पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥" इति, "सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा। वैकुण्ठनामग्रहणमशेषाघविनाशनम् ॥" इति, "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः। अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥" इति, "एतावताऽलमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम्। आकुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्तिम् ॥" इति, "[1]गाढलग्नेषु दृढेषु पापेषु स्थित्वापि त्र्यक्षरनाम्ना क्षत्रबन्धुस्तत्रैव परां गतिं दृष्टवान्। एतावन्मात्रेण दासभूतानां विषयेऽनुकम्पमानमस्मद्रङ्गनाथमतिव्यामुग्धं लब्ध्वाऽपि" इति चोच्यमानानि इमानि वचांसि सर्वाण्यपि भगवत्प्रद्वेषाभाववतः आस्तिक्ये मन्देऽपि, बालादिवदर्थज्ञानाभावेऽपि, उत्स्वप्नायितवदभिसन्ध्यभावेऽपि, संकेतपरिहासादिसंबन्धादभिसन्ध्यन्तरसत्त्वेऽपि, प्रयोजनान्तरसङ्गे सत्यपि, दोषान्तरेषु सत्स्वपि संकीर्तनं पावनतममिति प्रतिपादयन्ति। न तु भगवत्परिवादाद्यर्थतया भगवन्नामसंकीर्तने कृतेऽपि पापं नश्यतीति प्रतिपादयन्ति। भगवत्परिवादादीनि पातकानि किल परिगणितानि सन्ति। "ये द्विषन्ति महात्मानं न स्मरन्ति च केशवम्। न तेषां

---

1 मोय्त्तवल्विनैल् निन्र् मूत्रेड्चुडैयपेराल् कत्तिरबन्दु
मत्रे पराङ्गति कण्डुकोण्डान् इत्तनैयडियरानार्किरङ्गुं
नम्मरङ्गनायपित्तनैप्पेट्रुम्—तिरुमालै 4

पुण्यतीर्थेषु गतिः संसर्गिणामपि ॥" इति, "यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम् । यो विष्णुं सततं द्वेष्टि तं विद्यादन्यरेतसम् ॥" इत्यूचुः किल । "गोप्यः कामात् भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबन्धाद्वृष्णयो यूयं स्नेहात् भक्त्या वयं प्रभो ॥" इत्युक्तरीत्या यया कयापि विधया संबन्धिनोऽप्युज्जीवन्तीत्येतत्, "यया कयाऽपि विधया संबन्धः स तु पावनः" इत्येतच्च पूर्वसुकृतविशेषनियताधिकारिपरमित्येतत् एतत्**पूर्वापरवृत्तान्त**प्रतिपादकेषु **पुराणेषु** प्रसिद्धम् ।

(प्रातिकूल्यशून्यानामेव भगवत्क्षेत्रवासादेर्हिताव‍हत्वम्)

एवं **भगवत्क्षेत्रे शरीरविश्लेषादयो मोक्षोपकारका** इति वचनमपि पश्चादिवद्धाऽपि **प्रातिकूल्यरहितानामुपकारका** इत्येवम्परम् । अन्यथा भगवत्प्रातिकूल्यं कर्तुं प्रवृत्तानामपि मृतानां मोक्षसंभवः प्रसज्येत । "दुष्टेन्द्रियवशाच्चित्तं नृणां यत् कल्मषैर्वृतम् । तदन्तकाले संशुद्धिं याति नारायणालये ॥" इति श्रीसात्त्वतसंहितावचनमपि **क्षेत्रवासादितत्पराणां शास्त्राविरुद्धशब्दादिश्रावण्येन पूर्वं भगवत्साक्षात्काराद्यभावेऽपि अन्तिमदशायां** संप्रबोधो भवतीत्येतावन्मात्रे तत्परमित्येतत् **प्रकरणादिसिद्धम्** । "यं योगिनः प्राणवियोगकाले यत्नेन चित्ते विनिवेशयन्ति" इत्युक्त**स्वयत्नापेक्षां** विनैव **अन्तिमदशायामेषां** संप्रबोधो भवतीत्येष विशेषः । अयं "केवलं मदीययैव दयया अतिप्रबुद्धः" इति **प्रपन्नविषयेऽपि** प्रदर्शितः । **अतो भगवत्प्रतिकूलानां प्रातिकूल्यशेषभूतानि रूपनामक्षेत्रवाससंकीर्तनादीनि** रक्षकाणि न भवन्ति । **पुण्यक्षेत्रेषु** क्रियमाणानि प्रतिकूलाचरणानि अत्यन्तं बाधकानी-

त्ययमर्थो बहुशास्त्रसिद्धः। अयमपि भगवत्प्रभावः। भगवत्प्रवणानाम्, वृत्र-क्षत्रबन्धुप्रभृतीनामिव स्थितानि आनुकूल्यान्येव सर्वान् दोषान् केनचिदुपायेन विनिवर्त्योत्तारकाणि भवन्ति। अतः स्वसंकल्प-नियततयाऽवस्थितेन येन केनचिद् व्याजेन सर्वेश्वरः स्वरूपप्राप्त-मुक्तैश्वर्यदानार्थं संकल्पितेषु अधिकारिषु विद्यमानानां दोषाणां निवृत्तिं कुर्यात्।

(प्रपन्नवर्तनप्रकारः)

"एकः शास्ता न द्वितीयोऽस्ति शास्ता" इति, "प्रशासितारं सर्वेषाम्" इति, "शास्ता विष्णुरशेषस्य" इति च प्रतिपाद्यमानः स एवेति संप्रबुध्य, "रागादिदूषिते चित्ते नास्पदी मधुसूदनः। न बध्नाति रतिं हंसः कदाचित् कर्दमाम्भसि॥" इत्याद्यवलोकनेन, निकर्षबुद्धित्याग-पूर्वमेष्वधिकारिषु विद्यमानं गुणांशं मरुभूमौ जललाभवदभिनन्द्य, "कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते। तदेवापहरत्येनं तस्मात् कल्याणमा-चरेत्॥" इत्युक्तरीत्या करणत्रयेणापि स्वयं सन्मार्गमपरित्यज्य, "संसार-विषवृक्षस्य द्वे फले ह्यमृतोपमे। कदाचित् केशवे भक्तिस्तद्भक्तैर्वा समागमः॥" इतीह जीवनकालस्य प्रयोजनत्वेन निर्दिष्टं परमपुरुष-समाश्रयणरूपां श्रियं वहद्भिर्लघुमहामनुष्यैः सह समागमरूपं श्रेष्ठं दुर्लभं पुरुषार्थं श्रीमत्या कृपया प्राप्तवन्तः स इति कृतार्थैः, "[2]श्रीवल्लभं समाश्रितवतामस्माकं कुतः स्युः क्रूरकर्माणि" इति व्यवसितैः,[3] "रक्षति

2 तिरुमाल्तलैक्कोण्ड नङ्गट्कॆङ्गे वरुं तीविनै—तिरुविरुत्तम् 88

3 माल्हन्नानाड़ियानराल् कुरैयुडैयम—तिरुवाय् 10-4-3

चक्रवर: केन हेतुना न्यूनतां वहेम" इत्युक्तरीत्या परमपदे प्राप्स्यमानस्य परिपूर्णकैङ्कर्यसाम्राज्यस्य कृते इह पुष्पापीडधारिभि: स्थातुं युक्तम् ।

एवं व्यवस्थित: प्रभावो रहस्यत्रये फलनिर्देशप्रदेशेषु आनुषङ्गिकतयाऽनुसन्धेय: ॥

(अधिकारार्थसंग्राहिका गाथा)

सत्यं वदत्सु वेदेषु समुच्छ्रितस्योत्तमस्यौदार्यं परिच्छेत्तुमशक्यमित्यत:, एत्य चरणावाश्रयतामपकर्षे सत्यपि उत्कर्ष: परिच्छेदवचसामभूमिरिति तत्त्वमुपदिदिशु: पक्षपातमन्तरा महान्त: ।

रागद्वेषमदादिकैरिह महारक्षोभिरक्षोभिते
नित्ये रक्षितरि स्थिते निजभरन्यासाभिधानं तप: ।
यत् कक्षीकृतमत्यशेत विविधान् धर्मान् अधर्मद्रुह:
तद्भूमार्णवलेशवर्णनमपि प्राचां न वाचां पदम् ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीमद्रहस्यत्रयसारे प्रभावरक्षाधिकार: षड्विंश:

**इति स्थिरीकरणभागो द्वितीय: ॥**

श्रीमते निगमान्तमहादेशिकाय नम:

---

4 उण्मैयुरैक्कुमरैगलिलोङ्गियवुत्तमनार्
वण्मैयलप्परिदादलिन् वन्दु कडलॆपणिवार्
तण्मै किडक्कत्तरमलवॆन्रवियप्पिलदाम्
उण्मैयुरैत्तनरोरन्तविर वुयर्न्दनरे.

श्रीः

पदवाक्ययोजनाभागः ३

तत्र मूलमन्त्राधिकारः २७

तारं पूर्वं तदनु हृदयं तच्च नारायणाये-
त्याम्नायोक्तं पदमवयतां सार्थमाचार्यदत्तम् ।
अङ्गीकुर्वन् अलसमनसामात्मरक्षाभरं नः
क्षिप्रं देवः क्षिपतु निखिलान् किङ्करैश्वर्यविघ्नान् ॥

कल्याणमावहतु कार्तयुगं स्वधर्मं
प्रख्यापयन् प्रणिहितेषु नरादिकेषु ।
आद्यं कमप्यधिगतो रथमष्टचक्रं
बन्धुः सतां बदरिकाश्रमतापसो नः ॥

यदन्तस्स्थमशेषेण वाङ्मयं वेदवैदिकम् ।
तस्मै व्यापकमुख्याय मन्त्राय महते नमः ॥

इह मूलमन्त्रसंवृतमर्थमशेषेण कश्चिदनुभवति ।
स्फटिकतलनिहितनिधिमिव देशिकदत्तेन चक्षुषा जन्तुः॥

(मङ्गलाचरणम्)

सत्त्वस्थैरनुसन्धेयान् सारतमार्थान् तेषां स्थिरीकरण-प्रकारांश्च प्रत्यपीपदाम । एषां सर्वेषां प्रकाशके रहस्यत्रये पदवाक्य-योजनाप्रकारान् ब्रूमः ॥

(रहस्यत्रयतात्पर्यम्)

तत्र प्रथमतः श्रीमन्त्रः **परशेषतैकरसस्वरूपादीनि** प्रबोध्य **तन्मुखेन समस्तप्रतिबन्धकनिवृत्तिपूर्वकपरमपुरुषार्थप्राप्तौ रुचिं** त्वरां च संवर्ध्य **उपायाधिकारपूर्तिमुत्पादयति**। इत्थमधिकारिभूतस्य **फलापेक्षापूर्वकोपायविशेषानुष्ठानप्रकारं द्वयं विशदं प्रकाशयति**। **इममुपायविशेषं विधत्ते चरमश्लोकः**। एषु त्रिषु पृथक् पृथक् सर्वेष्वर्थेषु **शाब्दतया आर्थतया** च द्रष्टुं शक्येष्वपि, एकैकस्मिन् एकैकस्य तात्पर्यं भवति।

(त्रयाणां रहस्यानां क्रमेण विवरणिविवरणभावः)

श्रीमन्त्रे **प्रथमपदे प्रथमाक्षरे संक्षिप्तं** शरण्यपरतत्त्वम्, तत्र **मद्ध्यमतृतीयपदयोः प्रतिपन्ने उपायोपेये** च विशदीकरोति द्वयम्। अत्र "प्रपद्ये" इति **पदे उत्तमेन विवक्षितमधिकारिविशेषम्, अर्थसिद्धमुपायान्तरनैरपेक्ष्यम्, उपेये नमश्शब्दसंक्षिप्तं विरोधिनिवृत्त्यंशं** च प्रकाशयति **चरमश्लोकः**॥

(त्रयाणां धारकपोषकभोग्यरूपता)

एते त्रयोऽप्यस्माकं **ज्ञानानुष्ठानफलनिदानभूताः** सन्तो **धारकपोषकभोग्याः**। "व्यक्तं हि भगवान् देवः साक्षान्नारायणः स्वयम्। अष्टाक्षरस्वरूपेण मुखेषु परिवर्तते॥" इत्युक्तरीत्या **देशिकजिह्वास्थितः शिष्यहृदयगुहान्धकारं विनाश्य परशेषतैकरसं परिशुद्धस्वरूपं** प्रकाश्य **सत्तालाभस्य** साधक इति श्रीमन्त्रो **धारकः**। **चरमोपाय**प्रवृत्त्यौपयिक**ज्ञानोपचयहेतुत्वात्**—**श्रोतव्यशेषो** यथा

न स्यात् तथा—उपायोपदेशपर्यवसानभूतश्चरमश्लोकः पोषकः। सकृदुच्चारणेन परमपुरुषार्थहेतुः सन् सदाऽनुसन्धानेन कृतार्थतापादकमिति द्वयं भोग्यम्।

(श्रीमन्त्रे ऋष्यादीनां तत्तत्संप्रदायावगम्यता)

एषु श्रीमन्त्रस्य ऋषिच्छन्दोदेवताबीजशक्तिवर्णविनियोगस्थानन्यासादयः तत्तत्कल्पसंप्रदायानुसारेण द्रष्टव्याः।

(श्रीमन्त्रस्य सर्वाचार्यदिव्यसूरिमहर्षिपरिगृहीतत्वम्)

अयं श्रीमन्त्रः आथर्वणकठाद्युपनिषत्सु, अन्यान्येषु मन्वादिशास्त्रेषु, नारायणात्मक-हैरण्यगर्भ-नारदीय-बो(बौ?)धायनादि-बहुविधकल्पेषु सुप्रसिद्धवैभवोऽस्ति। मन्त्रान्तरेभ्यो भगवन्मन्त्राणामाधिक्यवत्, अनन्तेषु भगवन्मन्त्रेषु व्यापकत्रयस्याधिक्यवत्, "मन्त्राणां परमो मन्त्रो गुह्यानां गुह्यमुत्तमम्। पवित्रं च पवित्राणां मूलमन्त्रः सनातनः॥" इत्युक्तेः व्यापकमन्त्रेभ्यः सर्वेभ्य आधिक्येन, सर्ववेदसारतया, सर्वानिष्टनिवर्तनक्षमतया, सर्वपुरुषार्थसाधकतया, सर्वोपायोपकारकतया, सर्ववर्णानां स्वस्वाधिकारानुगुणं वैदिकरूपेण तान्त्रिकरूपेणोपजीव्यतया, व्याप्यव्यापकसर्वतत्त्वकण्ठोक्तिमत्तया, सर्वमन्त्रनैरपेक्ष्यकरतया, सर्वभगवन्मूर्तिसाधारणतया चावस्थितत्वात् सर्वेऽप्याचार्याः इममेव सादरं परिजगृहुः।

दिव्यसूरयोऽपि, "[1]तावकं श्रीमदष्टाक्षरं शिक्षित्वा" इति, [2]अष्टाक्षराम्नायिनः शक्ताः परमं व्योम पालयितुम्" इति, "ग्रामा नगराणि च

1 निन् तिरुवेट्टेड्डत्तङ्कट्टु—पे. तिरुमोड़ि 8-10-3

2 एट्टेड्डत्तमोदुवार्कळ् वल्लर् वानमाळवे. तिरुच्चन्दविरुत्तम् 78

यथा सम्यग् जानीयुस्तथा नमो नारायणाय[3]" इति, "[4]समीचीनप्रकारेण नमो नारायण" इति च इमं श्रीमन्त्रमेव आदृत्यावर्तन्त। ऋषयोऽपि, "बहवो हि महात्मानो मुनयः सनकादयः। अष्टाक्षरं समाश्रित्य ते जग्मुर्वैष्णवं पदम् ॥", "यथा सर्वेषु देवेषु नास्ति नारायणात् परः। तथा सर्वेषु मन्त्रेषु नास्ति चाष्टाक्षरात् परः ॥", "भूत्वोर्ध्वबाहुरत्राद्य सत्यपूर्वं ब्रवीमि वः। हे पुत्रशिष्याः शृणुत न मन्त्रोऽष्टाक्षरात् परः ॥ तदर्चनपरो नित्यं तद्भक्तस्तन्नमस्कुरु। तद्भक्ता न विनश्यन्ति ह्यष्टाक्षरपरायणाः ॥", "आसीना वा शयाना वा तिष्ठन्तो यत्र कुत्र वा। नमो नारायणायेति मन्त्रैकशरणा वयम् ॥" इत्यूचुः। इमं श्रीमन्त्रं सर्वेश्वरे श्रीनारदभगवद्द्वारा श्रीपुण्डरीकायोपदिष्टवति सति, सोऽप्यस्य परमहितत्वेन श्रवणात्, "पुण्डरीकोऽपि धर्मात्मा नारायणपरायणः। नमो नारायणायेति मन्त्रमष्टाक्षरं जपन् ॥" इत्याद्युक्तरीत्या एतन्मन्त्रनिष्ठो मुक्तो बभूव। इमं मन्त्रं श्रीपरकालाय दिव्यसूरये सर्वेश्वरः स्वयमेवोपदिदेश।

(अष्टाक्षरस्य प्रणवचतुर्थीराहित्ये सर्वाधिकारत्वम्)

अयं प्रणवचतुर्थीराहित्ये सर्वाधिकारः इत्येतत् श्रीवराहपुराणे कैशिकद्वादशीमाहात्म्ये, "नमो नारायणेत्युक्त्वा श्वपाकः

---

3 नाडुनगरमुं नन्गरिय नमो नारायणाय. पे. तिरुमोऴि 1-1-4

4 नल्वगैयाल् नमो नारायणा—पेरियाल्वार् तिरुमोऴि 1-1-11

पुनरागमत्" इति वचनेन दर्शितम् । अयमर्थः, '[5]नाम्न उक्तौ नमो नारायण इत्येव" इति, "[6]नमोनारायणेत्येतां सन्मालां संपाद्य" इति, "[7]जिह्वा मुखेऽस्ति नमो नारायणेति निरन्तरमुच्चार्यः शब्दोऽस्ति" इति च प्रतिपादयन्तीभिर्गाथाभिश्च सिद्धः ॥

(ब्राह्मणादिविषये मन्त्रस्थितिप्रकारः)

अयं ब्राह्मणादीनामधीतक्रमेण प्रणवेन सहाष्टाक्षरो भवति । "वैदिकं तान्त्रिकं चैव तथा वैदिकतान्त्रिकम् । त्रिविधं कर्म संप्रोक्तं पाञ्चरात्रामृतार्णवे ॥ वैदिकं ब्राह्मणानां तु राज्ञां वैदिकतान्त्रिकम् । तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकं तु वा ॥ अष्टाक्षरश्च यो मन्त्रो द्वादशाक्षर एव च । षडक्षरश्च यो मन्त्रो विष्णोरमिततेजसः ॥ एते मन्त्राः प्रधानास्तु वैदिकैः प्रणवैर्युताः । प्रणवेन विहीनास्तु तान्त्रिका एव कीर्तिताः ॥ न स्वरः प्रणवोऽङ्गानि नाप्यन्यविधयस्तथा । स्त्रीणां तु शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते ॥" इत्युक्तरीत्या प्रणवराहित्ये, "ततोनारायणस्यादिः बिन्दुमान् विष्णुरंततः । बीजमष्टाक्षरस्य स्यात् तेनाष्टाक्षरता भवेत् ॥" इत्युक्तप्रक्रियया‌ऽष्टाप्यक्षराणि अनुसन्धेयत्वेन विहितानि ।

(मन्त्रस्य प्रणवराहित्येऽपि फलसिद्धिः)

प्रणवराहित्येऽपि तत्साहित्यनिबन्धनं फलमेषामधिकारिणामपि

---

5 नामं शोल्लिल् नमो नारायणमे—पेरियतिरुमोऴि 6-10-1

6 नम्माले कोण्डु नमो नारयणा—मुदल् तिरुवन्तादि 57

7 नावायिलुण्डे नमो नारणावेन्रु ओवादुरैक्कुमुरै युण्डे
मुदल् तिरुवन्तादि 95

भवतीत्येतत्, "किं तत्र बहुभिर्मन्त्रैः किं तत्र बहुभिर्व्रतैः। नमो नारायणायेति मन्त्रः सर्वार्थसाधकः॥" इत्यादिभिः सिद्धम्।

(प्रणवाभावेऽपि प्रणवार्थानुसन्धानसिद्धिप्रकारः)

इत्थं प्रणवराहित्येनाष्टाक्षरतासिद्धिदशायां प्रणवार्थाः सर्वेऽपि एतत्प्रणवप्रतिच्छन्दत्वेन शास्त्रोक्तेऽक्षरे, 'प्रथमाक्षरं सर्वसंग्रहः' इति रीत्या संक्षेपेणानुसन्धेयाः। मध्यमाक्षरार्थोऽप्यर्थसिद्धः। अत्र तृतीयाक्षरोक्ताः ज्ञातृत्वादयो नमसि द्वितीयाक्षरे प्रकृतावनुसन्धेयाः॥

(शब्दतोऽर्थतश्च प्रणवस्य बहुविधत्वम्।)

प्रणवः स्वतन्त्रतायामेकमात्रो द्विमात्रस्त्रिमात्रः सार्धत्रिमात्र इत्येवं बहुप्रकारः, अर्थाश्च तथैव कार्यकारणावस्थपरमात्मवाचकत्वादिप्रक्रियया बहुविधा भवन्ति। व्यापकमन्त्रेषु प्रणवं परमात्मप्रधानं कानिचिच्छास्त्राण्याहुः।

(प्रणवप्रभावः)

एतत्प्रभावः, "आद्यं तु त्र्यक्षरं ब्रह्म त्रयी यत्र प्रतिष्ठिता। स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित्॥" इत्यादिषु प्रसिद्धः॥

(प्रणवे योजनाभेदः)

अयं "हविर्गृहीत्वाऽऽत्मरूपं वसुरण्येति मन्त्रतः। जुहुयात् प्रणवेनाग्नावच्युताख्ये सनातने॥" इत्युक्तरीत्या न्यासविद्यायां स्वतन्त्रः सन् आत्मसमर्पणपरो भवति। तद्रीत्याऽत्रापि समर्पणपरतयापि योजयन्ति। अत्र स्वरूपज्ञानप्राधान्येन शेषत्वानुसन्धानमात्रमुपजीव्यमित्यपि योजयन्ति। तदेदं शेषत्वानुसन्धानमधिकारे निविशते। "क्षेत्रज्ञस्येश्वरज्ञानात्

विशुद्धिः परमा मता" इत्येतत् शेषितत्त्वज्ञानमात्रपरं चेत्, उपायानर्हतानिवृत्तिपरम् । उपायरूपज्ञानान्तरस्य विवक्षितत्वे मोक्षपरम् । एतत्प्रणवार्थानुसन्धानक्रमम्, "ईदृशः परमात्माऽयं प्रत्यगात्मा तथेदृशः । तत्सम्बन्धानुसन्धानमिति योगः प्रकीर्तितः ॥" इति श्रीशाण्डिल्यभगवान् अनुजग्राह । एतम्, "अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत् मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम् । उकारोऽनन्यार्हं नियमयति संबन्धमनयोस्त्रयीसारः त्र्यात्मा प्रणव इममर्थं समदिशत् ॥" इति विवव्रुः । "[8]कृष्णपुरमेकं स्वीकृतवतः शेषभूतोऽहं (अन्यस्य) कस्यचिच्छेषः किं भवेयम्" इत्येतदप्येतत्प्रणवार्थविवरणम् ।

प्रणवेऽक्षरत्रयं वेदत्रयसारत्वेन श्रुतिस्मृतयः प्रपञ्चयामासुः । एष्वक्षरेष्वेषामर्थानां प्रतिपादनं कथमिति चेत् —

(उकारस्य परमात्मवाचकत्वे औचित्यादिप्रदर्शनम्)

"अष्टाक्षरशरीराङ्गप्रणवाद्यक्षरेण तु । अकारेणाखिलाधारः परमात्माऽभिधीयते ॥ समस्तशब्दमूलत्वादकारस्य स्वभावतः । समस्तवाच्यमूलत्वात् ब्रह्मणोऽपि स्वभावतः ॥ वाच्यवाचकसम्बन्धस्तयोरर्थात् प्रतीयते ॥" इति श्रीवामनपुराणवचनतः ' सर्ववाचकजातप्रकृतेः प्रथमाक्षरस्य सर्ववाच्यजातप्रकृतिर्नारायणो वाच्यः' इति प्रसिद्धमर्थं वेदार्थसंग्रहेऽनुजग्राह । एतेन कारणवाक्यसिद्धं सकलजगन्निमित्तोपादानकारणत्वं तदाक्षिप्तसर्वज्ञत्वसर्वशक्ति-

8 कण्णपुरमोन्ऱुडैयानुक्कडियेन् ओरुवर्कुरियेनो—
पेरियति 8-9-3

त्वादिगुणवर्गश्चात्र सिद्धः । अस्याक्षरस्य भगवद्वाचकत्वम्, "अ निषेधे पुमान् विष्णौ" इति, "अकारो विष्णुवाचकः" इति, "अ इति भगवतो नारायणस्य प्रथमाभिधानमभिदधता किं नाम मङ्गलं न कृतम्" इति निघण्टुषु प्रयोगेषु च प्रसिद्धम् ।

(अकारस्य योगव्युत्पत्तिः)

इदं व्याकरणव्युत्पत्त्या सर्वेश्वरस्य प्रतिपादनदशायां रक्षणप्रीणनादिविषये धातौ कर्तृवाचिना प्रत्ययेन निष्पन्नं पदं सत् सर्वरक्षकत्वादिविशिष्टतया प्रदर्शयति । अस्य धातोरनेकार्थत्वेऽपि रक्षणार्थे प्रसिद्धिप्रकर्षात्, अस्यार्थस्येहापेक्षितत्वात्, इह नानाऽर्था अनुसन्धेया इति कस्यापिनिरुक्तेरभावाच्च प्रथमपठितस्य रक्षणस्य शाब्दत्वेन, अन्येषामपेक्षितार्थानामेतदाक्षिप्तत्वेन चानुसन्धानमुचितमिति हेतोः एतावदेवाचार्या व्याचचक्षिरे । इदं रक्षकत्वमवच्छेदकाभावात् सर्वविषयम् । रक्षाप्रकाराः प्रतिविषयं प्रमाणप्रदर्शितरीत्या विचित्राः सन्ति । इदं हेतुनिर्देशाकरणात् निरुपाधिकतया प्रतीतं सदपि सापराधानां संसारिणां मोक्षादिप्रदाने स्वतन्त्रेणेश्वरेण स्वयं संकल्पितं कञ्चिद्व्याजमपेक्षमाणं वर्तते । नित्येषु मुक्तेषु च निरुपाधिकसहजकारुण्यमात्रेण स्थितस्थापनरूपा रक्षा सदा भवेत् । इत्थं स्वाभाविकभूतं रक्षकत्वं प्रातिकूल्यवर्तनकालेऽनाद्यपराधजनितनिग्रहरूपोपाधिना प्रतिबद्धं भवति । प्रतिबन्धकस्यास्योपाधेर्नाशनार्थमेव प्रपत्तिप्रभृतयो व्याजाः शास्त्रसिद्धाः ॥

तत्रापि स्वामित्वमौचित्यं न्यासाद्याः सहकारिणः ।
प्रधानहेतुः स्वातन्त्र्यविशिष्टा करुणा विभोः ॥

(अकारार्थे श्रीवैशिष्ट्यस्यानुसन्धेयत्वम्)

सर्वरक्षणदीक्षितः, "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकः सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥" इत्याद्युक्तरीत्या सपत्नीकः सिद्ध इत्यतोऽत्र प्रमाणसिद्धोपयोगविशेषः पत्नीसंबन्ध आर्थः । इत्थं सन्नियोगशिष्टन्यायेन सर्वेश्वरप्रतिपादनस्थले सर्वत्र श्रीरपि प्रतिपादितेत्येतमर्थम्, "तदन्तर्भावात् त्वां न पृथगभिधत्ते श्रुतिरपि" इति समर्थयामासुः । अतः स्वरूपनिरूपकधर्माणां सर्वविद्यानुवृत्तिन्यायेन तेषु प्रधानभूतमिदं विशेषणमपि सर्वविद्यास्वनुसंधेयम् । इदमेव देवतान्तरव्यावृत्तिं कुर्वत् सत् सर्वातिशायिनः स्वतन्त्रस्वरूपस्य निरूपकं भवति । अस्य स्वतःसिद्धातिशयाः स्वरूपविग्रहविभूतयः, "भास्करेण प्रभा यथा" इत्युक्तरीत्या विशेषणत्वेन स्थिताया अस्याः स्वरूपविग्रहविभूतिभिः लब्धातिशयाः सन्तो विराजन्ते इत्येतत् देवतापारमार्थ्यवेदिभिर्महर्षिभिः प्रपञ्चितम् । इत्थं नारायणशब्देऽपि पत्नीसम्बन्धोऽनुसन्धेयः । अयं पत्नीसंबन्धो द्वये कण्ठोक्तः । द्वयविवरणे गद्ये प्रथमतः "भगवन्नारायण" इत्यारभ्य प्रतिपाद्यमानत्वेऽपि नारवर्गमध्येऽस्या उपादानमपि (न तु) पत्नीत्वनिबन्धनपतिपारार्थ्यात्, "नरसंबन्धिनो नाराः" इति व्युत्पत्त्या च भवति ।

(अकारोत्तरलुप्तचतुर्थ्यर्थः)

अत्र प्रथमाक्षरं चतुर्थ्येकवचनान्तं सञ्जातविभक्तिलोपं वर्तते। तत् कथमिति चेत्—परमात्मने स्वात्मसमर्पणस्य विधानस्थले प्रणवस्य मन्त्रत्वेन विधानात् अस्यानुष्ठेयार्थप्रकाशनस्य प्राप्तत्वात्, अत्र समर्पणीयस्याऽऽत्मनस्तृतीयाक्षरेण प्रकाशनात्, एतदुद्देश्यस्य परब्रह्मणः प्रथमाक्षरे प्रकृत्या प्रतीतत्वात्, उद्देश्यकारकस्य समर्पणीयवस्तुनश्च सामानाधिकरण्येन प्रयोगस्यानुचितत्वाच्चोद्देश्यकारकानुरूपा चतुर्थीविभक्तिरत्राऽऽश्रयितुं युक्ता। प्रथमतृतीयाक्षरे समानाधिकरणत्वेनाश्रित्य जीवपरमात्मनोः स्वरूपैक्यमत्र प्रतिपाद्यत इत्यस्य कुदृष्टिपक्षस्य बहुप्रमाणविरोधः, समभिव्याहृतनमःशब्द-चतुर्थीस्वरसार्थविरोधश्च प्रसज्यते। इदम्, प्रणवं धनुष्ट्वेन आत्मानं शरत्वेन ब्रह्म लक्ष्यत्वेन आत्मसमर्पणं लक्ष्यवेधत्वेन च विभज्य प्रतिपादयता वाक्येनापि सिद्धम्।

अत्र भरसमर्पणस्यार्थत्वे स्वतन्त्रप्रणवदृष्टचतुर्थीरीत्याऽस्याश्चतुर्थ्या अर्थो भवति। अत्र प्रणवस्य परशेषतैकरसस्वरूपप्रतिपादनपरत्वेऽनया चतुर्थ्या तादर्थ्यविवक्षयाऽऽत्मपरमात्मनोः शेषशेषिभावस्य प्रकाश्यत्वात् निरुपाधिकसर्वशेषिणमीश्वरं प्रति स्वस्य निरुपाधिकशेषत्वमनुसन्धेयम्। "त्वं मे" इति स्वामिनि सर्वेश्वरे अनुसृत्य गृह्णानेऽपि "अहं मे" इति स्वस्योन्मोचनं कारयताऽहंकारविशेषेणासत्कल्पमेनं जीवात्मानं शेषत्वानुसन्धानमुज्जीवयतीत्यतः एतत्प्राधान्यं द्योतयितुं धर्मिणः पूर्वं शेषिणा सह संबन्धः प्रतिपादितः।

इत्थमीश्वरः सर्वशेषी भवन्, "अस्या मम च शेषं हि विभूतिरुभयात्मिका। इति श्रुतिशिरस्सिद्धं मच्छास्त्रेष्वपि मानद॥" इति, "उभयाधिष्ठानं चैकं शेषित्वम्" इति चोक्तरीत्या सपत्नीक एव तथा भवति। अग्नीषोमीयादिष्विव आत्महविरुद्देश्यदेवतात्वमुभयोः सह भवति (व्यासज्यवृत्ति) इति प्रतिपादनार्थं शेषिणोर्द्वित्वे सत्यपि शेषित्वमेकमित्युच्यते।

(उकारार्थः)

मध्यमाक्षरं लक्ष्मीवाचकत्वेन व्याचक्षाणस्य कठश्रुतिवाक्यस्य परामर्शो उभौ प्रति अयमात्मा शेष इत्यर्थः शाब्दः। शेषत्वं नाम, स्वस्य कमप्युपकारं प्राधान्येनानाश्रित्य परोपकारार्हता। इदम्, "परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः परः शेषी" इति श्रीभाष्यकारोऽनुजग्राह(वे. सं.)। अत्र श्रुतिप्रतीतं षष्ठीद्विवचनं लुप्तम्। अत्र सम्बन्धसामान्ये प्रवृत्ता षष्ठी प्रमाणसिद्धेऽपेक्षिते विशेषे विश्राम्यति। तादर्थ्यरूपस्योपयुक्तस्य संबन्धविशेषस्य व्यक्तये चतुर्थीद्विवचनं स्थितं लुप्तं चेति वा सुवचम्। तदा लुप्तचतुर्थीद्विवचनस्य विवरणं भवति, द्वयोर्दास इति श्रुतिः। इत्थं हविरुद्देश्यदेवताद्वन्द्वे हविरिव उभौ प्रति अयमात्मा शेष इति प्रतिपादने अत्रावधारणमार्थम्। अनयोरुभयोरयमात्माऽनन्यार्हनिरुपाधिकशेष इत्युक्तं भवति।

अस्य मध्यमाक्षरस्य श्रौतप्रयोगतोऽवधारणपरत्वे एतद्दम्पतिव्यतिरिक्तान् प्रति निरुपाधिकशेषत्वशङ्काया अनुदयार्थमन्ययोगव्य-

वच्छेदोऽत्र शाब्दो भवति । एतेन अन्यं प्रति शेषत्वं स्वरूपप्राप्ति नेत्यर्थस्य प्रतिपादनात् यथावस्थितात्मज्ञानवतस्तदीयपर्यन्तं देवतान्तरस्पर्शो निवृत्तो भवति । भगवदभिमतभागवतशेषत्वेनान्यशेषत्वदोषो न भवतीत्येतमर्थं पुरुषार्थकाष्ठायामवोचाम । इत्थमन्ययोगव्यवच्छेदे शाब्दरूपेण लब्धे सति अयोगव्यवच्छेदः कालसंकोचाभावात् सिद्धः । अनेन शेषत्वायोगव्यवच्छेदेन ईश्वरं प्रति पृथक्सिद्ध्यनर्हविशेषणत्वेन प्रतीतस्य चेतनद्रव्यस्याप्यचित इव शरीरत्वं प्रकाशितं भवति ।

(मकारार्थः)

तृतीयाक्षरमत्रावश्यानुसन्धेयं जीवं पुरस्कृत्योक्तशेषत्वाश्रयं सर्वमुपलक्षयति । इदं जीवात्मवाचकमित्येतत्, "मकारं जीवभूतं तु शरीरे व्यापकं न्यसेत्" इति, "पञ्चार्णानां तु पञ्चानां वर्णानां परमेश्वरः । संस्थितः कादिमान्तानां तत्त्वात्मत्वेन सर्वदा ॥" इति, "भूतानि च कवर्गेण चवर्गेणेन्द्रियाणि च । टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा ॥ मनः पकारेणैवोक्तं फकारेण त्वहंकृतिः । बकारेण भकारेण महान् प्रकृतिरुच्यते । आत्मा तु स मकारेण(रोयं) पञ्चविंशः प्रकीर्तितः ॥" इति च तत्त्वसागरसंहितादिषु पञ्चविंशतेस्तत्त्वानां विषये ककारादीनां पञ्चविंशतेर्वर्णानां वाचकत्वेन विभज्य प्रतिपादनात् सिद्धम् । एतेन जडत्वाचेतनत्वादिदोषाश्रयेभ्यश्चतुर्विंशतेस्तत्त्वेभ्यः सर्वकारणत्वेन सर्वरक्षकत्वेन सर्वशेषित्वेन च प्रथमाक्षरे प्रतिपन्नात् षड्विंशकाच्च जीवात्मनो भेदः सिद्धः । अस्मिन् श्रीमन्त्रे मकारो नारशब्दश्च निष्कर्षविवक्षया विशेषणमात्रपराः ।

इदमक्षरं व्याकरणप्रक्रियायां दृष्टायां "मन ज्ञाने" इत्यादिधातुनिष्पन्नपदत्वात्, "ज्ञोऽत एव" इत्यधिकरणरीत्या ज्ञानस्वरूपं ज्ञानगुणकमणुं जीवात्मानमाचष्टे। ज्ञानस्वरूपत्वेन सामान्यतः प्रतिपादनेऽपि एतत्स्वरूपस्यानुकूलत्वेन प्रमाणसिद्धत्वात् आनन्दत्वरूपो विशेषोऽपि सिध्यति। ज्ञानगुणकइत्यर्थे उक्ते प्रमाणानुसारात् मुक्तदशायां निरुपाधिकप्रसरणस्य संकोचरहितस्य ज्ञानस्य गुणत्वं प्रतीयेत। इत्थं परिशुद्धस्य स्वाभाविकरूपस्य परामर्शे, निवृत्ताचेतनगतजडत्वादिकेन निवृत्तसांसारिकक्लेशादिकेन च रूपेणावस्थानात् स्वरूपधर्मोभयगतं निर्मलत्वमनुसंहितं भवति।

इदं परशेषतैकरसपरिशुद्धस्वरूपमेव मुमुक्षुदशायामनुसन्धेयमित्येतत्, "व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्" इति सूत्रे सिद्धम्। अस्य मुमुक्षुदशायां फलदशानुसन्धानं फलापेक्षायाः प्रयोजकं भवति। पुरुषार्थभेदानुसारेण अनुसन्धेयाकाराः भिद्यन्ते इत्येतत् श्रीगीतायामष्टमाध्याये भाष्यादिषु च सुव्यक्तम्।

जीवभेदस्य प्रामाणिकत्वादिदं तृतीयाक्षरं "नात्मा श्रुतेः" इत्यादिष्विव जात्येकत्वपरम्। इत्थं जीवतत्त्वस्य सर्वस्यात्र, "दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः" इत्युक्तरीत्या सामान्येन भगवच्छेषत्वेन प्रतिपादनेऽपि तत्र स्वस्याप्यन्तर्गतत्वात्, "अतोऽहमपि ते दासः" इत्यनुसंधानमपि सिध्यति।

अत्र शेषत्वज्ञान-स्वस्वातन्त्र्याभिमाननिवृत्त्यादयः उपायविशेषपरिग्रहः फलभूतशेषवृत्तिप्रार्थना च स्वस्य भवन्तीत्यतः

स्वस्य प्राधान्येन प्रदर्शनीयत्वात् तृतीयाक्षरस्य विशेष्यपदत्वेनाहंशब्दोऽध्याहृतोऽन्वेतीति केचिदाचार्या आहुः । तदा प्रणवविवरणभूत- "मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव" इत्यादिरीत्या, गुणाः प्रधानानुवर्तिन इति न्यायेन स्वशेषभूता गुणादयोऽप्युपलक्षिता भवन्ति ।

अन्ये केचिदाचार्याः—अस्मच्छब्दे व्यञ्जनमात्रं मकारं गृहीत्वा छान्दसप्रक्रियया पूर्वोत्तरभागौ लुप्तौ भवत इति तृतीयाक्षरमेवाहमर्थं प्रकाशयतीति योजयन्ति । परमात्मने आत्महविषः समर्पणं विदधानायां न्यासविद्यायां प्रणवस्य मन्त्रत्वेनाम्नानादस्यानुष्ठेयार्थ-प्रकाशकत्वार्थम् अत्र परावरात्मविषययोर्वाचकांशयोरपेक्षितत्वे सति प्रमाणानुसारात् प्रथमाक्षरेणोद्देश्यकारकस्याभिधानात् मध्यमाक्षरस्यान्यार्थत्वात् पारिशेष्यात् तृतीयाक्षरेणैव समर्पणीयात्महविषः प्रदर्शनीयत्वात् अस्याक्षरस्याहमित्यर्थकत्वमत्यन्तमुचितम् । अत एव किल भट्टार्या इहत्यं प्रणवम् , "अकारार्थायैव स्वमहम्" इति व्याचख्युः ॥

(नमश्शब्दार्थः)

एवमेव नमसि मकारः त्रिषु [उक्तेषु] अन्यतमेन प्रकारेण प्रत्यगात्मानं प्रतिपादयति । अस्य षष्ठीविभक्त्यन्तत्वात् नकारेण निषेधस्य प्रतिपादनाच्च न मम इति सिद्धं भवति। निषेधे आदरातिशयं द्योतयितुं नञ् पूर्वं वर्तते । इदं "दृष्टा सीता" इतिवदस्ति ।

अस्मिन् मकारे षष्ठी सम्बन्धसामान्यमुखेनोचितसम्बन्धविशेषं विवक्षति। अनेनाभिप्रायेण किल भट्टार्यैरपि, 'अथ मह्यं न' इत्युक्तम्।

वाक्यस्यावधारणे तात्पर्याभ्युपगमस्योचितत्वात् अस्मिन् प्रणवे मध्यमाक्षरसिद्धेन तात्पर्यार्थेन संबद्ध एतन्नमोर्थ एव सर्वेषु सार इत्ययमर्थः, "द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्। ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम्॥" इत्यादिभिः प्रत्यपादि। "सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्। एतावान् ज्ञानविषयः किं प्रलापैः करिष्यति॥" इति श्लोकस्यापि **एतन्नमोर्थे प्राधान्येन तात्पर्यम्।**

अत्र, 'न मम' इत्यभिधीयते किमिति चेत्—

(1) **प्रणवस्थतृतीयाक्षरे** अनुषक्ते सति, अहं न ममेति स्थितम्। **अध्याहारादप्यनुषङ्ग उचित** इत्येतत् **अनुषङ्गाधिकरण-सिद्धम्।** अत्र न **ममाहम्** इति विशेषणात् पूर्वमन्यशेषत्वनिषेधकं **मध्यमाक्षरं गोबलीवर्दन्यायात् स्वव्यतिरिक्तविषयकम्।** 'अहं न मम' इत्येतद्वाक्यतः स्वस्वरूपेऽपि स्वस्वत्वाभावात् 'गुणाः प्रधानानु-वर्तिनः' इति न्यायात् अन्यत् किमपि प्रति स्वस्य **निरुपाधिकस्वामित्वं** नास्तीति **विशिष्यानुसन्धानं फलितम्।** **इदं विशेषनिर्देशस्य प्रयोजनम्।**

(२) इत्थमनुषङ्गाकरणपक्षे सामान्यतः स्वसम्बन्धितया प्रतीयमाने सर्वस्मिन्, 'न मम स्वम्' इति स्वसंबन्धो व्यवच्छिद्यते। एतेन

स्वविषये, स्वसम्बन्धिगुणविग्रहादिविषये च स्वगताभिमानविशेषस्य निवर्तनात् **विपरीताहंकारममकाररूपे संसारमूले छिन्ने** भवतः। इह निवर्त्यमानोऽहंकारो **भ्रमरूपो बुद्धिविशेषः**। अन्यः तत्त्वेषु गणितोऽहंकारो विवेकमात्रनाश्यः कश्चिदर्थो न भवति;। सूक्ष्मशरीरत्यागपर्यन्तमेतदनुषक्तो वर्तेत। एतदचित्संबन्धेऽस्यानिवृत्तेऽपि, एतत्कार्यभूता **भ्रमरूपा अहंकारादिव्याधयो मूलमन्त्रादिसिद्ध विवेकरूपभेषजविशेषेण** निवर्तन्ते।

(3) स्वस्यान्य**शेषत्वस्य प्रणवे मध्यमाक्षरेण** निवर्तितत्वात् अन्यभूतस्वं प्रति स्वस्य शेषत्वं नास्तीति पृथक् प्रतिपादनस्यानपेक्षितत्वात् **अन्यशेषित्वेन** प्रतीतस्य स्वस्यात्र यत्किमपि प्रति **निरुपाधिकस्वामित्वस्य** निवर्तने **तात्पर्यं वा**। जीवस्य शेषभूतानि सर्वाण्यपि **निरुपाधिकसर्वशेषिणा सर्वेश्वरेण स्वार्थं** प्रत्तानि किल। **जीवानां नित्या गुणादय ईश्वरस्य नित्येच्छासिद्धाः। अशुद्धदशायां शुद्धदशायां** च भवन्तो**ऽनित्यविग्रहादयः** एतत्**कर्मजन्यया कर्मनिरपेक्षया च अनित्येच्छया सिद्धाः**।

(4) **प्रणवेऽन्यशेषत्वस्य** निवृत्तेः **परमात्मनोऽन्यभूतस्य स्वस्य स्वयं शेषो नेत्यर्थस्य सिद्धेः** स्वस्यान्यनिरूपितशेषत्वाभाववत् अन्यस्यापि स्वनिरूपितनिरुपाधिकशेषत्वं नास्तीत्यर्थस्यात्र **प्राप्तेः** प्रणवाप्रतिपन्नायां स्वस्वातन्त्र्यनिवृत्तौ **नमसस्तात्पर्यं** वा। तदा पूर्वप्रयुक्तमकारानुषञ्जनेन अहं मम निर्वाहको नास्मीत्युक्तं भवति। स्वातन्त्र्यपदमध्याहृत्य, न मम स्वातन्त्र्यमिति वोक्तं भवति। अस्य **चेतनस्य स्वस्वातन्त्र्यनिवृत्ति-**

र्णाम—निरपेक्षकर्तृत्वानर्हता । अस्याः मूलं बद्धावस्थायां मुक्तावस्थायां च स्वबुद्धिपूर्वकप्रवृत्तिं कुर्वाणस्यापि ईश्वरप्रदत्तकरणादिकमवलम्ब्य तस्मिन् प्रेरके सहकारिणि च सत्येव प्रवृत्तियोग्यता ।

ईश्वरस्य प्रथमाक्षरे प्रकृत्योक्तं सर्वरक्षकत्वम् उपायाधिकारिणां विषये यस्मिन् कस्मिंश्चिदुपाये प्रेरणपूर्वकमेव भवति । जीवः स्वरक्षणार्थं उपायानुष्ठानेऽपि पराधीनकर्तेत्यतः, एतस्मिन्नुपायेऽनुष्ठितेऽपि फलप्रदानरूपरक्षाकर्ता प्रसन्नः सर्वेश्वर इत्यतश्च प्रथमाक्षरे प्रकृत्या प्रतिपन्नं तस्य सर्वरक्षकत्वमेवानेन नमःशब्देनापि दृढीकृतं भवति । इत्थं प्रथमचतुर्थ्या प्रतिपन्नमीश्वरस्य निरुपाधिकसर्वशेषित्वं जीवस्य यत्किञ्चिन्निरूपितनिरुपाधिकशेषित्वस्य निवर्तिकया पूर्वयोजनया दृढीकृतं सिद्धम् । अस्य जीवस्य विद्यमानं स्वातन्त्र्यमपि, "परात्तु तच्छ्रुतेः" इति न्यायेन निरुपाधिकस्वतन्त्रात् स्वार्थप्रवृत्तात् परमात्मनो निदानादनुप्राप्तम् । तथैव वस्त्वन्तरनिरूपितमस्य जीवस्य शेषित्वमपि निरुपाधिकशेषिणा तेन स्वार्थं प्रत्तं सत् प्राप्तम् ।

श्रीमान् स्वतन्त्रः स्वामी च सर्वत्रान्यानपेक्षया ।
निरपेक्षस्वतन्त्रत्वं स्वाम्यं चान्यस्य न क्वचित् ॥
तारस्य नमसश्चेमौ सारौ देशिकदर्शितौ ।
अनन्यशरणत्वादेरधिकारस्य सिद्धये ॥

लोके स्वामित्वस्वातन्त्र्ययोरभिमतत्वेन दासत्वपारतन्त्र्ययोरनभिमतत्वेन च प्रतीतिः कर्मोपाधिकेत्येव । इह प्रणवनमसोरुक्ते दासत्वपारतन्त्र्ये "दासभूताः स्वतः सर्वे" इत्याद्युक्तरीत्या स्वरूपप्राप्तत्वात् तत्त्वविदामनुकूले ।

इत्थमत्यन्तपारार्थ्यपारतन्त्र्ययोः सिद्धेः, "[1]दासानां मां दासीकृतवान् विमलः" इत्युक्तरीत्या स्वतन्त्रशेषीष्टविनियोगार्हत्वात् तदीयशेषत्वमप्यत्र सिद्धम् । शेषित्वात् स्वतन्त्रत्वाच्चेश्वर एनमात्मानं स्वप्रियदासानां कृते स्वेच्छया शेषमापादयति चेत्, इदमप्राप्तमिति वक्तुमयुक्तम्; निराकर्तुमप्यशक्यम् । शेषित्वात् इष्टविनियोगस्य प्राप्तः; स्वतन्त्रत्वादत्र समर्थश्च । "[2]अन्यत् किमपि दैवमस्तीति स्थितैर्न संसृज्ये; स्वीकृतं च त्वद्दासदास्यम्" इति गाथायामप्ययमर्थो द्रष्टव्यः ॥

स्वेच्छयैव परेशस्य तादधीन्यबलात्तु नः ।
भगवद्भक्तशेषत्वं स्वेच्छयाऽपि क्वचिद्भवेत् ॥
गुणाधिके हि विषये गुणसारस्यवेदिनः ।
रामे रामानुजस्येव दास्यं गुणकृतं भवेत् ॥
"दास्यमैश्वर्ययोगेन ज्ञातीनां च करोम्यहम् ।
अर्धभोक्ता च भोगानां वाग्दुरुक्तानि च क्षमे" ॥

---

1 अडियार्कॆन्नै याल्पडुत्तविमलन्—अमलनादिपिरान्—1

2 मट्रुमोर् देय्वमुलदॆन्ऱिरुप्पारोडोट्रिलेन्-उट्रदुमुन्नडियार्कडिमै—पॆरियतिरुमोऴि 8-10-3

इति स्वोक्तिनयादेव स्वभक्तविषये प्रभुः ।
आत्मात्मीयस्य सर्वस्य संकल्पयति शेषताम् ॥
अन्योन्यशेषभावोऽपि परस्वातन्त्र्यसंभवः ।
तत्तदाकारभेदेन युक्त इत्युपपादितम् ॥

इत्थं स्वतन्त्रशेषिणो यथेष्टविनियोगार्हेण (परतन्त्रेण) अकिञ्चनेनानेन तद्द्वारा पुरुषार्थस्य प्राप्यत्वात् तद्वशीकरणार्थं द्वये चरमश्लोके च विशदं प्रतिपादितं शरणवरणमत्र सूचितं भवति । आत्मसमर्पणस्य शरणवरणस्य चान्योन्यमविनाभूतत्वादेकैकप्रतिपादकशब्देषु उभयमपि विवक्षितम् ।

"यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः । स एष पुरुषव्याघ्रः संबन्धी ते जनार्दनः ॥ सर्वेषामेव लोकानां पिता माता च माधवः । गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः ॥" इत्युपदिष्टे सति, "एवमुक्तास्त्रयः पार्था यमौ च भरतर्षभ । द्रौपद्या सहिताः सर्वे नमश्चक्रुर्जनार्दनम् ॥" इति प्रतिपादनात्, दमयन्तीवृत्तान्ते "शरणं प्रति देवानां प्राप्तकालममन्यत" इत्युपक्रम्य, "वाचा च मनसा चैव नमस्कारं प्रयुज्य सा" इत्युक्तत्वाच्च नमःशब्दस्यैव शरणागतिशब्दस्थाने पठितत्वादिदं स्वेन सह स्वस्य संबन्धं व्यवच्छिन्दत् सत् सपरिकरस्वरक्षाभरसमर्पणे तत्परं वा । नमःशब्दः आत्मसमर्पणपरो भवतीत्येतत्, "समित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसा योऽकरोत् देवे स स्वध्वर इतीरितः", "नमस्कारात्मकं यस्मै विधायाऽऽत्मनिवेदनम्" इत्यादिभिश्च प्रसिद्धम् ।

अहं न मम शेषोऽस्मि, मदीया व्यापारादयोऽपि न मम शेषभूताः, इदं सर्वं सर्वेश्वरस्यैव शेषभूतमित्येवमादयः सर्वेऽप्यर्था नमश्शब्दे विवक्षिता इत्ययमर्थो निरुक्ते नमस्कारप्रकरणे आम्नातः ॥

(नमःशब्दस्य स्थूलादियोजनात्रयम्)

अस्य नमश्शब्दस्य स्थूलसूक्ष्मपरा इति त्रीन् अर्थान् विभज्य अहिर्बुध्न्यो व्याचचक्षे—"प्रेक्षावतः प्रवृत्तिर्या प्रह्वीभावात्मिका स्वतः । उत्कृष्टं परमुद्दिश्य तन्नमः परिगीयते ॥ लोके चेतनवर्गस्तु द्विधैव परिकीर्त्यते । ज्यायांश्चैव तथाऽज्यायान् नैवाऽऽन्यां विद्यते परः ॥ कालतो गुणतश्चैव प्रकर्षो यत्र तिष्ठति । शब्दस्तं मुख्यया वृत्त्या ज्यायानित्यवलम्बते ॥ अतश्चेतनवर्गोऽन्यः स्मृतः प्रत्यवरो बुधैः । अज्यायांश्चानयोर्योगः शेषशेषितयेष्यते ॥ अज्यायांसोऽपरे सर्वे ज्यायान् एको मतः परः । नन्तृनन्तव्यभावेन तेषां तेन समन्वयः ॥ नन्तव्यः परमः शेषी शेषा नन्तार ईरिताः । नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः॥ नीचोच्चयोः स्वभावोऽयं नन्तृनन्तव्यतात्मकः । उपाधिरहितेनायं येन भावेन चेतनः ॥ नमति ज्यायसे तस्मै तद्वा नमनमुच्यते । भगवान् यो परो नित्यमहं प्रत्यवरः सदा ॥ इति भावो नमः प्रोक्तो नमसः कारणं हि सः । नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम् ॥ प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् । अतो वा नम उद्दिष्टं यत् तन्नामयति स्वयम् ॥ वाचा नम इति प्रोच्य मनसा वपुषा च यत् । तन्नमः पूर्णमुद्दिष्टमतोऽन्यन्न्यूनमुच्यते ॥

इयं करणपूर्तिः स्यादङ्गपूर्तिमिमां शृणु । शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् ॥ पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यथा । इत्यङ्गमुदितं श्रेष्ठं फलेप्सा तद्विरोधिनी ॥ अनादिवासनारोहादनैश्वर्यात् स्वभावजात् । मलावकुण्ठितत्वाच्च दृक्क्रियाविहतिर्हि या ॥ तत् कार्पण्यं तदुद्बोधो द्वितीयं अङ्गमीदृशम् । स्वस्वातन्त्र्यावबोधस्तु तद्विरोध उदीर्यते ॥ परत्वे सति देवोऽयं भूतानामनुकम्पनः । अनुग्रहैकधीर्नित्यमित्येतत्तु तृतीयकम् ॥ उपेक्षको यथाकर्मफलदायीति या मतिः । विश्वासात्मकमेतत्तु तृतीयं हन्ति वै सदा ॥ एवंभूतोऽप्यशक्तः सन् न त्राणं भवितुं क्षमः । इति बुद्ध्याऽस्य देवस्य गोप्तृशक्तिनिरूपणम् ॥ चतुर्थमङ्गमुद्दिष्टमनुष्य व्याहृतिः पुनः । उदासीनो गुणाभावादित्युत्प्रेक्षानिमित्तजा ॥ स्वस्य स्वाम्यनिवृत्ति (स्वामिनि वृत्ति)र्या प्रातिकूल्यस्य वर्जनम् । तदङ्गं पञ्चमं प्रोक्तमाज्ञाव्याघातवर्जनम् ॥ अशास्त्रीयोपसेवा च तद्विघात उदीर्यते । चराचराणि भूतानि सर्वाणि भगवद्वपुः । अतस्तदानुकूल्यं मे कार्यमित्येव निश्चयः । षष्ठमङ्गं समुद्दिष्टं तद्व्याघातो निराकृतिः ॥ पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् ।

स्थूलोऽयं नमसस्त्वर्थः सूक्ष्ममन्यं निशामय ॥ चेतनस्य यदा मत्वं स्वस्मिन् स्वीये च वस्तुनि । मम इत्यक्षरद्वन्द्वं तदा मन्यस्य वाचकम् ॥ अनादिवासनारूढमिथ्याज्ञाननिबन्धना । आत्मात्मीयपदार्थस्था या स्वातन्त्र्यस्वतामतिः ॥ मे नेत्येवं समीचीनबुद्ध्या साऽत्र निवार्यते । नाहं मम, स्वतन्त्रोऽहं नात्मीत्यस्यार्थं उच्यते ॥ न मे देहादिकं वस्तु

स शेषः परमात्मनः । इति बुद्ध्या निवर्तन्ते तास्ताः स्वीया मनीषिकाः ॥ अनादिवासनाजातैर्बोधैस्तैस्तैर्विकल्पितैः । रूषितं यद् इदं तत्तत्स्वातन्त्र्यस्वत्वधीमयम् ॥ तत्तत् वैष्णवसार्वात्म्यप्रतिबोधसमुत्थया । नम इत्येतया वाचा नत्वा स्वस्मादपोह्यते ॥ इति ते सूक्ष्म उद्दिष्टः परमन्यं निशामय । पन्था नकार उद्दिष्टो मः प्रधान उदीर्यते ॥ विसर्गः परमेशस्तु तत्रार्थोऽयं निरुच्यते । अनादिः परमेशो यः शक्तिमान् पुरुषोत्तमः ॥ तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान् । इति ते त्रिविधः प्रोक्तो नमश्शब्दार्थ ईदृशः ॥" इति ।

अत्र "नन्तव्यः परमः शेषी" इत्युक्तत्वात् **नमसः परमशेष्येव प्रतिसम्बन्धीत्ययमर्थः स्वतःप्राप्तः । परमशेषी** अमुक इति विशदं ज्ञानार्थं **विशेषनामधेयम्** । अत्र, "अशास्त्रीयोपसेवा तु तद्विघात उदीर्यते" इति, "तद्व्याघातो निराकृतिः" इत्युक्तयोर्वचनयोः, **प्रपत्तिकाले बुद्धिपूर्वकप्रातिकूल्ये** वर्तमाने **आनुकूल्यसंकल्पः** प्रातिकूल्येऽभिसन्धिविरामादयश्च असिद्धा भवन्तीत्यत्र **तात्पर्यम्** । **प्रपत्त्युत्तरकाले बुद्धिपूर्वकप्रातिकूल्यं** प्रवृत्तं चेत् , अनेन सरुचि परिगृहीतायाः **स्वतन्त्रभगवदाज्ञाया** विरुद्धं भवति ।

अत्र **स्थूलोऽर्थो** नाम—**व्याकरणानुबद्धया स्फुटव्युत्पत्त्या** प्रतीयमानोऽर्थः । **सूक्ष्मो** नाम—**वर्णसाम्यादीन्यवलम्ब्य** प्रवर्तमानस्य **निरुक्तस्य बलेन** प्रतीयमानोऽर्थः । **परो** नाम—**रहस्यग्रन्थप्रतिपादिताक्षरनिघण्टुप्रक्रियया** प्रतीयमानोऽर्थः ।

अत्र प्रथमतः शेषभूतस्य स्वतःप्राप्तवृत्तिः, साङ्गभरन्यासरूपं साध्योपायशरीरं च विविच्य प्रत्यपादि। अनन्तरं मोक्षोपायाधिकारिणोऽवश्यापेक्षितं निरपेक्षस्वातन्त्र्यादिनिवृत्तिपूर्वकस्वरूपशोधनमकारि। ततः साध्योपायविशेषेण वशीकार्यस्य प्राप्यस्य च सतःसिद्धोपायस्य स्थितिप्रकारः प्रत्यपादि। उपायान्तरापेक्षया समर्पणस्य प्रधानोपायत्वं प्रत्यपादीति वा। एते सर्वेऽप्यग्रे वक्ष्यमाणेषु वाक्यार्थेषु यथासंभवमनुसन्धेयाः॥

एवं शिक्षितनानार्थनमश्शब्दसमन्विताः।
सर्वे करणतां यान्ति मन्त्राः स्वात्मसमर्पणे॥
जीवसामान्यमुखतः भृङ्गग्राहिकयाऽपि वा।
मकारौ तारनमसोः स्वानुसन्धानदाविह॥
इह या स्वानुसन्धानप्रक्रियैकस्य दर्शिता।
अन्येषामपि तत्साम्यात् नान्योन्यशरणा इमे॥
अतः स्वपररक्षायां पराधीनेषु जन्तुषु।
निरपेक्षशरण्यत्वं नियतं कमलापतौ॥

(नारायणशब्दप्रभावः)

अत्र शाब्दरूपेण आर्थरूपेण वा नमसि प्रतीतेन शरणागतिरूपेण साध्योपायेन प्रसादनीयस्य, अग्रिमचतुर्थीविवक्षितकैङ्कर्यप्रतिसंबन्धिनः, सर्वरक्षकत्वेन सर्वशेषित्वेन च प्रथमपदे प्रतिपन्नस्य निरपेक्षशरण्यस्य स्वरूपं प्रकाशयति योगरूढो नारायण-

शब्दः । संक्षेपेणोक्तस्यार्थस्यैवाज्ञानसंशयविपर्ययनाशार्थं मुखान्तरेण प्रतिपादनं विवरणम् । अयं संग्रहविवरणभावः प्रथमाक्षरप्रभृतिषु यथासंभवं द्रष्टव्यः ॥

अयं **नारायणशब्दः** शेषशेषितत्त्वद्वितयप्रकाशनरूपोपकारातिशयेन विष्णुगायत्र्यां, श्रीनारायणीये नामनिर्वचनप्रकरणे च इतरेभ्यो व्यापकनामभ्यः पूर्वं पठितः । सर्वपरविद्योपास्यविशेषनिर्णायको नारायणानुवाकः, 'परतत्त्वत्वेन शङ्किताः ब्रह्मशिवादयः सर्वेऽपि सामानाधिकरण्यनिर्देशेन तत्रोक्तविश्ववत् विभूतिभूताः' इति, एतेऽपि **नारशब्दार्थाः** इति च प्रबोधयितुमिमं नारायणशब्दमसकृत् सादरप्रदर्शनमावर्तयामास ।

अस्य **शब्दस्य प्रभावः**, "संकीर्त्य नारायणशब्दमात्रम्", "नारायणेति वक्ताऽऽस्ये", "नारायणेति शब्दोऽस्ति" इत्यादिषु, दिव्यसूरीणां "[1]कुलं दद्यात् धनं दद्यात्", "[2]नारायणस्य माता नरकं न गच्छेत्" इत्यादिषु गाथासु च प्रसिद्धः । नारदीयकल्पेऽपि, "रोगापद्भयदुःखेभ्यो मुच्यन्ते नात्र संशयः । अपि नारायणेत्येतच्छब्दमात्रप्रलापिनः ॥" इत्यभ्यधायि । अयमेव स्वर-व्यञ्जनभेदेनाष्टाक्षरत्वेन भाव्यमानः श्रीमन्त्रतुल्यो भवतीति पुराणान्तरोक्तम् ॥

---

1 कुलन्तरुं शेल्वं तन्दिडुम्—पेरियतिरुमोऴि 1-1-9

2 नारणन् तम् अन्नै नरकं पुकाळ्—पेरियाऴ्वार् ति. 4-6-1.

(नारायणशब्दे समासद्वयम्)

ईश्वरापृथक्सिद्धानां नाराणाम्, नारा अयनं यस्येति, नाराणामयनमिति च वैयधिकरण्यं निष्कर्षविवक्षया जातम्। अस्य शब्दस्य श्रीशठकोपसूरिः, "[1]संख्यातीत-तादृशकल्याणगुणकतेजः(स्वप्रकाश)-पदार्थ-नाशरहितविलक्षणगुण - नारायण[स्य]" इति, "[2]नारायणः कृत्स्नसप्तलोकीनाथः" इति च पूर्वापरयोः समासद्वयार्थं प्रदर्शयामास।

अत्र हेयप्रत्यनीकत्व-कल्याणैकतानत्वरूपमुभयलिङ्गत्वमुभयविभूतियोगश्च गर्भितम्। देवीभूषणायुधपरिजनपरिच्छद-द्वारपालपार्षदादिभेदा अप्यत्रानुसन्धेयाः॥

कारणत्वमबाध्यत्वमुपायत्वमुपेयता।
इति शारीरकस्थाप्यमिह चापि व्यवस्थितम्॥

इदं सर्वं 'ज्ञानानन्दामलत्वादि' इत्यारभ्य भट्टार्याणां नित्ये प्रतिपादितम्॥

(नारायणशब्दार्थः)

अत्र "सृष्ट्वा नारं तोयमन्तःस्थितोऽहं येन स्यान्मे नाम नारायणेति", "आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥" इत्यादिषु अपामुपादानं तत्त्वान्तराणा-

---

1 एण्पेरुक्कन्नलत्तोण्पोरुळ् ईरिलवण्पुगऴ् नारणन्—
तिरुवाय्मोऴि 1-2-10

2 नारणन् मुऴुवेऴुलकुक्कुनादन् तिरुवाय्—2-7-2

मपि उपलक्षणमित्येतत्, "नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥" इत्यादिभिः सिद्धम् । अस्मिन् बहुव्रीहिसमासरूपे निर्वचने "नराज्जातानि तत्त्वानि" इति नारशब्दार्थस्य प्रतिपादनात् महोपनिषत्प्रभृत्युक्तरीत्या ब्रह्मेशानादिकं सर्वं प्रति नारायणस्य सर्वविधकारणत्वम्, अयनशब्दे ईयते इत्ययनमिति कर्मव्युत्पत्त्या एतद्व्याप्यकस्य सर्वव्यापकत्वं तदुपयुक्तं निरतिशयसूक्ष्मत्वं चोक्तं भवति । एते अर्थाः "ईयतेऽस्मिन्" इत्यधिकरणव्युत्पत्तावपि संभवन्ति ।

(जीवानां नरशब्दार्थता)

"नाराणामयनत्वाच्च नारायण इति स्मृतः", "नारस्त्विति सर्वपुंसां समूहः परिकीर्तितः । गतिरालम्बनं तस्य तेन नारायणः स्मृतः ॥", "नारो नराणां संघातस्तस्याहमयनं गतिः । तेनास्मि मुनिभिर्नित्यं नारायण इतीरितः॥", "नारशब्देन जीवानां समूहः प्रोच्यते बुधैः । तेषामयनभूतत्वात् नारायण इहोच्यते ॥ तस्मान्नारायणं बन्धुं मातरं पितरं गुरुम् । निवासं शरणं चाहुर्वेदवेदान्तपारगाः" इत्याद्युक्तरीत्या तत्पुरुषसमासत्वेऽपि निरुक्तिबलात् अयनशब्दः पुल्लिङ्गः ।

अत्र "रीङ् क्षये" इति धातुनिष्पन्नेन 'र' इत्यनेन स्वरूपविकारवत्त्वात् क्षयिष्णुमचित्पदार्थमभिधाय, तद्व्यतिरिक्तं स्वरूपविकाररहितं चेतनवर्गं नगनैकादिशब्दवत् नसमासेन नरशब्देनाभिधाय तत्समूहान् नारशब्देनाभिधाय, एषां समूहानामयनमित्यनेन स्वाधीन - त्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्ति-

भेदस्य तस्य नरशब्दवाच्यत्रिविधात्मसमूहानामपेक्षितहेतुत्वेन, स्वयंभोग्यत्वादुपेयत्वेन, "विष्ण्वाधारं यथा चैतत् त्रैलोक्यं समवस्थितम्", "यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इत्याद्युक्तरीत्याऽऽधारत्वेन चावस्थितिः प्रत्यपादि ॥

कथमिति चेत्—इण् गताविति धातोः ईयतेऽनेनेत्ययनशब्दे करणव्युत्पत्त्या ईश्वर उपायत्वेन, "ईयतेऽसौ" इति कर्मव्युत्पत्त्या उपेयत्वेन ईयतेऽस्मिन् इत्यधिकरणव्युत्पत्त्याऽऽधारत्वेन च प्रतीयते। "अय पय गतौ" इति धातोरयमयनशब्दो निष्पन्न इति वा। एषामुपायत्वोपेयत्वादीनामुपयुक्तं सौलभ्यं परत्वं चात्र सिद्धम्।

अयनमिति वासस्थानं यदि, तदा बहुव्रीहिसमासेनान्तर्व्याप्तिः तत्पुरुषसमासेन बहिर्व्याप्तिश्च प्रतीयते इत्यप्यनुसन्दधते। इदमुभयमपि श्रुतिसिद्धम्। अन्तर्व्याप्तिर्नाम—एषां स्थितिदेशे स्वासत्त्वासहा स्वस्य संपृच्य स्थितिः। बहिर्व्याप्तिर्नाम—एतेषामभावस्थलेष्वपि सर्वत्र स्वस्य सद्भावः। विभूनां कालादीनां विषये बहिर्व्याप्तिर्न वक्तव्या। "नारायणमणीयांसम् अशेषाणाम् अणीयसाम्" इत्यनेनोच्यमानम् (अणीयस्त्वम्) अन्तर्व्याप्त्यनुगुणतयाऽवस्थितं प्रतिघातानर्हत्वम्; न त्वणुपरिमाणत्वम्। एतद्वचनमुपाध्यवच्छेदादिति सूत्रभाष्यादिसिद्धम्।

व्याप्तस्य (भगवतः) प्रतिवस्तुपूर्णत्वं नाम—एकैकोपाध्यवच्छिन्नप्रदेशस्यैव सर्वनिर्वहणक्षमशक्तियुक्तत्वम्; न तु प्रतिवस्तु

स्वरूपसमाप्तिः । एतदभ्युपगमे वह्निव्याप्तिविरोधः प्रसज्येत । अघटितघटनाशक्त्या एतन्निर्वहणे विरुद्धसमुच्चयाभ्युपगन्तृपरमत-प्रकारः प्रसज्येत ।

अत्र प्रथमाक्षरेण, नारशब्दे प्रकृत्या नरशब्देन, अयन-शब्देन च सर्वेश्वरे प्रतिपाद्यमाने रक्षकत्वकारणत्व-नित्यत्वनेतृत्व-आधारत्वान्तर्यामित्वाद्याकारभेदैस्त्रीण्यपि सप्रयोजनानि ।

प्रणवे तृतीयाक्षरेण चेतनस्य प्रकाश्यमानत्वे सत्येव, अत्र नारशब्देन पुनः प्रतिपादनं किमर्थमिति चेत्—"[1]अहं त्वां विना नास्मि; पश्य नारायण; त्वं मां विना नासि" इति, "रामानुजं लक्ष्मण-पूर्वजं च" इति चोक्तरीत्या एकेन परस्य निरूपणे क्रियमाणे, अर्जुन-रथवत् प्रणवस्य शेषप्रधानत्वात्, रासमण्डलवत् नारायणशब्दस्य शेषिप्रधानत्वाच्च पुनरुक्तिर्नास्ति । प्रणवेऽपि शाब्दप्राधान्यस्य जीव-गतत्वेऽपि रक्षकस्य शेषिण एव आर्थं प्राधान्यम् । प्रणवे स्वरूपतो गुणतश्च ज्ञानाकारत्वेन प्रत्यक्त्वेन अणुत्वेन च प्रतीतस्य जीवस्य नारशब्देन क्षयरहित इति नित्यत्वस्य बोधनात्, नरसमूहप्रतिपादनेन जीवानामन्योन्यभेदस्य व्यक्तीकरणात्, नराज्जातानि नाराणीति निर्वचने विशिष्टवेषेण ब्रह्मकार्यत्वस्य प्रतीतेश्च पदद्वयस्य प्रयोजन-भेदोऽस्ति । नारशब्दसमानाधिकरणेनायनशब्देनैषां व्याप्यत्वादि-सिद्धिरपि द्रष्टव्या । नित्यानां बहूनां चेतनानामेको नित्यश्चेतनोऽभिमत-

1 नानुन्नैयन्रियिलेन् कण्डाय् नारणने नी येन्नै यन्रि यिलै—नान्मुकन् तिरुवन्तादि 7

हेतुरिति श्रुत्यर्थोऽप्यत्र द्रष्टव्यः । नित्यत्वेनप्रमाणसिद्धस्य जीवस्य ब्रह्मकार्यत्वं विशेषणद्वारकम् । इत्थं नारायणात्मकादिकल्पोक्तानि व्युत्पत्त्यन्तराण्यपि सर्वाण्येतत्तुल्यानि ।

(सर्वद्रव्यस्य नरशब्दार्थता)

"चेतनाचेतनं सर्वं विष्णोर्यद् व्यतिरिच्यते । नारं तत् अयनं चेदं यस्य नारायणस्तु सः ॥" इत्युक्तत्वेन, "सर्वपुंसां समूहः" इत्यस्याप्युपलक्षणत्वात् क्षयिष्णुत्वाभावात् स्वरूपतः प्रवाहतो वा नित्यानां नरशब्दवाच्यानां सर्वतत्त्वानां समूहाः नाराः ।

(भगवतो नरशब्दार्थता)

सर्वव्यापकत्वादिविशिष्टस्यैव सतोऽपि तद्गतदोषान् तत्प्रयुक्तदोषांश्च निवर्तयन्त्याः क्षयरहित इति व्युत्पत्तेः, 'नृ नये' इत्यादिभ्यः, जन्हुर्नारायणो नरः" इति नामधेयतया प्रतिपादनात्, "आपो नारायणोद्भूतास्ता एवास्यायनं पुनः" इति व्यासस्मृतिवाक्येन "आपो वै नरसूनवः" इत्यादिषु नरशब्दस्य नारायणबोधकत्वस्य सुव्यक्तत्वाच्च नर इति नित्यस्य सर्वनेतुः सर्वेश्वरस्य [श्री]नामत्वात्, "नरसंबन्धिनो नारा नरः स पुरुषोत्तमः । नयत्यखिलविज्ञानं नाशयत्यखिलं तमः ॥ न रिष्यति च सर्वत्र नरस्तस्मात् सनातनः । नरसंबन्धिनः सर्वे चेतनाचेतनात्मकाः॥ ईशितव्यतया नाराः धार्यपोष्यतया तथा । नियाम्यत्वेन सृज्यत्वप्रवेशभरणैस्तथा ॥ अयते निखिलान् नारान् व्याप्नोति क्रियया तथा । नाराश्चाप्ययनं तस्य तैस्तद्भावनिरूपणात् ॥ नाराणामयनं वासः ते च तस्यायनं सदा । परमा च गतिस्तेषां नाराणामात्मनां सदा ॥"[१]

इत्यहिर्बुध्न्यादिकृतनिर्वचनरीत्या 'नरसंबन्धि नारम्' इति व्युत्पत्त्या सर्वेश्वरस्य स्वरूपनिरूपकधर्माणां निरूपितस्वरूप-विशेषणधर्माणां व्यापाराणां विग्रहविशेषाणाम् अन्येषाञ्च त्रिविधचेतनाचेतनानां सर्वेषां नारशब्दार्थत्वे सति स्वव्यति-रिक्तस्य सर्वस्याऽऽश्रयत्वादिरूपेणावस्थितिरूपस्य प्रकारस्य विवक्षितत्वात् स्वनिष्ठत्वादीनि प्रतिपाद्यन्ते ।

इत्थं व्यापनभरणनियमनस्वाम्यादिभिः पृथग्भूतस्य पुरु-षोत्तमस्य तत्सम्बन्धिनां च कुदृष्टिकथितस्वरूपैक्यादिविषयक-भ्रमनिवर्तनौपयिकं सर्वशरीरित्व-सर्वशब्दवाच्यत्वादिवैभवमत्र फलितम् । नरशब्देन शोधकवाक्यार्थः, नारशब्देन "नराज्जातानि तत्त्वानि नाराणि" इत्युक्तेः कारणवाक्यार्थः, अयनशब्देन तत्तदुपासनवाक्यार्थाः सर्वेऽप्यत्र प्रकाशिता भवन्ति ।

सुबालोपनिषत्प्रभृतिषु सर्वान्तर्यामी सर्वविधबन्धुश्च सर्वेश्वरो नारायणशब्देन देवतान्तरव्यावृत्तः प्रतिपादितः । लोके विद्यमानाः सर्वे बन्धवोऽपि भगवत्संकल्पेन बन्धवो जाताः । "त्वमेव माता च पिता त्वमेव," "[1]मम उपकारको मम पिता", "पिता त्वं माता त्वम्" इत्याद्युक्तरीत्या निरुपाधिकसर्वविधबन्धुः सर्वेश्वर एक एव । "यस्य प्रसादे सकलाः प्रसीदेयुरिमाः प्रजाः" इति, "प्रसन्नमभवत् तस्मै प्रसन्नाय चराचरम्", "प्रसन्ने देवदेवेशे"

---

1 एम्पिरानेन्दै—पेरियतिरुमोड़ि 1-1-6

इति चोक्तत्वात् तस्मिन् प्रसन्ने सति प्रतिकूला भवन्तः केऽपि न सन्ति। अस्येश्वरस्य, "सुहृदं सर्वभूतानाम्" इत्युक्त आकारः स्वभावसिद्धः। आकारान्तरं चेतनगताज्ञातिलङ्घनरूपोपाधिनिबन्धनम्। तदप्यल्पव्याजेन निवर्तेत।

(नारायणशब्दोत्तरचतुर्थीविभक्त्यर्थः)

अस्मिन् नारायणशब्दे चतुर्थ्या अग्रे वक्ष्यमाणानां वाक्यार्थानामनुगुणतया तादर्थ्यादयः प्रदर्श्यन्ते। स्थूलानुसन्धाने इयं चतुर्थी नमःशब्दयोगनिबन्धनाऽपि स्वीकर्तुं युक्ता। तदाऽस्याश्चतुर्थ्याः प्रयोजनातिशयो नास्ति। "षष्ठपञ्चदशात् वर्णात् केवलव्यञ्जनीकृतात्। उत्तरो मन्त्रशेषस्तु शक्तिरित्यस्य कथ्यते॥" इत्युक्तत्वादयं श्रीमन्त्रे फलसिद्धिहेतुभूतः प्रदेशः। योजनाविशेषेषु फलप्रार्थनाऽप्यत्रैव भवति। "अर्थात् प्रकरणात् लिङ्गात् औचित्यात् देशकालतः। शब्दार्थाः प्रविभज्यन्ते, न शब्दादेव केवलात्॥" इत्युक्तरीत्या एकस्य शब्दस्यैव प्रकरणाद्यानुगुण्येनार्थभेदाभ्युपगमः सर्वसम्मतः। अतः "दीयमानार्थशेषित्वं संप्रदानत्वमिष्यते" इत्याद्युक्तरीतिकस्य परस्वत्वापादनस्यात्रायुक्तत्वेऽपि, ईश्वरः स्वस्य शेषभूतं वस्तु स्वयमेव यथा रक्षेत् तथासमर्पणमात्रमभिप्रेत्य एषु व्यापकमन्त्रेषु चतुर्थीं संप्रदानार्थकत्वेनाहिर्बुध्न्यो व्याचख्यौ। "नीचीभावेन संयोत्यमात्मनो यत् समर्पणम्। विष्ण्वादिषु चतुर्थी तत्संप्रदानत्वदर्शिनी॥ नीचीभूतो ह्यसावात्मा यत् संरक्ष्यतयाऽर्प्यते। तत् कस्मा इत्यपेक्षायां विष्णवे स इतीर्यते॥" इत्यस्मिन् वचने 'विष्ण्वादिषु' इत्युक्तत्वात् नारायणादिशब्देषु चतुर्थ्यपि व्याख्याता।

(नकारादीनां पूर्वाचार्यसंगृहीता अर्थाः)

अस्मिन् श्रीमन्त्रे **नकारादीनां** सप्तानामक्षराणां प्रत्येकं **मन्त्रस्मृतिषूक्तान् अर्थान्**, "नायकत्वं च सर्वेषां नामनत्वं परे पदे। नाशकत्वं विरुद्धानां नकारार्थः प्रकीर्तितः॥ मङ्गलत्वं महत्त्वं च महनं च करोति यत्। आश्रितानां ततो ज्ञेयो मकारार्थस्ततो बुधैः॥ नास्तित्वयहानिर्नित्यत्वं नेतृत्वं च हरेः पदे। नाकारसेविनां नृणां मन्त्रविद्धिः प्रकीर्तितः॥ रञ्जनं भगवत्याशु रागहानिस्ततोऽन्यतः। राष्ट्रत्राणादिकं चापि प्राप्यते रेफसेवया॥ योगोद्योगः(योगो योग ?)फलं चाशु यकारात प्राप्यते बुधैः। वर्णनं च तथा विष्णोर्वाणीसिद्धिर्णकारतः॥ यक्षराक्षसवेतालभूतादीनां भयाय यः। एवमक्षरनिर्वाहो मन्त्रविद्धिः प्रकीर्तितः॥" इत्यादिभिः केचिदाचार्याः सञ्जगृहुः॥

इत्थं **पदानां व्याकरणनिरुक्तादिसिद्धव्युत्पत्तिपरामर्शेन, परवादिमूलकदोषाः** यथा परिमार्ज्येरन् तथा विशदीकृतः **श्रीमन्त्ररूपो** दर्पणः **परस्वरूपादीन्, स्वस्वरूपे** दुर्ज्ञेयान् स्वभावांश्च सर्वान् सुव्यक्तं **प्रदर्शयति॥**

(मूलमन्त्रानुसन्धेयभगवद्गुणवर्गसंग्रहः)

एतस्य **प्रतिपाद्यदेवताभूतस्य प्राप्यस्य परस्वरूपस्या**स्मिन् श्रीमन्त्रे **शाब्दैरार्थैश्च प्रकारैः सह यथाप्रमाणमनुसन्धाने—**

**रक्षकत्वं** तस्य **स्वभावसिद्धत्वं** तस्य **सर्वविषयत्वं रक्ष्यवस्तुविशेषानुरूपाया** रक्षाया **नानाप्रकारत्वं सर्वदा रक्षकत्वं सर्वत्र रक्षकत्वं सर्वप्रकाररक्षकत्वं स्वार्थरक्षकत्वम्, सर्वरक्षकत्वा-**

पेक्षितं सर्वज्ञत्वं सर्वशक्तित्वं स्वेच्छाव्यतिरिक्तानिवार्यत्वम् अनतिक्रमणीयरक्षणसंरम्भत्वं परमकारुणिकत्वम् अवसरप्रतीक्षत्वं व्याजमात्रसापेक्षत्वम् आश्रितसुलभत्वं विश्वसनीयत्वं सापराध-घटनाद्यनुगुणविशेषणवत्त्वं शेषित्वं तस्य निरुपाधिकत्वनित्यत्व-सर्वविषयत्वानि अनन्यशेषित्वं गुणकृतशेषित्वं सपत्नीक-शेषित्वं समाभ्यधिकराहित्यम् आत्महविरुद्देशार्हत्वम् अचिद्बद्ध-मुक्तनित्यविलक्षणत्वं परशेषित्वहेतुत्वम्—

स्वतःकर्तृत्वं शक्त्याधायकत्वं प्रेरकत्वम् अनन्यप्रेर्यत्वम् अनुमन्तृत्वं कर्मसाक्षित्वं सहकारित्वं प्रियप्रवर्तकत्वं हित-प्रवर्तकत्वं निरुपाधिकनन्तव्यत्वं वशीकार्यत्वं सिद्धोपायत्वं साध्योपायहेतुत्वं श्रुतिस्मृतिरूपाज्ञावत्त्वं दण्डधरत्वं सर्वसमत्वम् आश्रितपक्षपातित्वम् अविद्यादिहेतुत्वम् अविद्याद्यनर्हत्वम् आश्रिताविद्यानिवर्तकत्वम्—

स्वरूपान्यथाभावराहित्यं स्वभावान्यथाभावराहित्यं सर्वनेतृत्वं सर्वजगद्व्यापारलीलत्वम्—सर्ववेदान्तप्रधानप्रतिपाद्यत्वं सर्वोपादानत्वं सर्वनिमित्तत्वं सत्यसंकल्पत्वं सर्वशरीरित्वं सर्वशब्दवाच्यत्वं सर्वकर्म-समाराध्यत्वं सर्वविधबन्धुत्वं सर्वव्यापकत्वं निरतिशयसूक्ष्मत्वं सर्वाधारत्वं स्वनिष्ठत्वं सत्यत्वं ज्ञानत्वम् अनन्तत्वम् आनन्दत्वम् अमलत्वं निरूपित-स्वरूपविशेषणानुक्तानन्तगुणवत्त्वं नित्यदिव्यमङ्गलविग्रहवत्त्वं परव्यूहाद्य-वस्थावत्त्वं सत्यावतारत्वम् अजहत्स्वस्वभावत्वम् अप्राकृतावतारत्वम्

अकर्मवश्यावतारत्वम् अकालनियमावतारत्वम् आश्रितार्थगुणपरिवाहाव-तारत्वं सर्वावस्थशुभाश्रयत्वं सर्वावस्थलक्ष्मीसहचरत्वं दिव्यभूषणायुध-महिषी-स्थान-परिजन-परिच्छद-द्वारपाल-पार्षदादिमत्त्वम्——

स्थूलशरीरविश्लेषकत्वं विश्रमस्थानत्वम् अनुग्रहविशेषवत्त्वं ब्रह्मनाडीद्वारप्रकाशकत्वं तत्प्रवेशकत्वं ब्रह्मरन्ध्रोत्क्रान्तिहेतुत्वम् अर्चि-राद्यातिवाहिकनियोक्तृत्वं सूर्यद्वारादिनेतृत्वम् अण्डावरणप्रकृतिमण्डलाति-क्रमहेतुत्वं विरजातीरप्रापकत्वं सूक्ष्मशरीरविश्लेषकत्वम् अप्राकृतदेहप्रदत्वं दिव्याप्सरस्सत्कारादिप्रयोजकत्वं ब्रह्मगन्धादिप्रवेशकत्वं नित्यमुक्त-सत्कारविशेषहेतुत्वं पर्यङ्काधिरोहणपर्यन्तादरवत्त्वं परिपूर्णानुभवहेतुत्वं प्रधानप्राप्यत्वं सदेहविदेहबहुदेहकृतसर्वविधकैङ्कर्यप्रतिसम्बन्धित्वम् अवाप्तसमस्तकामत्वं निरतिशयानन्दवत्त्वं निरतिशयभोग्यत्वं सर्वदाऽनु-कूलस्वभावत्वम् अत्यन्ततुल्यभोगप्रदत्वम् आश्रितविश्लेषासहत्वम् अपुनरा-वृत्तिहेतुत्वमित्येते प्रधानतया, अन्येऽप्येतदनुबद्धतया, समुत्कर्षाः सर्वेऽपि क्रमेणानुसन्धेयाः ॥

इह संग्रहतः श्रीमान् गोप्ता शेषी समाधिकदरिद्रः ।<br>
शरणं सर्वशरीरी प्राप्यः सेव्यश्च साधुभिर्भाव्यः ॥

(मूलमन्त्रानुसन्धेयजीवगुणवर्गसंग्रहः)

इत्थं प्राप्यं परमात्मानं प्राप्नुवतो जीवात्मनः अनेन श्रीमन्त्रेणा-नुसन्धानावसरे——श्रीमद्रक्ष्यत्वम् अनन्यरक्ष्यत्वं सर्वदा सर्वप्रकाररक्षकवत्त्वं सुशीलरक्षकवत्त्वं पुरुषकारवत्त्वं महाविश्वासयोगित्वं सलक्ष्मीकदासत्वं नित्यदासत्वं निरुपाधिकदासत्वम् अनन्यार्हदासत्वं ज्ञानत्वम् आनन्दत्वं

स्वयंप्रकाशत्वं स्वस्मैभासमानत्वम् अहंशब्दवाच्यत्वम् अणुपरिमाणत्वं सूक्ष्मत्वं छेदनाद्यनर्हत्वं चतुर्विंशतितत्त्वविलक्षणत्वम् अमलत्वम् ईश्वराद-न्यत्वं ज्ञातृत्वम् आनुकूल्यादियोग्यत्वं परमपुरुषार्थपेक्षार्हत्वं नियोगयोग्यत्वं कैङ्कर्ययोग्यत्वं सर्वसाक्षात्कारयोग्यत्वं निरतिशयानन्दयोग्यत्वम्— परापेक्ष-कर्तृत्वं सोपाधिकस्वामित्वं भागवतशेषत्वं भागवतकिङ्करत्वम् अनन्यो-पायत्वम् अविद्यादिमत्त्वम् करणादिसापेक्षज्ञानविकासवत्त्वं संसार-भयाकान्तत्वम् अविद्यादिनिवृत्तिसापेक्षत्वम् अकिञ्चनत्वम् ईश्वरसौ-हार्दादिमत्त्वं सदाचार्यप्राप्तिमत्त्वं साध्योपायानुष्ठानार्हत्वम् उपायनिष्ठत्वं महाप्रभावत्वं विशिष्टवेषेण सृष्टिसंहारविषयत्वम् अक्षयत्वं स्वतो बहुत्वम् असंख्यातत्वम् ईश्वरव्याप्यत्वम् ईश्वरनियाम्यत्वम् ईश्वरधार्यत्वम् एतद्धर्मनियमनिबन्धनमीश्वरशरीरत्वम् ईश्वरलीलारसहेतुत्वम् ईश्वरभोगोप-करणार्हत्वं तदधीनगतित्वं तदधीनतत्प्राप्तित्वम् ऐश्वर्यकैवल्यनिरपेक्षत्वं भगवत्प्राप्त्यर्थित्वं सर्वाविद्योन्मुक्तत्वम् आविर्भूतस्वरूपत्वं सर्वद्रष्टृत्वं सर्वप्रकारभगवदनुभवैकभोगत्वं निरतिशयानन्दवत्त्वं भगवद्भोगार्थभोक्तृत्वम् ऐच्छिकविग्रहादिमत्त्वम् इच्छाविघातरहितत्वम् ईश्वरलक्षणव्यतिरिक्त-परमसाम्यम् अशेषकैङ्कर्यैकरतित्वम् अपुनरावृत्तिमत्त्वमित्येते प्रधानतया, अन्ये च प्रामाणिका अर्थाः सर्वेऽप्येषु पदेषु क्रमेण शब्दसामर्थ्यादर्थ-स्वभावाच्चानुसन्धेयाः ॥

पदत्रयेऽत्र संक्षेपात् भाव्याऽनन्यार्हशेषता ।
अनन्योपायता स्वस्य तथाऽनन्यपुमर्थता ॥

## (मूलमन्त्रार्थानुसंधानप्रयोजनम्)

इत्थं "सर्वमष्टाक्षरान्तस्स्थम्" इत्युक्तप्रकारेऽस्मिन् श्रीमन्त्रे चिद्चिदीश्वरस्वरूपाणाम्, जीवानामन्योन्यभेदस्य, शेषशेषिभावादिभिर्निरुपाधिकजीवेश्वरभेदस्य, निखिलजगन्निमित्तोपादानभूतपरदेवताविशेषनिर्धारणादीनां च सिद्धेः, एवमनुसन्दधानैरधिष्ठिते ग्रामे वसतामपि—ईश्वरो नास्तीति, निर्विशेष इति अत्यन्तोदासीन इति, प्रतिफलनतुल्यैश्वर्य इति, कर्मविशेषसिद्धैश्वर्य इति, कदाचित कर्मादिपरवश इति, तिस्रो मूर्तयः समा इति, त्रिमूर्त्यैक्यमिति, त्रिमूर्त्युत्तीर्णं परतत्त्वमिति, ब्रह्मादिषु एक ईश्वर इति, स्वरूपपरिणामवानिति, निमित्तोपादानैक्यमभ्युपगन्तुमयुक्तमिति, जीवेश्वरौ एकात्मेति, उपाधिसिद्धभेदाविति, नित्यभिन्नाभिन्नाविति, जीवः कर्ममात्राधीनशेषभाव इति, अनियतशेषभाव इति, जड इति, ज्ञानमात्रस्वरूप इति, नित्यमुक्त इति, आरोपितभोग इति, अकर्तेति, ईश्वरनिरपेक्षकर्तेति, आप्रलयस्थायीति, आमोक्षस्थायीति, एक इति, स्वनिष्ठ इति, स्वरूपतः कार्यभूत इति, कार्यत्वप्रसङ्गरहित इति, कर्ममात्रोपाय इति, मुक्तदशायां पाषाणकल्प इति, स्वात्मानन्दमात्रतृप्त इति, अत्यन्तस्वतन्त्र इति, ईश्वरेण सह एकीभूत इति, व्यापारादिरहित इति, विभागाविभागादिशक्तिमानिति, आनन्दतारतम्यवानिति, व्यवस्थितसालोक्यादिभेदवानित्येवंप्रकारेषु अन्यान्यैवंविधप्रकारवत्सु च बाह्यकुदृष्टिमतेषु केनापि व्यामोहो न जायेत ।

इत्थमेव रक्षकस्य श्रियः पत्युर्विषये विश्वासमान्द्यं, रक्षकान्तरान्वेषणं, "त्वं मेऽहं मे" इति विवादहेतुनिरुपाधिकान्यशेषत्वभ्रमः, देवतान्तरप्रावण्यम्, तद्भक्तसंसर्गः, तदितर-असेव्यसेवारुचिः, देहात्मभ्रमादयः, स्वतन्त्रात्मभ्रमादयः, स्वार्थपरिग्रहः, भागवतापचारः, आकिञ्चन्यविस्मृतिः, संसारानुवृत्तिरुचिः, आत्मनाशादिभयम् असदाचाररुचिः, शत्रुमित्रादिविभागनिरूपणम्, बान्धवान्तरपरिग्रहः, प्रयोजनान्तररुचिः, परमप्रयोजनवैमुख्यम्, अन्ये च स्वनिष्ठाविरोधिनोंशाः ईषदपि नानुवर्तेरन् ॥

इह निजपक्षविरुद्धैरीदृशनिष्ठाविरोधिभिश्चान्यैः ।
द्विचतुष्कसारवेदी गङ्गाहृद इव न गच्छति क्षोभम् ॥

(श्रीमन्त्रे दशविधयोजनानिरूपणम्)

अस्मिन् श्रीमन्त्रे वाक्य-वाक्यार्थयोः स्थितिप्रकारः कथमिति चेत्-इमम् **एकवाक्य**मिति **वाक्यद्वय**मिति **वाक्यत्रय**मिति च तत्तत्संप्रदायतोऽनुसन्दधते । एवं **वाक्यार्थमपि बहुप्रकारं** विभज्यानुसन्दधते ।

**एकवाक्य**रूपत्वे, "तस्य वाचकः प्रणवः" इत्याद्युक्तरीत्या **प्रणवप्रतिपाद्यस्वभावविशिष्टाय नारायणाय नमः** इत्यन्वयः । अस्मिन् प्रणवे स्वतो नामभावार्हे सति, "अव्यक्तार्थतयोङ्कारः केवलं नैव साधकः" इति शाण्डिल्याद्युक्तप्रक्रियया व्यापकमन्त्रेषु नामान्तरं व्यक्त्यर्थम् । अयं योजनाविशेषोऽहिर्बुध्न्याद्युक्तस्थूलानुसन्धानप्रकारपरामर्शी उपायपरः । एवं सत्यपि स्वरूपपुरुषार्थावत्रान्तर्गतौ । "बद्धाञ्जलिपुटा हृष्टा नम इत्येव वादिनः"

इत्यादिकं दृष्ट्वा प्राप्यान्तर्गतशेषवृत्तिपरत्वेनाप्यनुसन्दधते । अयं वृत्तिविशेषोऽपि स्वरूपानुसन्धानपूर्वकः । इदमपि कृतोपायाना-मेतावद्रस(स्वाद)नौपयिकावस्थायामप्युपजीव्यम् ।

एतयोर्द्वयोरनुसन्धानयोः प्रतिष्ठितत्वाय स्वरूपविवेकः आव-श्यकः । तदर्थं वाक्यद्वयरूपेणानुसन्धाने, अकारनारायणशब्दवाच्य-सर्वरक्षकत्वसर्वाधारत्वादिविशिष्टस्यैवाहं निरुपाधिकानन्यार्हशेष-भूतोऽस्मि ; न मम स्वभूतोऽस्मि, किमपि प्रति निरुपाधिकस्वाम्यपि नास्मि, निरपेक्षस्वतन्त्रोऽपि नास्मीत्युक्तं भवति ॥ अकारनारायण-शब्दयोरुभयोरपि भगवन्नामत्वात् पुनरुक्तिः किं न भवतीति चेत्— तदानीं व्युत्पत्तिविशेषसिद्धार्थविशेषविवक्षणेन एकं विशेषणं भवति । अकारवाच्याय नारायणायेति च पुनरुक्तिः सुपरिहरा । भगवच्छब्दो नामधेयं सन्नपि वासुदेवादिशब्दसमानाधिकरणः स्थितः किल । सर्वबीजाक्षरवाच्यं सर्वकारणं किं देवतान्तरमिति शङ्कानवकाशाय नारायण इति विशेषणकरणादपि सप्रयोजनम् । मन्त्राणां पदक्रमोऽध्ययननियतः, अन्वयोऽर्थानुगुणो भवति । इत्थं वाक्यद्वयरूपत्वे श्रीमन्त्रः कृत्स्नोऽपि स्वरूपपरः । इमां स्वरूप-परयोजनामभिप्रेत्य श्रीमन्त्रे जनित्वा द्वये वृद्धिमान् भूत्वा द्वयैकनिष्ठो भवेति पूर्वेऽनुजगृहुः । जननं नाम स्वरूपज्ञानस्य जननात्, "[1]तदाऽहं न जातोऽस्मि, जननात्परं न विस्मृतवानस्मि" इत्युक्तप्राक्तनावस्थानि-

1 यन्नु नान् पिरन्दिलेन, पिरन्दपिन् मरन्दिलेन्. तिरुच्चन्द — 64

वृत्तिः । सा च स्वेच्छयाऽनन्यशेषत्वानन्याधीनत्वतन्मूलकानन्य-प्रयोजनत्वानन्यशरणत्वशालिता । वृद्धिर्नाम—अधिकारिविशेषानु-रूपकर्तव्यविशेषविषयज्ञानविशेषेण उपायपरिग्रहकरणम् । द्वयैक-निष्ठत्वं नाम—द्वयानुसन्धानेनोपायान्तरे प्रयोजनान्तरे च संबन्धच्छेदेन एतत्प्रतिपादिते उपाये प्रयोजने च प्रतिष्ठितत्वम् । इत्थं श्रीमन्त्रो द्वयं च स्वरूपोपायपुरुषार्थान् प्रदर्शयतः ।

अस्यां वाक्यद्वयरूपायां योजनायां श्रीमन्त्रः कृत्स्नः सपरि-करात्मसमर्पणपर इत्यप्यनुसंदधते । तदा प्रणवे मकारः प्रथमान्त एव भवति । हविस्समर्पणन्यायेन निरुपाधिकमात्महविर्निरुपाधि-कदेवतायै अकारवाच्याय नारायणायैव भरत्वेन समर्पितमिति फलितम् । इत्थं निरुपाधिके आत्मयागे—"न मः" इति स्वेन सह स्वस्य संबन्धं व्यवच्छिद्य "मम भरो नास्मि" इति कथितं भवति । "इदमिन्द्राय न मम" इतिवत् अत्रापि परसंबन्धविधौ स्वसंबन्धनिषेधे च प्रवृत्तत्वात् वाक्यद्वयं सप्रयोजनम् । इदं नमः समर्पणेऽपि परनिरपेक्ष-कर्तृत्वादीनां निषेधे तत्परं वा । नान्यस्य कस्यचिद्भरः, न ममापि भरः' इति वाक्यद्वयाभिप्रायकं वा । श्रीमन्त्र आत्मनिवेदनपर इत्येतमर्थं नित्ये, "मूलमन्त्रेण स्वात्मानं देवाय निवेद्य" इत्यनुजग्राह । इत्थं वैकुण्ठगद्येऽपि, "श्रीमता मूलमन्त्रेण, मामैकान्तिकात्यन्तिकपरि-चर्याकरणाय परिगृह्णीष्वेति याचमानः प्रणम्याऽऽत्मानं भगवते निवेदयेत्" इति अयमर्थो दर्शितः ।

प्रतिवाक्यम् एकं प्रार्थनापदमध्याहृत्य श्रीमन्त्रं कृत्स्नमपि द्वये उत्तरखण्डवत् इष्टप्राप्त्यनिष्टनिवृत्तिरूपपुरुषार्थप्रार्थनापरत्वेनाप्यनुसन्दधते । तदाऽपि स्वरूपानुसन्धानमत्रान्तर्गतम् । स्वरूपमात्रपरत्वेऽपि पुरुषार्थविशेषः सूचितः । तस्योपायः प्रार्थना च तत्तत्प्रमाणवशात् सिध्यतः ।

'एतन्मन्त्रोत्पाद्यशेषत्वज्ञानादीनां पूर्वमप्राप्तत्वात् अयं मन्त्रः कृत्स्नोऽपि प्राप्यपरः' इति वचोऽन्यपरम् । कथमिति चेत्— प्राप्यपरमित्येतस्य प्राप्यप्रतिपादकमिति नार्थः । शब्दोत्पाद्यं ज्ञानं शब्दस्य प्रतिपाद्यं न भवति किल ।

श्रीमन्त्रस्य वाक्यत्रयरूपत्वे स्वरूपपुरुषार्थयोः शाब्दत्वे उपायस्याऽऽर्थता वा, स्वरूपोपाययोः शाब्दत्वे पुरुषार्थस्याऽऽर्थता वा, उपायपुरुषार्थयोः शाब्दत्वे स्वरूपस्याऽऽर्थता वा, स्वरूपोपायपुरुषार्थानां क्रमेण शाब्दता वा भवति । कथमिति चेत्—

"अकारार्थायैव स्वमहमथ मह्यं न निवहा नराणां नित्यानामयनमिति नारायणपदम् । यमाहास्मै कालं सकलमपि सर्वत्र सकलास्ववस्थास्वाविस्स्युर्मम सहजकैङ्कर्यविधयः ॥" इत्युक्तरीत्या प्रणवनमसी स्वरूपं शोधयतः । तृतीयपदं प्रणवोक्तं तादर्थ्यं पुरस्कृत्य अध्याहृतेन क्रियापदेन संबध्य पुरुषार्थप्रार्थनार्थम् । तदा अनिष्टनिवृत्तिप्रार्थना अर्थस्वभावेन सिध्यति । द्वये, "भवांस्तु सह वैदेह्या" इत्यादिषु चोक्तरीत्या कैङ्कर्यप्रतिसम्बन्धिनः सपत्नीकत्वादत्रापि, सपत्नीकाय नारायणाय भवेयमित्युक्तं भवति । नारायणायेत्यस्य क्रिया-

पेक्षायाः सत्त्वादौचित्यात् भवेयमिति पदमेकमध्याहार्यम् । "[1]अप्रच्युतिकैङ्कर्यं वाञ्छामो वयम्" इति, "[2]शेषं मां दासं कर्तुं कृपां कुरु" इति, "नित्यकिङ्करतां प्रार्थये" इति, "नित्यकिंकरो भवानि" इति चेमां प्रार्थनां प्रयुयुजिरे किल । तादर्थ्यस्य नित्यसिद्धत्वेनानाशास्यत्वात् अस्य च संबन्धस्वरूपस्य प्रणवे प्रतिपादनाच्च एतत्फलभूतम्, "समुद्रे गोष्पदमस्ति" इतिवत् पुरुषार्थान्तराणि सर्वाणि गर्भीकुर्वत् परिपूर्ण-ब्रह्मानुभवपरीवाहरूपं कैङ्कर्यम्, "[3]अवधिशून्यं कालं सर्वम्" इत्यत्रो-क्तरीत्या अत्रापेक्ष्यते ॥

अत्र स्वलाभापेक्षाऽपि स्वामिलाभावसायिनी ।
स्वामिप्रयोजनापेक्षाऽप्यतः स्वानन्दहेतुका ॥

त्वत्सुखवर्धकं कैङ्कर्यमहं लभेयेत्युक्तौ, मां दासं कृत्वा त्वया सुखिना भाव्यमित्युक्तौ च उभयोः प्रयोजनं सिद्धम् । "त्रैगुण्यं षड्गुणाढ्यं च द्विधाऽन्नं परिकीर्तितम् । त्रैगुण्यमन्नं बद्धानामितरेषामथेतरत् ॥" इत्युक्तं षड्गुणाढ्यमन्नं नाम भगवद्गुणानुभवः; तन्निबन्धना भोग्य-तमकैङ्कर्यविशेषा वा । "भोगमात्रसाम्यलिङ्गाच्च" इत्युक्तरीत्या मुक्त-दशायां परमसाम्यं भोगे ज्ञाने चे(चैवे)ति तदापि स्वरूपानुबन्धिनः

---

1 वडुविलावडिमै शेय्यवेण्डुम्—तिरुवाय्मोऴि 3-3-1

2 अडियेनै याट्कोण्डरुले—पेरियतिरुमोऴि 1-9-2

3 ओऴिविल्कालमेल्लाम्—तिरुवाय् 3-3-1

शेषत्वस्य तत्फलस्य कैङ्कर्यस्य च न विरोधः। मुमुक्षुदशायां मुक्तदशायां च जायमानोऽहंग्रहः शरीरात्मभावादिति भाष्यादिषु समर्थितत्वादयमहंग्रहः पारार्थ्यकाष्ठामूलकतया प्राप्तः किल।

इत्थं मुक्तदशायामुपनमत् कैङ्कर्यं स्वतः प्राप्तं द्वन्द्वरहितं निरन्तरम् अनवच्छिन्नरसं च भवति। मुमुक्षुदशायां स्वयंप्रयोजन-भावेन क्रियमाणं कैङ्कर्यं सुकृतविशेषोपाधिकं द्वन्द्वतितिक्षायुक्तं निद्रादिभिरन्तरितमवच्छिन्नरसं च भवति। अत्रानेन क्रियमाणेषु कैङ्कर्यव्यतिरिक्तेषु व्यापारेषु भगवदाज्ञाननुगुणाः सर्वेऽपि यत्किञ्चिदेकं प्रतिकूलफलं ददति। भगवदनुज्ञातेषु काम्येषु स्वर्गपश्वाद्यर्थानि सर्वाण्यपि अनेकदोषदुष्टानुकूलाभासान् प्रदाय तन्मुखेन बाधकानि भवन्ति। अतो मुमुक्षुणा, "त्रैवर्गिकांस्त्यजेत् धर्मान्" इत्युक्तरीत्या प्रयोजनान्तरहेतून् परित्यज्य भक्तितत्त्वज्ञाने भगवद्भागवतसमृद्धिं चोद्दिश्य क्रियमाणाः काम्या भगवद्धर्माः साधनभावेनानुष्ठितत्वेऽपि बन्धकत्वाभावादुचितकैङ्कर्यकोटौ निविष्टा भवन्ति।

प्रणवोक्तस्य भगवच्छेषत्वस्य नमसि औचित्यरूपात्यन्तपार-तन्त्र्यपारार्थ्यबलात् यथाप्रमाणं तदीयपर्यन्ततयाऽवस्थितत्वात् "नारायणाय" इत्यत्रापेक्ष्यमाणं भगवत्कैङ्कर्यमपि तदीयपर्यन्तम्। "मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्। तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥", "तस्माद्विष्णुप्रसादाय वैष्णवान् परितोषयेत्। प्रसादसु-मुखो विष्णुस्तेनैव स्यान्न संशयः ॥" इत्यादिष्वयमर्थः सिद्धः।

"सर्वं परवशं दुःखम्" इत्यादीनि स्वस्याप्राप्तं क्षुद्रविषये कर्ममूलकतया जायमानं पारवश्यं दुःखकारणमिति प्रतिपादयन्ति। भगवद्भागवतविषये पारतन्त्र्यमात्माभिमानानुगुणपुरुषार्थव्यवस्थया निरतिशयप्रीतिकारणं भवति। अत्र तदीया इत्यनेन तदीयत्वव्यवसायरसवन्तो विवक्ष्यन्ते।

नारविशिष्टनारायणमुद्दिश्य कैङ्कर्येऽपेक्षिते सति विशेषणीभूतानि नाराण्यप्युद्दिश्य कैङ्कर्यमपेक्षितं भवतीत्यर्थस्य न्यायसिद्धत्वात् अत्र तदीयकैङ्कर्यं सिध्यतीति केचिदाचक्षते। इत्थं विशेषणत्वस्यैव प्रयोजकत्वे नारशब्दार्थत्वेनात्र विवक्षितानि ब्रह्मादिदेवतान्तराणि, भगवद्द्वेषिणः, पश्वादींश्च प्रति कैङ्कर्यापेक्षा कृता प्रसज्येत। नरपतिमुद्दिश्य कैङ्कर्यमपेक्षितवानित्युक्तौ, यथा नरान् उद्दिश्य कैङ्कर्यमपेक्षितं न भवति, तथाऽत्रापि न्यायमात्रेण नाराण्युद्दिश्य कैङ्कर्यापेक्षा न सिध्येत्। अतः प्रमाणमुखेन स्वाम्यभिमतकरणमपेक्षते इत्यतः तत्प्रियतमभूतान् शेषत्वज्ञानवतोऽनन्यप्रयोजनान् उद्दिश्य कैङ्कर्यमपेक्षितं भवतीत्येतावदेव। अनुभाव्यतायां नारशब्दार्थः सर्वोऽपि प्रविष्ट इत्येतदपि प्रमाणबलात् प्राप्तमित्येव।

इत्थं श्रीमन्त्रे वाक्यत्रये वाक्यद्वयं स्वरूपपरतया एकं वाक्यं पुरुषार्थप्रार्थनापरतया च योजितम्।

अनेवम्भावेन प्रणवः स्वरूपपरः, नमसि अनिष्टनिवृत्तिप्रार्थना, अनिष्टनिवृत्तौ जातायां जायमानः पुरुषार्थः "नारायणाय स्याम्" इति प्रार्थ्यत इति वा भवतु।

अस्य नमसोऽपीत्थं द्वये नमस इव, **विरोधिनिवृत्तिप्रार्थनायां तात्पर्यमिति योजनाविशेषः**, "प्रणवोदिततच्छेषभावोऽहं निजकर्मभिः । अहंकारममत्वाभ्यामभिभूतोऽप्यतः परम् ॥ तच्छेषत्वानुसन्धानपूर्वतच्छेषवृत्तिकः । भूयासमित्यमुं भावं व्यनक्ति नम इत्यदः॥" इति **भट्टार्याणां नित्ये प्रदर्शितः** । अतः **अहं न मम स्या**मिति वा **न मम किञ्चित् स्या**दिति वा **वाक्यान्वयात्**, अनेन "**अस्य** जीवात्मनोऽनाद्यविद्यासंचितपुण्यपापरूपकर्मप्रवाहहेतुकब्रह्मादिसुरनरतिर्यक्स्थावरात्मकचतुर्विधदेहप्रवेशकृततत्तदात्माभिमानजनितावर्जनीयभवभय विध्वंसनाय" इति, "[1]मिथ्याभूतं ज्ञानं दुष्टाचरणं मलिनशरीरम्" इति चोक्त**मविद्याकर्मतदुभयवासनारुचिप्रकृतिसंबन्धादिरूपं सर्वमनिष्टमत्यन्तं निवृत्तं** भवत्विति अपेक्षितं भवतीति सिद्धम् ।

इत्थ**मनिष्टनिवृत्तौ** प्रार्थितायां सत्यामिष्टप्राप्तिरपि किमपेक्षणीया ? "संपद्याऽऽविर्भावः स्वेनशब्दात्" इति, "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ यथोदपानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥" इति चोक्तरीत्येष्टप्राप्तिः किं स्वत एव न सिध्येदिति चेत्—

---

1 पोय्निन्र ज्ञानमुं पोल्लावोऴुक्कुमऴुक्कुडम्बुम्—तिरुविरुत्तम्. 1

स्वतः स्वार्हं यथा भागं पुत्रः पितुरपेक्षते ।
सापराधस्तथा दासः कैङ्कर्यं परमात्मनः ॥

स्वापराधात् स्वतः प्राप्तं हित्वा वर्तमानेनानेन, 'मद्भागो मया लब्धव्यः ; तदर्थं मदीयमपराधं कृपया क्षमस्व' इत्यपेक्षणे विरोधो नास्ति । अनेन, प्रतिबन्धकनिवृत्तौ माणिक्ये तेजः, "इच्छात एव तव विश्वपदार्थसत्ता" इत्युक्तरीत्या नियतयेश्वरेच्छया यथा पसरति— तथाऽत्रापि स्वाभाविकाः ज्ञानविकासादयः सहजकारुण्यरूपयेश्वरेच्छयोपनमन्तीत्येतत् प्रतीयते ।

अथापि भावान्तराभावपक्षे सर्वानिष्टनिवृत्तावेवेष्टप्राप्तिरूपायां सत्यां पार्थक्येनोक्तौ पुनरुक्तिः किं न भवति ? "अविद्यानिवृत्तिरेव हि मोक्ष." इति भाष्यकारः किं नानुगृहीतवानिति चेत्—

एकमेव स्वरूपेण परेण च निरूपितम् ।
इष्टप्राप्तिरनिष्टस्य निवृत्तिश्चेति कीर्त्यते ॥

एकमेव स्वरूपेण प्रतियोगिना च निरूपितं सत् प्रयोजनविशेषाभिसन्धिना पृथङ् निर्देष्टुं युज्यते । संसारदशायां काचित् प्रत्तिकूलनिवृत्तिः प्रतिकूलान्तररूपा अनुकूलप्रतिकूलोभयनिवृत्तिरूपा च भवति । अत्र सर्वप्रतिकूलनिवृत्तिभावात् अग्रे कृत्स्नमनुकूलमेव भवति । अतः पूर्वावस्थाया अनिष्टतमत्वं केवलानुकूलरूपाया उत्तरावस्थाया इष्टतमत्वं च प्रकाशयितुमादरातिशयात् पृथगपेक्षा क्रियते ।

भगवन्निग्रहादिनिवृत्तेर्जीवगतज्ञानविकासादेश्च भिन्नत्वात् पृथगपेक्ष्यत इति च भवतु। ज्ञानसंकोचादिहेतुभूतभगवन्निग्रहादिनिवृत्तिः निग्रहफलभूतज्ञानसंकोचादिनिवृत्तिरूपाः ज्ञानविकासकैङ्कर्यादयश्च भिन्ना इति पृथगपेक्षणे न दोषः किल। सर्वानिष्टनिवृत्तौ जातायां पाषाणकल्पत्वादिमतान्तरशङ्काया अप्रसङ्गार्थम्, भगवत्प्राप्तौ इन्द्रादिप्राप्ताविव दुःखसंबन्धो नास्तीति प्रत्यायने तात्पर्याच्च पृथगुक्तिरिति च भाव्यम्।

इत्थं स्वरूपस्य पुरुषार्थप्रार्थनस्य च शाब्दत्वे अस्य पुरुषार्थस्य साधनत्वेन शास्त्रविहितः साध्योपायोऽपि भरन्यासपर्यन्ततया, अकिञ्चनस्यानिष्टनिवृत्तिं प्रतिपादयति नमसि आर्थत्वेनानुसन्धेयः। अस्याः पुरुषार्थप्रार्थनाया इच्छामात्ररूपत्वातिरेकेण गोप्तृत्ववरणरूपत्वात् शेषमुपलक्षितमिति वाऽस्तु। तदा श्रीमन्त्रः स्वरूपोपायप्रधानो भवति। अयनशब्दे करणव्युत्पत्त्येश्वरस्योपायत्वं सिध्यति।

केचित्तु चरमश्लोके द्वये चोक्तक्रमादिह।
भरन्यासपरं तारं शेषं फलपरं विदुः॥

अस्मिन् श्रीमन्त्रे स्वरूपोपायपुरुषार्थास्त्रयोऽपि क्रमेण शाब्दाः। तदा प्रणवः स्वरूपपरः; नमश्शब्द उपायपरः; शेषः पुरुषार्थप्रार्थनापरः। एषां त्रयाणां विस्तारः सर्वोऽपि अध्यात्मशास्त्रैर्विशदं बुध्वा अत्रानुसन्धेयः। अस्या योजनाया वेदान्तशास्त्रस्थतत्त्वो-

पायपुरुषार्थनिरूपणक्रमेण सह सादृश्यमस्ति । कथमिति चेत्—आद्याध्यायद्वयेन परावरतत्त्वानि विशदं प्रतिपाद्य तृतीयेनाधिकार-सहितमुपायमुक्त्वा चतुर्थेन फलं प्रतिपाद्य किल शारीरकशास्त्रं परिसमाप्तं भवति । तत्र आद्याध्याद्वयोक्तं परावरतत्त्वस्वरूपं चतुर्थाध्यायोक्तं फलञ्च स्वतन्त्रप्रपत्तिनिष्ठस्यापि तुल्यम् । तृतीयाध्याये वैराग्यपादे उभयलिङ्गपादे चोक्ते संसारदोषः शरण्यगतहेयप्रत्यनीक-कल्याणैकतानत्वं च मुमुक्षुणा अनेनावश्यं ज्ञातव्ये । तृतीयपादे उपायतयोक्तान् उपासनभेदान् तदधिकारिणोऽनुष्ठातुमर्हन्ति । अकिञ्चनोऽधिकारी स्वस्य तद्दौर्लभ्यं दृष्ट्वा, "नाना शब्दादिभेदात्", "विकल्पोऽविशिष्टफलत्वात्" इत्यधिकरणोक्तन्यायेन विद्यान्तरव्यावृत्तम्, तत्प्रदेयमोक्षप्रदाने निरपेक्षञ्च न्यासमेवाऽऽदर्तुमर्हति । चतुर्थपादोक्तान् वर्णाश्रमधर्मान् उपासननिष्ठः "सहकारित्वेन च" इत्युक्तरीत्या विद्यापरिकरत्वेनानुतिष्ठेत् । स्वतन्त्रप्रपत्तिनिष्ठः, "विहितत्वाच्चाऽऽश्रमकर्मापि" इत्युक्तरीत्या भगवदाज्ञासिद्धत्वधिया स्वयंप्रयोजनत्वेनानुतिष्ठेत् । एवं सति शारीरकोक्ताः स्वरूपोपायपुरुषार्थाः सर्वेऽपि श्रीमदष्टाक्षरान्तस्थाः ।

अत्रार्थपञ्चकादीनामन्तर्भावप्रकारान् सर्वान् अधस्तादवोचाम ।

इत्थं श्रीमन्त्रः एकवाक्यरूपत्वे (1) उपायपर इति, (2) वृत्तिपर इति, वाक्यद्वयरूपत्वे (3) स्वरूपपर इति, (4) अन्वय-व्यतिरेकमुखेन समर्पणपर इति, (5) पुरुषार्थप्रार्थनापर इति,

**वाक्यत्रय**रूपत्वे (6) प्रथमपदद्वयं **स्वरूपपर**मग्रिमपदं **पुरुषार्थप्रार्थना-पर**मिति, (7) **प्रणवः स्वरूपपरो**ऽग्रिमपदद्वयम**निष्टनिवृत्तीष्टप्राप्ति-प्रार्थनापर**मिति, (8) अनया रीत्या प्रथमपदं **स्वरूपपर**मग्रिमपदद्वयमु-**पायपर**मिति, (9) प्रथमपदं **समर्पणपर**मग्रिमपदद्वयं **फलप्रार्थनापर**मिति, (10) **पदत्रयं** क्रमेण **तत्त्वोपायपुरुषार्थप्रार्थनापर**मिति च अनन्तार्थगर्भेऽस्मिन् श्रीमन्त्रे **वाक्यार्थं** दशधा **यथासंप्रदाय**मनु-संदधते ॥ इत्थं केषाञ्चित् प्राधान्येनानुसंधानेऽप्यन्ये संभाविता अप्यार्था भवितुमर्हन्ति ॥

**तदेवं पदवाक्यार्थैस्तत्त्वविद्गुरुदर्शितैः ।**
**तत्तत्कुदृष्टिकथितं निरस्तं योजनान्तरम् ॥**

**(मूलमन्त्रार्थानुसन्धाननिष्ठप्रभावः)**

अस्मिन् श्रीमन्त्रे बाह्यकुदृष्टिमताक्षोभ्यविशदज्ञानवन्तम्, "प्रज्ञा-प्रासादमारुह्य ह्यशोच्यः शोचतो जनान् । भूमिस्थानिव शैलस्थो ह्यज्ञान् प्राज्ञः प्रपश्यति ॥" इति वर्णयति । "ज्ञानेन हीनः पशुभिः समानः" इत्युक्तं ज्ञानमपि अयं प्रबोध एव । इत्थं प्रबोधवान्, "न प्रहृष्यति सम्माने नावमानेऽनुतप्यते । गङ्गाह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥" इत्युक्तरीत्या **मानावमानयोर्न** क्षुभ्येत् । अस्मिन् श्रीमन्त्रे **यथार्थज्ञानं निष्ठां** च वहन्तमाद्रियमाणे देशे, "यत्राष्टाक्षरसंसिद्धो महाभागो महीयते । न तत्र संचरिष्यन्ति व्याधिदुर्भिक्षतस्कराः ॥" इत्युक्तरीत्या कश्चिदपि दोषो नोपनमेत् । अनेन श्लोकेन, "रागादिरोगान् (दोषान्)

सततानुषक्तान् अशेषकायप्रसृतान् अशेषान् । औत्सुक्यमोहारतिदान् जघान योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥" इत्यायुर्वेदविद्भिः **प्रधान-व्याधित्वेनोपात्ताः रागादयः**, सतां श्रीः इत्याम्नाताया ज्ञानसंपत्तेः संकोचः, **बाह्यतस्करासाध्यात्मापहारादिकर्तारो महातस्करभूता अहङ्कारादयश्च** न संचरेयुरिति सिद्धम् ॥

**(व्यापकमन्त्रान्तरार्थानां नारायणशब्दार्थैकदेशत्वम्)**

अस्मिन् श्रीमन्त्रे निर्णीतोऽर्थ एव **विष्णुवासुदेवशब्द-विशिष्टयोर्व्यापकमन्त्रान्तरयोर**प्यर्थः । "व्याप्तिकान्तिप्रवेशेच्छास्त-द्धातुनिबन्धनाः । परत्वेऽभ्यधिका विष्णोर्देवस्य परमात्मनः ॥" इत्य**हिर्बुध्न्या**दिनिरुक्तरीत्या "विषॢ व्याप्तौ", "वश कान्तौ", "विश प्रवेशने", "इषु इच्छायाम्" इति **धातुनिष्पन्नविष्णुशब्दोक्ता** अर्थाः, **वासुदेवशब्दे**ऽपि "वसति वासयति" इति, "दीव्यति" इति च प्रतीताः **सर्वव्यापकत्वं तद्गतदोषरहितत्वं क्रीडाविजिगीषादि-मत्त्व**मित्येते **आकाराश्च** सर्वेऽपि **नारायणशब्दार्थस्य** एकदेशाः ॥

**(अष्टाक्षरप्रभावः)**

"ऋचो यजूंषि सामानि तथैवाऽऽथर्वणानि च । सर्वमष्टाक्ष-रान्तस्स्थं यच्चान्यदपि वाङ्मयम् ॥" इत्युक्तत्वादयं श्री**मदष्टाक्षर** एव **मुमुक्षूणां तत्त्वहितानुबन्धिसर्वापेक्षितप्रकाशकः** । "ऋचो यजूंषि सामानि योऽधीतेऽसकृदञ्जसा । सकृदष्टाक्षरं जप्त्वा स तस्य फलमश्नुते ॥" इत्युक्तेरस्य **सकृदुच्चारणं सर्ववेदजपतुल्यम्** । "यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तावती । एतावानिति नैतस्य

प्रभावः परिमीयते ॥" इत्युक्तेः स्वस्वविश्वासतारतम्यानुरोधेन सिद्धितारतम्यभावेऽपि महाविश्वासवत्सु अयं श्रीमन्त्रोऽनवच्छिन्न-प्रभावो वर्तते। अस्मिन् श्लोके, 'अमुकेन न परिमीयते' इत्यविशेषणात्, "[1]नरनारायणरूपो लोके धर्म[परमन्त्ररूप]शास्त्रम्, यथा न संकुचेत् तथा विस्तारयिता" इत्युक्तरीत्या अस्य श्रीमन्त्रस्य प्रवर्तकभूतः प्रतिपाद्यभूतश्च स्वतः सर्वज्ञो नारायणोऽपि, एतत्प्रभावं परिच्छेदा-योग्यतया जानातीत्येतावदेव। एतस्य मन्त्रस्य द्रष्टुर्देवताभूतस्य च (भगवतः) सन्निधौ एनं सार्थं प्राप्तवान् श्रीपरकालसूरिरपि, "[2]ब्राह्मण-धनभूतस्य वेदस्यान्ते स्थितं मन्त्रं (भगवन्तं) मन्त्रेणाविस्मरन् सदाऽनुभवेच्चेत्, उज्जीवनं भवति" इत्यनुजग्राह।

(गाथा)

[3]अष्टमहामूर्तिम् अष्टनेत्रम् अष्ट दिशः अष्ट पालान् अष्ट प्रकृतीः अष्ट महापर्वतान् सृष्टवतोऽष्टगुणकस्याष्टकमनुसन्दधतामष्टगुणकमतिमताम् अष्ट महापुष्पाणि अष्ट सिद्धयोऽष्ट भक्तयोऽष्ट योगाङ्गानि अष्ट विभूत-योऽष्ट महागुणा अष्टाष्टकसंख्याः कला अष्टरसातीत(रस)श्च प्राप्तानि ॥

---

1 नर नारणनायुलकत्तरनूल् शिङ्गामैविरित्तवन् पेरिय-ति. 10-6-1

2 अन्दणर् माट्टन्दि वैत्त मन्दिरत्तै मन्दिरत्ताल् मरवादेन्रु वाऴ्दियेल् वाऴलाम्—तिरुनेडुन्ताण्डकम् 4

3 एट्टुमामूर्ति एण्कण्णनेण्डिक्केट्टिरै येणप्रकृति
एट्टुमावरैकलीन्रवेण्गुणत्तोनेट्टुणुमेण् गुणमतियोर्कु
एट्टुमामलरेण शित्ति येण् पत्ति येट्टुयोगाङ्गमेण् शेलवम्
पट्टुमागुण मेट्टेट्टेणुङ्कलै येट्टिरत मेलंदु(न)वुमेट्टिनवे.

(स्वकृत-उक्तगाथायाः स्वयं व्याख्यानम्)

सर्वकारणभूतस्याखिलहेयप्रत्यनीककल्याणैकतानस्य च सर्वेश्वरस्य प्रतिपादकं श्रीमदष्टाक्षरमनुसन्दधानानां महामतीनामात्मगुणादिष्वष्टैश्वर्यादिषु च यथामनोरथं दुर्लभं किमपि नास्तीत्युच्यते अनया गाथया । "अष्टमहामूर्तिम्"—आकाशादीनि भूतानि पञ्च चन्द्रादित्यौ यजमानश्च स्वस्य मूर्तयो भवन्त्विति वरं प्रार्थ्य प्राप्य अष्टमूर्तिरिति प्राप्तनामा रुद्रः; तम् । "अष्टनेत्रम्"—चतुर्मुखत्वादष्टनेत्रवन्तं ब्रह्माणम् । "अष्ट दिशः" [प्राच्यादीः] अष्टौ दिशाः । "अष्ट पालान्"—इन्द्रादयोऽष्ट दिक्पालकाः; तान् । "अष्ट प्रकृतीः"—अव्यक्तमहदहंकारादीन्यष्ट तत्त्वानि । "अष्ट महापर्वतान्"—अष्टौ कुलपर्वतान् । "सृष्टवतोऽष्टगुणकस्य"—इदं सर्वं सृष्टवान् गुणाष्टकविशिष्टः परमात्मा । अस्याष्टौ गुणा इत्युच्यन्ते कर्मवश्यत्वजरामरणशोकक्षुत्पिपासानां राहित्यानि नित्यभोग्यवत्त्वं संकल्पितनिर्वहणसामर्थ्यं च । "अष्टकमनुसन्दधतामष्टगुणकमतिमताम्"—"एवंभूतस्य सर्वेश्वरस्य प्रधानमन्त्रं श्रीमदष्टाक्षरं सार्थं श्रुत्वाऽनुसंदधतामष्टाङ्गबुद्धिमतामनन्यानां प्रतिबुद्धानाम् । बुद्धेरष्टावङ्गानि तावत्—"ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः" इत्युक्तानि । "अष्ट महापुष्पाणि"—अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः । सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः । ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैव च । सत्यमष्टविधं पुष्पं विष्णोः

प्रीतिकरं भवेत् ॥" इत्युक्तानि **पुष्पाणि** । "अष्ट सिद्धयः"—"ऊहस्त-र्कोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानं च सिद्धयोऽष्टौ" इत्युक्ता अष्ट **सिद्धयः** । "अष्ट भक्तयः"—"मद्भक्तजनवात्सल्यं पूजायां चानु-मोदनम् । मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ॥ स्वयमाराधने यत्नो ममार्थे दम्भवर्जनम् । ममानुस्मरणं नित्यं यच्च मां नोपजीवति ॥ भक्तिरष्टविधा ह्येषा" इत्युक्ता अष्टविधा **भक्तयः**। "अष्ट योगाङ्गानि"—**योगाङ्गत्वेनोक्ताः यमनियमादयः** । "अष्ट विभूतयः"—"अणिमा महिमा च तथा लघिमा गरिमा वशित्वमैश्वर्यम् । प्राप्तिः प्राकाम्यं चेत्यष्टैश्वर्याणि योगयुक्तस्य ॥" इत्युक्ताः **विभूतयः**। "अष्ट महागुणाः—**मुक्तदशायामाविर्भवत् गुणाष्टकम्** । "अष्टौ गुणाः पुरुषं दीपयन्ति" इत्यादिषूक्ता वा । "अष्टाष्टकसंख्याककलाः"—चतुष्षष्टिसंख्याः कलाः। "अष्टरसातीतश्च"—"शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः। बीभत्सरौद्रौ च रसाः" इत्युक्तेभ्यो रसेभ्योऽष्टभ्योऽधिकः शान्तिरसः। "प्राप्तानि"—इमानि सर्वाण्यपि प्राप्तानि । एषु अस्येच्छायां सत्यामनवाप्यं किमपि नास्ति । आत्मगुणादीनामपूर्तिस्तावत् अनुसंधाने श्रद्धावैधुर्यात् । अष्टैश्वर्याद्यसिद्धिः उपेक्षणात् । झटिति संसारस्यानिवृत्तिः इच्छायाः न्यूनत्वात् । अत एव किल, "नमो नारायणायेति मन्त्रः सर्वार्थ-साधकः" इत्युच्यते ॥

(निगमनश्लोकः)

**अविद्यापूतनोन्मुक्तैरनवज्ञातसत्पथैः ।**
**असदास्वादसव्रीडैरादिष्टमिति दर्शितम् ॥**

(अधिकारार्थसंग्राहिका गाथा)

[8] उत्कृष्टादस्मद्रक्षकाद्व्यतिरिक्तानां शेषत्वं हित्वा जीवभूता (वयं) अज्ञानदशायां निवृत्तायामगतिकतया शरणागताः स्रष्टुर्नारायणस्य पादावाश्रितैः प्राचीनदासैः (नित्यसूरिभिः) अभिलषितानि कैङ्कर्याणि निर्दिशन्तं सन्मन्त्रमध्यगीष्महि ॥

इत्थं सङ्कटिः पदैतस्त्रिभिरसावेकद्विपश्चाक्षरैः
अर्थैस्तत्त्वहितप्रयोजनमयैरध्यात्मसारैस्त्रिभिः ।
आद्यस्त्र्यक्षरवेदसूतिरजहत्स्थूलादिवृत्तित्रयः
त्रैगुण्यप्रशमं प्रयच्छति सतां त्रय्यन्तसारो मनुः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे

मूलमन्त्राधिकारः सप्तविंशः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

---

8 उयर्न्दनम् कावलनल्ला कुरिमै तुरन्दुयिराय्
मयर्न्दमै तीर्न्दु मर्रोर्वड़ियित्रि यडैक्कलमाय्
पयन्दवन् नारणन् पादङ्गल् शेर्न्दु पड़वडियार्
नयन्द कुर्रैवलेल्ला नाड नन्मनु वोदिनमे.

श्रीः

## द्वयाधिकारः २८

आकर्णितो वितनुते कृतकृत्यकक्ष्याम्
आम्रेडितो दिशति यश्च कृतार्थभावम् ।
प्रत्यूषतां भजति संसृतिकालरात्रेः
पद्मासहायशरणागतिमन्त्र एषः ॥

श्रीमन्त्रे मध्यमपदे आर्थतया शाब्दतया वोक्तमुपायविशेषम् एतत्फलं तृतीयपदोक्तं पुरुषार्थविशेषं च विशदं प्रकाशयति द्वयम् । इदं कठवल्ल्यां पृथगाम्नानपूर्वं समुच्चित्यानुसन्धेयत्वेन विहितत्वात्, भगवच्छास्त्रे श्रीप्रश्नसंहितादिषु वर्णोद्धारादिकं कृत्वा प्रतिपादितत्वाच्च श्रुतिमूलस्तान्त्रिकमन्त्रो भवति । इदं पूर्वाचार्यवाक्यमिति केषांचित् कथनमपि आप्ता उपदिदिशुरित्याद-रार्थतया वा, परमाचार्येण सर्वेश्वरेण भगवच्छास्त्रेऽनुगृहीतत्वा-द्वेत्येतावदेव । अस्य ऋष्यादयो मूलमन्त्रादीनामिव अपेक्षमाणानां मन्त्रव्याकरणादिगमनिकया द्रष्टुमर्हाः ।

### (द्वयेतिव्यपदेशनिदानम्)

अयं मन्त्रः, "स भ्रातुश्चरणौ गाढम्", "भवांस्तु सह वैदेह्या" इति श्लोकद्वयविवक्षितमुपायोपेयरूपमर्थद्वयं प्रतिपादयतीति द्वयमिति नाम प्राप्तवान् । एवम्भावात् उपायान्तरेषूपेयान्तरेषु च संगहीनोऽस्य मन्त्रस्य

पूर्णाधिकारी । अयं मन्त्रो वरणसमर्पणयोः क्रमेण प्रतिपादनात् द्वयमित्युच्यत इति केचित् फणन्ति । इत्थं "श्रीमन्नारायणस्वामिन्" इत्यादिमन्त्रान्तरेऽपि द्वयशब्दप्रयोगस्येदमेव निमित्तम् ।

(गुरूपसत्त्यादेरावश्यकत्वम्)

'मन्त्रराजमिमं विद्याद् गुरुवन्दनपूर्वकम् । गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ॥ गुरुरेव परा विद्या गुरुरेव परायणम् । गुरुरेव परः कामो गुरुरेव परं धनम् ॥ यस्मात् तदुपदेष्टाऽसौ तस्मात् गुरुतरो गुरुः । नानुकूल्यं न नक्षत्रं न तीर्थादिविशेषणम् । न पुरश्चरणं नित्यं जपं चाऽपेक्षते द्वयम् ॥ नमस्कृत्य गुरुं दीर्घप्रणामैस्त्रिभिरादितः । तत्पादौ गृह्य मूर्ध्नि स्वे निधाय विनयान्वितः ॥ गृह्णीयान्मन्त्रराजानं निधिकाङ्क्षीव निर्धनः । लब्ध्वैवं मन्त्रराजानं मां गच्छेच्छरणं नरः ॥ अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति ॥" इति प्रपत्तिमन्त्रान्तरेषूक्ताः गुरूपसत्त्यादयोऽत्रापि प्राप्तुमर्हाः ॥

(द्वयप्रभावः)

आस्तिकस्यैतन्मन्त्रार्थसमुदायज्ञानपूर्वकसकृदुच्चारणमेवोत्तारकमिति शास्त्रसिद्धम् । एतन्मन्त्रप्रभावम्, "येन केनापि प्रकारेण द्वयवक्ता त्वम्" इति मन्त्रान्तरव्यावृत्तिप्रत्यायकतयाऽनुजग्राह । "अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः। पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥", "नाम्नस्ते यावती शक्तिः पापनिर्हरणे हरे! । श्वपचोऽपि नरः कर्तुं क्षमस्तावन्न किल्बिषम् ॥" इत्यादिषु श्रीनामसंकीर्तनमात्रस्य

प्रभावस्थितिप्रकारे दृष्टे, शरण्य-शरणागति—तत्फलविशेषान् पूर्णतया प्रकाशयतोऽस्य **मन्त्रस्य सकृदुच्चारणमात्रे**ऽपि विद्यमानः **प्रभावः श्रुत्यादिप्रमाणबलात् सुग्रहः** । एतत्प्रभावनिबन्धनमप्यत्र **प्रमाण-संप्रदायतो** द्रष्टव्यम् । एवंविधेषु **रहस्यतमार्थेषु हेतुनिरूपणं** कर्तुं न युक्तम्, **शास्त्रम**वलम्ब्य **विश्वसनी**यमित्येवेत्ययमर्थो **महाभारतादिषु**, "देवगुह्येषु चान्येषु हेतुर्देवि निरर्थकः । बधिरान्धवदेवात्र वर्तितव्यं हितैषिणा ॥" इत्यादिभिः प्रत्यपादि ।

अस्मिन् मन्त्रे **विवक्षितमात्मसमर्पणम्**, "सर्वोपाधिविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् । एतद् ध्यानं च योगश्च शेषोऽन्यो ग्रन्थविस्तरः ॥" इत्यादिभिः **प्रकरणान्तरेषु स्तुतम्** । "एतज्ज्ञानं च ज्ञेयं च" इति **पाठान्तरम्** । अस्य **श्लोकस्य स्वरूपसमर्पण-परत्वे**ऽपि अत्रोच्यमानं **भरसमर्पणं** तदनुप्रविष्टम् । अस्य **समर्पणस्य** "निवेदयीत स्वात्मानं विष्णावमलतेजसि । तदात्मा तन्मनाः शान्त-स्तद्विष्णोरिति मन्त्रतः ॥" इति **व्याससमृत्यादिषु, श्वेताश्वतरादिषु चोक्तानि मन्त्रान्तराणि** इत्थं **शरण्य-शरणागति-तत्फलानि विशदं न प्रकाशयन्ति** । **श्रीमन्त्रे**ऽपीमानि **त्रीणि संक्षिप्तानि** । अतः **प्राप्यप्रापकविशेषान् संपूर्णतया प्रकाशयदिदं द्वयमेव प्रपत्तिमन्त्रेषु सर्वेषु प्रधानम्** ॥

(गद्यस्य द्वयविवरणरूपत्वम्)

एतस्यार्थं **श्रुतिस्मृतीतिहासपुराणभगवच्छास्त्रादिप्रसिद्ध-रीत्या सदाचार्यसंप्रदायक्रमेण गद्ये विवव्रे** । कथमिति चेत्—

"भगवन्नारायणाभिमतानुरूपस्वरूपरूप" इत्यारभ्य श्रीमच्छब्दाभिप्रेतमनुजग्राह । "अखिलहेयप्रत्यनीक" इत्यादिना स्वरूपरूपगुणविभूतीनां विस्तरेण वर्णनात् **नारायणशब्दार्थो** व्याख्यातः । पूर्वं श्रीदेव्यां प्रतिपादितायां सत्यामपि **पुरुषकारत्वनिर्वाहार्थं** विभूतिमध्ये स्थितिं प्रत्याययितुं पुनरपि **नारायणशब्दव्याख्यानेऽपि** श्रीसंबन्धमन्वकीर्तयत् । अनन्तरं "श्रीमन्नारायण" इति **फलोपायवाक्ययोः प्रयुक्तं** व्याख्येयशब्दमुपाददे । "प्रपद्ये" इत्यत्रोत्तमेन **विवक्षितोऽधिकारिविशेषः**, "अनन्यशरणोऽहम्" इति विवृतः । "त्वत्पादारविन्दयुगलं शरणं प्रपद्ये" इत्युक्त्या "**चरणौ**" इति **शब्दः**, **शरणशब्दः**, **क्रियापदं** च प्रदर्शितम् । अनन्तरं "द्वयम्" इति **व्याख्येयं** पूर्णतया निर्दिदेश । आदौ वा अन्ते वा द्वयमित्यनिर्दिश्य अत्र कुतो निर्दिष्टमिति चेत्—**उपायप्राप्ययोः**(प्येषु) अत्र **प्रधानभूतः श्रीमान् नारायण** इत्यतः उभयत्र विद्यमाने **सविशेषणे नारायणशब्दे** व्याख्याते सति एतन्मन्त्रप्रतिपाद्यसाध्योपायेन सह प्रधानोपायः प्रधानप्राप्यश्च **व्याख्यात** इति द्योतनार्थमत्र "द्वयम्" इत्यनुजग्राह ।

अनन्तरं "पितरं मातरम्" इत्यारभ्य **जितन्ताविशेषभगवद्गीतादिस्थित-संवादवाक्यमुखेन** **अनन्यप्रयोजनतया** **अनन्योपायतया** **चोपायपरिग्रहकरणप्रकारं** **शरण्यस्वभावानुसन्धानपूर्वकापराधक्षमा**याचन(क्षामण)प्रकारं च द्वयस्य समुदितार्थत्वेनानुजग्राह ।

अग्रे अर्थक्रमेण प्रथमतः नमसा प्रार्थ्यमानामनिष्टनिवृत्तिं व्याख्याय पश्चादत्रत्यपरभक्त्यादिपुरुषार्थपूर्वकतया, चतुर्थ्यन्त-पदयोर्विभक्त्यभिप्रेतं परमपुरुषार्थलाभं प्रकाशयामास । इत्थमनुष्ठितोपायस्याधिकारिणो विषये ऐहिक्या आमुष्मिक्याश्च सिद्धेर्विषये चरमश्लोके उत्तरार्धरीत्या स्वाभाविकदयार्द्रभगवदभि-प्रायस्थितिप्रकारं तद्व्यञ्जकभगवद्वाक्यप्रक्रियया प्रदर्शयामास । अतो गद्येऽनुगृहीतं सर्वमपि द्वये विवक्षितम् । इदं "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता" इति वाक्येनापि सूचितम् ॥

परभक्त्यादिमूलत्वं कैङ्कर्यस्य यदुच्यते ।
गद्यादिषु तदप्याहुरपवर्गदशाश्रयम् ॥
उत्तरोत्तरयोः स्वामिसाक्षात्करणभोगयोः ।
पूर्वपूर्वक्षणेष्टत्वात् तन्मूलत्वमुदीरितम् ॥
शरीरपातकाले तु हार्दस्यानुग्रहः स्वयम् ।
परिपाकं प्रपन्नानां प्रयच्छति तथाविधम् ॥
अङ्कोलतैलसिक्तानां बीजानामचिरात् यथा ।
विपाकः फलपर्यन्तः तथाऽत्रेति निदर्शितम् ॥
"दुष्टेन्द्रियवशाच्चित्तं नृणां यत्कल्मषैर्वृतम् ।
तदन्तकाले संशुद्धिं याति नारायणालये ॥"
इति व्रतविशेषे यत् सात्त्वतादिषु शिष्यते ।
तद्वदत्रोपपद्येत गद्योक्तान्त्यदशागमः ॥
अनुग्रहविशेषेण केनचित् परमात्मनः ।
कुरुकाधीशनाथाद्याः प्रागप्यन्वभवन् प्रभुम् ॥

एतद्द्वयार्थं श्रीशठकोपसूरिरपि "[1]श्रीमन्नारायणचरणौ लब्धे अवसरे चिन्तयित्वोज्जीवत" इति, "[2]मेघवर्णपुरुषचरणावाश्रित्य कृपां शिरसि धृत्वोज्जीवितवता" इति, "[3]विश्लेष्टुं न शक्नोमि" "इत्यादिषु प्रदेशेष्वनुजग्राह ।

(मन्त्रे श्रीमन्नारायणशब्दार्थः)

अत्र प्रथमतः "श्रीमन्नारायण" इति सर्वशरण्यं परतत्त्वमुक्तम् । श्रियःपतित्वलिङ्गेन नारायणशब्देन च किल श्रुतिषु परतत्त्वविशेषनिर्धारणमकारि । नारायणः शरण्यत्वदशायां लक्ष्मीविशिष्टो वर्तते इति प्रतिपादनार्थं पूर्वखण्डे श्रीमच्छब्दः । "आकारिणस्तु विज्ञानमाकारज्ञानपूर्वकम् । तेनाऽऽकारं श्रियं ज्ञात्वा ज्ञातव्यो भगवान् हरिः॥" इति वरदरामानुजः (अरुळाळप्पेरुमाळेम्पेरुमानार्) (यज्ञमूर्तिः) अनुजग्राह । इदमुत्तरखण्डवत् पूर्वखण्डेऽपि विशेषणमित्येतमर्थम्, उपायविशेषणैरुपायद्वित्वं न प्रसज्यते इत्येतमर्थं च सिद्धोपायशोधनाधिकारेऽवोचाम ॥

(श्रीशब्दार्थः)

श्रीशब्दः "श्रीयते श्रयते शृणोति श्रावयति शृणाति श्रीणातीति षोढा भगवच्छास्त्रेषु निरुक्तो वर्तते । तत्रापेक्षितपदान्तराणि औचित्यात् तत्तत्प्रमाणबलाच्च विशेषतो ज्ञातव्यानि ।

1 तिरुनारणन्ताळ् काल् पेर चिन्दित्तु उय्मिनो—तिरुवाय् 4-1-1

2 मुहिल् वण्णनडियैयडैन्दरुळ् शूडियुय्न्दवन्-तिरुवाय्—7-2-11

3 अकलकिल्लेन्—तिरुवाय्मोऴि 6-10-10

(प्रथमनिरुक्तिद्वयविवरणम्)

(1) तत्र स्वोज्जीवनार्थिभिराश्रीयते इति, एषामुज्जीवनार्थं सर्वेश्वरमाश्रयते इति चार्थे सति—"पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने हितस्रोतोवृत्त्या भवति च कदाचित् कलुषधीः । किमेतत् निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥" इत्युक्तरीत्या सापराधेषु स्वयं हितैषितया दण्डधरस्य सर्वेश्वरस्य क्रोधं प्रशमय्य, तदीयं सहजकारुण्यमेषामुज्जीवकं यथा स्यात् तथा आपादनेन मातृत्वप्रयुक्तवात्सल्यातिशयात् पुरुषकारभूततयाऽवस्थितिरूपोऽतिशयः प्रतिपादितो भवति ॥ "अविज्ञाता" इत्यादिष्विव अत्र, 'विस्मार्य' इत्यस्य, [1]"पङ्कजकुसुमाङ्गनाभोगव्यामोहाः" इत्यादीनां च सदा सर्वज्ञस्येश्वरस्य निग्रहाभिसन्धिनिवृत्तौ तात्पर्यम् । सापेक्षेण पुरुषेण स्वापेक्षितार्थं साधयितुं समर्थस्य चेतनस्याभिगम्यतासंपत्त्यर्थमुपायत्वेन वृतं चेतनान्तरं पुरुषकार इति व्यवहरन्ति । अयं पुरुषकारः फलस्य परम्परया कारणम् ।

"अर्थस्वभावानुष्ठानलोकदृष्टिगुरूक्तिभिः ।
श्रुत्या स्मृत्या च संसिद्धं घटकार्थावलम्बनम् ॥"

इति अस्य पुरुषकारभावस्य प्रमाणं निक्षेपरक्षायामवोचाम ।

एषु अर्थस्वभावो नाम—ईश्वरवत् पितृत्वानुरूपप्रतापोष्मलत्वेनासंपृक्तानां मातृत्वप्रयुक्तानां वात्सल्यादीनामतिशयेन,

---

1 अहिमलर्मंगलै पोगमयक्कुकल् तिरुवाय्मोडि 3-10-8

"न कश्चिन्नापराध्यति", "कः कुप्येत् वानरोत्तम", "मर्षयामीह दुर्बला" इत्युक्तिस्वभावत्वम्, वाल्लभ्यातिशयात् अस्याः पुरस्करणे तेनाप्रत्याख्येयत्वं च । अस्मादर्थस्वभावात् इमामाश्रयतां पुरुषकारान्तरापेक्षानिबन्धनाऽनवस्था नोपनमति ।

**अनुष्ठानं** नाम—प्रह्लादविषये प्रेमातिशयेन प्रतिकूलविषये जातस्य क्रोधस्याधिक्यं दृष्ट्वा उपसर्पणभीताः ब्रह्मादय इमां शरणत्वेन आश्रित्यैतत्पुरतः श्रीनृसिंहरूपं सर्वेश्वरमुपसृत्य तुष्टुवुरिति पुराणप्रसिद्धम् । "सीतामुवाचातियशा राघवं च महाव्रतम्", "सीतासमक्षं काकुत्स्थम्" इत्यादिष्वपि द्रष्टव्यम् ।

**लोकदृष्टिर्नाम** — अन्तःपुरपरिजनविषयेऽपराधभूयस्तायां सत्यामपि राजानोऽल्पप्रसादनैः क्षाम्यन्तीति दर्शनम् । अयमर्थः, "मातर्लक्ष्मि यथैव मैथिलजनः" इति श्लोकेऽपि विवक्षितः ।

**गुरूक्तिर्नाम**—श्रीशठकोपसूरिप्रभृतीनामाचार्याणां "[1]विश्लेष्टुं न शक्नोमि" इत्यादयो गाथाः । एतन्मूलभूताः सूक्तविशेषरूपाः श्रुतयोऽपि द्रष्टव्याः ।

एतन्मूलिकाः स्मृतयस्तावत्—"वाचः परं प्रार्थयिता प्रपद्येन्नियतः श्रियम्" इत्यादीनि शौनकादिवाक्यानि । इत्थमस्याः सर्वेश्वरचरणयोर्घटकत्वस्य बहुप्रमाणसिद्धत्वादत्राप्येतद्विवक्षाङ्गीकार उचितः ।

(2) इत्थं पुरुषकारभूता सिद्धोपायविशेषणभूता च सती आश्रीयते, "स्वरूपं स्वातन्त्र्यम्", "स्वतः श्रीस्त्वं विष्णोः स्वमसि"

---

1 अकलेकिल्लेन्—तिरुवाय्मोऴि 6-10-10

इति श्लोकयोरुक्तरीत्या आदित्यादिकं प्रभादिरिव अतिशयकारिणी सती सिद्धोपायमाश्रित्य वर्तते, सर्वैः सेव्या सती सर्वेश्वरं सेवते इत्यर्थे सति—सर्वेषां स्वामिन्या एव सत्याः "कान्तस्ते पुरुषोत्तमः", "शेषित्वे परमः पुमान्" इति तच्छेषत्वेनावस्थितिः प्रतिपादिता भवति।

(३) "जगत् समस्तं यदपाङ्गसंश्रयम्" इत्याद्युक्तरीत्या सर्वैर्वस्तुभिराश्रिता सती सर्वाणि वस्तून्याश्रित्य वर्तते इत्यर्थे सति—नारायणादिशब्दैः **श्रियः** पत्युर्विषये वर्णिता रीतिर्विष्णुपत्नीविषयेऽप्युक्ता भवति। श्रीभाष्यकारोऽपि "भगवन्नारायण" इत्येतत्समकक्षतया "भगवतीं श्रियम्" इत्यनुजग्राह।

(द्वितीयनिरुक्तिद्वयविवरणम्)

"शृणोति श्रावयति" इति व्युत्पत्त्योः–सापराधा वयं सर्वेश्वरश्रीचरणयोः कृपया निवेदयितव्याः इत्येवमाश्रितानामार्तध्वनिं श्रुत्वा **सर्वेश्वराय** विज्ञाप्यैषामार्तिं शमयतीत्युक्तं भवति। इत्थं पुरुषकारकृत्यं प्रतिपादयतोऽस्यापि **पुरुषकारभावे** तात्पर्यम्। "मत्पदद्वन्द्वमेकं ये प्रपद्यन्ते परायणम्। उद्धरिष्याम्यहं देवि संसारात् स्वयमेव तान्॥", "आनृशंस्यं परो धर्मः" इत्यादीनि तस्मात् श्रुत्वा, "शृणु चावहितः कान्त यत् ते वक्ष्याम्यहं हितम्। प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः॥" इति **कपोतं** श्रावितवती **कपोतीव** तमवसरे श्रावयतीति वा। **सर्वेश्वराल्लोकहितं** श्रुत्वा, "मित्रमौपयिकं कर्तुम्" इत्याद्युक्तरीत्या विपरीतानपि श्रावयतीति वा।

(शिष्टनिरुक्तिविवरणम्)

"शृणाति निखिलान् दोषान्" इति व्युत्पत्तौ सत्याम्-"लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकः सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥" इति, "[1]परिमलाविनाभूते पुष्पे तिष्ठन्ती कर्माणि निवर्तयेत्" इति चोक्तरीत्या **उपायाधिकारिणां विरोधीनि कर्मादीनि** निवर्तयतीत्युक्तं भवति ।

"श्रीणाति च गुणैर्जगत्" इति निरुक्तौ—स्वकारुण्यादिगुणैः, "[2]तव श्रीकृपां पङ्कजाङ्गनायाः श्रीकृपां चावलम्ब्य" इत्याद्युक्तरीत्या **आश्रितानां कैङ्कर्यपर्यन्तगुणपरिपाकं** जनयतीत्युक्तं भवति ।

आभिर्व्युत्पत्तिभिः सर्वाभिः सिद्धं **वैभवमभिप्रेत्य** "श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम्" इति **श्रीयामुनार्या अनुजगृहुः । भट्टार्या** अपि **निरुपाधिकमङ्गलत्वमभिसन्धाय** "श्रीरसि यतः" इत्यवोचन् । एष्वर्थेषु **ईश्वरस्योपायभावस्योपयुक्ताः पूर्वखण्डे, प्राप्यतायां उपयुक्ता उत्तरखण्डे** चानुसन्धेयाः ॥

**स्वाम्युपाय उपेयश्च स्वरूपादिसमर्पणे ।**
**प्रथितः प्रतिसंबन्धी श्रीमान् निगमचक्षुषाम् ॥**

(मतुप्प्रत्ययार्थः)

**श्रीमान्** इति सामान्यत उक्तावपि **प्रमाणानुसारेणात्र श्रियः पतिरि**त्युक्तं भवति । सामान्यतया प्रतीतः **संबन्धः श्रुतिबलात्**

---

1 वेरिमारादपूमेल्लिरुप्पाळ् विनैतीर्कुम्-तिरुवाय्मोऴि 4-5-11

2 निन्तिरुवरुळुं पङ्कजत्ताळ् तिरुवरुळुङ्कोण्डु—तिरुवा 9-2-1

विशेषितः । सर्वेषामाश्रयणीयाया जगन्मातुरस्याः पतिरित्युक्तमात्रे परत्वं सौलभ्यं च प्रकाशेते । अत्र श्रियो विशिष्योपादानात् नारशब्दार्थेभ्यो व्यावृत्तिः, विशेषणत्वेन निर्देशात् यथाप्रमाणं पतिपाराध्यं च सूचितम् । "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥" इत्यनेकार्थः सन्नपि अत्र मतुप् उपयोगविशेषात् नित्ययोगं वक्ति । विग्रहे ब्रह्मचर्यावस्थायामपि किल "कृष्णाजिनेन संवृण्वन् वधूं वक्षस्स्थलाश्र(ल)याम्" इत्युक्तप्रकारेण नित्ययोगो वर्तते ।

अपृथक्सिद्धवस्तुनः 'श्रीमान्' इति मत्वर्थीयप्रत्ययसापेक्षं सामानाधिकरण्यं किं युज्यते इति, पृथक्सिद्धत्वे "कीर्तिः श्रीर्वाक् च नारीणाम्" इति, "[1]पुष्पे वर्धमानाङ्गना भूत्वा" इति च मत्वर्थीयप्रत्ययनिरपेक्षं सामानाधिकरण्यं किं युज्यते इति कैश्चिदुच्यमाने चोद्ये द्वे अपि मन्दे । कथमितिचेत्—"तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति न्यायेन ज्ञानगुणपुरस्कारेणात्मनो ज्ञानमिति व्यवह्रियमाणत्वे सत्येव ज्ञानवानिति मत्वर्थीयप्रत्ययान्विततयाऽपि सामानाधिकरण्यसंभववत् अत्रापि न दोषः । अतो मत्वर्थीप्रत्ययमात्रमवलम्ब्य पृथक्सिद्धमिति निश्चेतुं न शक्यम् । "नरपतिरेव सर्वे लोकाः" इत्यादिष्विव विवक्षान्तरसंभावनास्थले एतत्प्रत्ययरहितसामानाधिकरण्यमात्रावलम्बनेन पृथक्सिद्धं नेत्यपि वक्तुं न युक्तम् । अतो विशदं प्रतिपादयन्ति प्रमाणान्तराण्यवलम्ब्य एतद्वस्तुस्थितिर्विज्ञेया ।

---

1 पूविल्घाडमगलाय्–तिरुवाय्मोऴि 6-3-6

अतोपायदशायां फलदशायां च प्रमाणैर्नित्ययोगस्य प्रतिपादनात् अस्मिन् मन्त्रे एतदर्थप्रकाशनस्यापेक्षितत्वाच्च पूर्वोत्तरखण्डयोर्मतुपा, "स भ्रातुश्चरणौ गाढम्", "भवांस्तु सह वैदेह्या" इत्युक्तरीत्या अविनाभावः प्रतिपादितो भवति ।

श्रीशठकोपसूरिरपि, [1]"विश्लेष्टुं न शक्नोमि क्षणमपीति पुष्पवासिन्या वध्वा नित्याधिष्ठितवक्षस्कः" इति, "[2]उज्ज्वलाग्रहस्तवलयायां श्रियां त्वयि चैवाधिवसतोः" इति, [3]"अत्र तत्र च लक्ष्मीवल्लभं विना सद्भावाभावं दृष्ट्वा" इति च उपायदशायां फलदशायां च श्रीमच्छब्दोक्तं नित्ययोगमनुसंदधे । इदमनुसन्धानं सापराधानां निस्सन्देहमिच्छोत्पत्तिकाल एवाऽऽश्रयणस्य प्रयोजकं भवति ।

(नारायणशब्दाभिप्रेतगुणनिरूपणम्)

इत्थमपेक्षितः पुरुषकारोऽप्यधिक इति यथा स्यात् तथा वर्तन्ते नारायणशब्दे प्रतीताः संबन्धो गुणाश्च ॥ इदं [4]"स्वदासानाम्" इति गाथायां सुदर्शम् । "श्रीधरः श्रीकरः श्रेयः श्रीमान् लोकत्रयाश्रयः" इत्यादिषु भगवन्नामत्वेन प्रसिद्धः श्रीमच्छब्द एव किं न पर्याप्त इति चेत्—पूर्वखण्डे उपायभावोपयुक्तगुणविशेषानुसन्धानार्थम् उत्तरखण्डे सर्वविशिष्टस्य शेषिणः प्राप्यतया प्रत्यायनार्थं च

---

1 अकलॆकिल्लॆ निरैयुमॆन्ऱलर्मेल्मङ्गैयुरैमार्बा-तिरुवाय्मोऴि 6-10-10

2 ओण्तोडियाळ् तिरुमगळुं नीयुमॆनिलानिर्प—तिरुवा 4-9-10

3 इङ्गमङ्गुं तिरुमालन्ऱि यिन्मै कण्डु—तिरुवाय्मोऴि 7-9-11

4 तन्नडियार्—पॆरियाऴ्वार् तिरुमोऴि 4-10-2

नारायणशब्दस्यापेक्षितत्वादत्र श्रीमच्छब्दो विशेषणम् । अत्रत्य-नारायणशब्दस्य मूलमन्त्राधिकारे व्युत्पत्तिभिः प्रतिपादितानामर्थानां सर्वेषां विवक्षितत्वेऽपि पूर्वखण्डे नारायणशब्दस्य शरण्यतायां तात्पर्यात् [1]"अनुपमगुणपथ" इत्यादिषु संगृहीताः वात्सल्य-स्वामित्व-सौशील्य-सौलभ्य-सर्वज्ञत्व-सर्वशक्तित्व-सत्यसंकल्पत्व-परमकारुणिकत्व-कृतज्ञत्व-स्थिरत्व-परिपूर्णत्व-परमोदारत्वादयोऽत्रानुसन्धेयेषु प्रधानतमाः ॥

एषु वात्सल्यं नाम—"दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्" इत्युक्तरीत्या आश्रितापराधदर्शनं विहायाङ्गीकारस्यानुगुणं कारुण्यम् । इदं स्वदोषदर्शननिबन्धनस्य दूरीभावस्याभावप्रयोजकम् ।

स्वामित्वं नाम प्रणवादिषु शिक्षितः संबन्धविशेषः । अयं स्वप्रयोजनबुद्ध्या रक्षेदिति समाश्वासनस्य प्रयोजकः ॥

सौशील्यं नाम—स्वयं सर्वाधिकस्य सतोऽपि निहीनैर्निषादवानर-गोपालादिभिः सह नीरन्ध्रसंश्लेषस्वभावता । इदं [2]"स्वामी चक्रवान् उपकारकः स कुत्रत्यः, अहं कः" इति दूरीभवनं विनैव सारथ्य-दूत्यादिपर्यन्तापेक्षणौपयिकविश्वसनीयतायाः प्रयोजकं भवति ।

सौलभ्यं नाम—सनक-सनन्दनादिमहायोगिनामपि उपसर्पणस्याभूमेः स्वस्य "सकलमनुजनयनविषयतां गतः" इत्युक्तरीत्यापादनम् । इदं सुदुर्लभ इति निस्पृहताया अनुत्पत्तेः प्रयोजकम् ।

---

1 निगरिल् पुगऴाय्—तिरुवाय्मोऴि 6-10-10

2 अम्मानाऴिप्पिरा नवनेव्विडत्तान् यानार् तिरुवाय्मोऴि 5-1-7

सर्वज्ञत्वं नाम—"अज्ञातं नास्ति ते किञ्चित्", "यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः" इत्युक्तरीत्या सर्वस्य साक्षात्करणम्। इदमाश्रितेभ्यो देयेषु हितेषु—निवर्तनीयेषु विरोधिषु चैतदज्ञातं किमपि नास्तीत्यनुसन्धानस्य प्रयोजकम्।

सर्वशक्तित्वं नाम—अघटितघटनासामर्थ्यम्। इदं संसारिणोऽस्मान् इच्छासमकालं नित्यसूरिपरिषदि निवेशयितुं समर्थ इति निश्चयस्य प्रयोजकम्।

परमकारुणिकत्वं नाम—स्वार्थनिरपेक्षा परदुःखनिराकरणेच्छा। इदमनन्तापराधवतोऽपि "मित्रभावेन संप्राप्तम्", "यदि वा रावणः स्वयम्" इत्युक्तरीत्या यत्किञ्चिद्व्याजमात्रेण क्षमेतेति प्रबोधस्य प्रयोजकम्।

कृतज्ञत्वं नाम—"न स्मरत्यपकाराणां शतमप्यात्मवत्तया। कथंचिदुपकारेण कृतेनैकेन तुष्यति॥", "ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति॥" इति रीत्या अत्यल्पस्याप्यनुकूलव्यापारस्य परमोपकारकरणस्येवाविस्मरणम्। इदं स्वस्मिन् यस्य कस्यचिदुपयुक्तस्य (समर्थस्य) चिह्नस्य दर्शनेऽस्मान् कदापि न परित्यजेदिति स्थितेः प्रयोजकम्।

स्थिरत्वं नाम—आश्रितरक्षणे अविचालनीयत्वम्। इदमत्यन्तान्तरङ्गैर्निवारणेऽपि "न त्यजेयं कथंचन" इत्युक्तरीत्याऽस्मान् न त्यजेदिति विश्वासस्य प्रयोजकम्। ....

परिपूर्णत्वं नाम—अवाप्तसमस्तकामत्वम्। इदम् "अण्वप्युपहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत्", "पत्रं पुष्पं फलं तोयं यो मे

मतया प्रयच्छति" इत्याद्युक्तरीत्या भावबन्धदर्शनमात्रातिरेकेण अन्यत् असत्प्रत्तोपहारे किञ्चित्तारतम्यदर्शनं न कुर्यादिति शक्यकिञ्चित्कारोधमस्य प्रयोजकम् ।

परमोदारत्वं नाम—उपायलाघवमुपेयगौरवं पात्रापकर्षं चादृष्ट्वैव सर्वस्वदाने कृतेऽपि असत्कृतमपर्याप्तमित्येवम्भावस्य प्रयोजिका वदान्यता । इदं दधिभाण्डादिवत् हठात्कारं कृत्वाऽपि अनुबन्धिपर्यन्तं परमपुरुषार्थापेक्षणस्य प्रयोजकम् ।

इत्थमन्येऽपि शरण्यतोपयुक्ताः गुणास्तदुपयोगविशेषाश्चात्रानुसंधेयाः ।

उपायानुष्ठानदशायां तत्तद्विद्यानियतकतिपयगुणविशिष्टतयाऽनुसंधेयस्य सतः प्राप्तिदशायां समस्तगुणविशिष्टतयाऽनुभाव्यत्वेऽपि, अत्रोत्तरखण्डे नारायणशब्दस्य स्वरूप-गुणकृतकैङ्कर्यप्रतिसम्बन्धित्वे तात्पर्यसत्त्वात् तदुपयुक्ताः शेषित्व-निरतिशयभोग्यत्वादयः प्रधानतमाः ॥ अत्र सम्बन्धविशेषादिमुखेनानुकूल्यसंकल्पप्रातिकूल्यवर्जनयोः सूचितत्वप्रकारमधिकारान्तरेऽभ्यधाम ।

("श्रीमन्नारायणपदव्यस्तत्वसमस्तत्वोपपादनम्)

अत्र "श्रीमन्नारायणचरणौ" इत्येतत् समस्ततयाऽपि योजयन्ति । "कमलनयन वासुदेव....भव शरणम्" इति प्रयोगम्, "त्वमेवोपायभूतो मे भव" इति वाक्यम्, "[1]विश्लेष्टुं न शक्नोमि—" इति गाथाम्,

1 अकलकिल्लेन्—तिरुवाय्मोडि 6-10-10

"अकिञ्चनोऽनन्यगतिः शरण्य" इति स्तोत्रवाक्यम्, "श्रीमन्नारायण स्वामिन्" इत्यादीनि मन्त्रान्तराणि, द्वयविवरणं गद्यं च दृष्ट्वा 'श्रीमन्' 'नारायण' इति द्वे संबुद्धी कृत्वा तवेत्येकं पदमध्याहृत्य च योजयन्ति। इत्थं व्यस्तत्वे समस्तत्वेऽपि वा विशेषणविशेष्ययोः स्थितिप्रकारे न वैषम्यम्। इयं स्थितिः पूर्वोत्तरखण्डयोः समाना।

(चरणशब्दार्थः)

"चरणौ" इति शब्दो नित्यस्य दिव्यमङ्गलविग्रहस्योपलक्षणम्। श्रियः पत्युः सर्वस्मात् परत्वं नित्यविग्रहयोगश्च ज्ञातव्येषु प्रधानतमे इत्ययमर्थः, "नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर। यस्यास्ति सत्ता हृदये तस्यासौ सन्निधिं व्रजेत्॥" इत्यादिषु प्रसिद्धः॥ अतः "श्रीमन्नारायण" इत्यत्र सौलभ्यान्वितं परत्वं "चरणौ" इत्यत्र नित्यविग्रहयोगश्चानुसन्धेये। दिव्यात्मस्वरूपे अधोनिर्दिष्टगुणेषु च प्रबोधरहितानां शुद्धसत्त्वद्रव्यमयः स्वविषयज्ञानेन ज्ञानसंकोचनिवर्तकः परत्वसौलभ्यव्यञ्जको दिव्यमङ्गलविग्रह एव लक्ष्यः। इदं प्राधान्यमभिप्रेत्य गद्ये गुणेभ्यः पूर्वं दिव्यमङ्गलविग्रहं निर्दिदेश। दिव्यात्मस्वरूपे विशदज्ञानवत्त्वेऽपि, "मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम्" इति यथोच्येत तथा—ईश्वरस्यापि भोग्यतमस्य नित्यविग्रहस्यानुभवे आदरातिशयात् परकालसूरिः स्वमीश्वरविषये देहात्मवादिनं प्रतिपादयामास।

सर्वेश्वरदिव्यमङ्गलविग्रहस्य "पापं हरति यत् पुंसां स्मृतं संकल्पनामयम्। तत् पुण्डरीकनयनं विष्णोर्द्रक्ष्याम्यहं मुखम्॥",

"रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम्" इत्याद्युक्तरीत्या शुभत्वमाश्रयत्वं चास्ति। बद्धानामाश्रयत्वे सत्यपि शुभत्वं नास्ति। भगवत्स्वरूपस्य शुभत्वे सत्यपि आश्रयत्वं नास्ति। संसारबन्धरहितस्य परिशुद्धात्मस्वरूपस्य संसरणौपयिकसहकारियोग्यताया अभावेऽपि परतन्त्रचेतनत्वेन संसरणस्वरूपयोग्यवस्तुत्वात् तस्य हेयप्रत्यनीकत्वरूपं शुभत्वं नास्ति; आश्रयत्वं च नास्ति। मुक्तानां विग्रहपरिग्रहदशायाम्, नित्यविग्रहाणां नित्यानाञ्च आश्रयत्वे सत्यपि संसारनिवर्तनक्षमं शुभत्वं नास्ति। अतो दिव्यमङ्गलविग्रहस्यैव मुमुक्षूपयुक्तं शुभत्वमाश्रयत्वं चास्ति।

परावरसुखग्राह्यं प्रेमबोधप्रसावकम्।
स्वरूपात् स्वामिनो रूपमुपादेयतमं विदुः॥

शरणागतिविधायकवाक्येऽपि "मामेकं शरणं व्रज" इति विग्रहविशिष्टो लक्ष्यः प्रतीतः। अयं दिव्यविग्रहः परव्यूहाद्यवस्थापञ्चकेऽपि शुभाश्रय इत्ययमर्थः शास्त्रसिद्धः।

चित्तालम्बनसौकर्यकृपोत्तम्भन(क)तादिभिः।
उपायत्वमिह स्वामिपादयोरनुसंहितम्॥

अत्र दासभूतः औचित्यातिशयात्, "अनतिक्रमणीयं हि चरणग्रहणम्" इत्युक्तरीत्या कृपोत्तम्भकत्वातिशयात्, "तवामृतस्यन्दिनि" इत्याद्युक्तरीत्या भोग्यत्वातिशयाच्च श्रीचरणाववलम्बते। अयमर्थः, "सर्वथा चरणद्वन्द्वम्", "त्वत्पादकमलादन्यत्", "मम ते पादयोः

स्थितम्", "लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो", "स भ्रातुश्चरणौ गाढम्", "तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातमृदुरक्ताभिरङ्गुलीभिरलंकृतौ । प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ ॥", "चरणौ शरणं यातः", "प्रपन्नाघौघविध्वंसिचरणौ शरणं गतः" इत्यादिषु च प्रसिद्धः । एतदनुसारिणोऽपि, [1]"त्वच्चरणयोरधोऽवधा प्राविशम्" इति, "त्वत्पादमूलं शरणं प्रपद्ये" इति चानुजगृहुः । "सौगन्ध्यसौकुमार्यादिगुणविग्रहवान् हरिः । तस्य स्वात्मप्रदाने तु साधनं स्वपदद्वयम् ॥" इत्यभियुक्ताः प्रतिपादयामासुः ।

"चरणौ" इत्यत्र, "तमेव शरणं गच्छ", "[2]चरणौ तावेव शरणम्" "[3]नागशयनोपरि[स्थितस्य]अस्मदुपकारकस्य चरणावेव शरणम्" इत्याद्युक्तरीत्या अवधारणं विवक्षितम् ।

(श्रीवैशिष्ट्यबाधकशङ्कापरिहारः)

चरणाविति निर्देशः पत्नीवैशिष्ट्यबाधकः ।
इति मन्दैरिदं प्रोक्तं श्रीमच्छब्दविरोधतः ॥
शब्दस्वरसतः प्राप्तं वैशिष्ट्यं प्रथमश्रुतम् ।
विशेष्यचरणद्वित्वं न हि बाधितुमर्हति ॥
चरणानिति वक्तव्यमिति यच्च प्रसञ्जितम् ।
ग्रन्थज्ञैरपहास्यं तत् पतिप्राधान्यतोऽन्वयात् ॥

---

1 उन्नडिकीऴ्मन्र्दु पुगुन्तेन् — तिरुवाय्मोऴि 6-10-10
2 कऴल्कलंवैये शरणाक — तिरुवाय्मोऴि 5-8-11
3 नाकणैमिशैनम्पिरान् शरणेशरणू — तिरुवाय्मोऴि 5-10-11

न सम्राजि सपत्नीके सद्वितीयोक्तिसाहसम् ।
तथाऽग्रेत्यपरामृश्य दर्शितं गुरुसाहसम् ॥

सर्वशक्तेरुपायत्वे एतद्विशेषणापेक्षा कुतः ; सापेक्षत्वे सर्वशक्तित्वहीनता किं न स्यात् इति चेत्—इदं चोद्यं नारायण-शब्द-चरणशब्दोक्ते गुणविग्रहयोगेऽपि सुकरम् । तेषामेतद्विशेषणत्वात् तेषां वस्त्वनुरूपोपयोगविशेषसत्त्वाच्च तैः सर्वशक्तित्वविरोधो नेति यथाप्रमाणमभ्युगमे, इदं बहुप्रमाणप्राप्ते, इह श्रीमच्छब्दे स्वारसिकविशेषणभावपत्नीसम्बन्धेऽपि तुल्यम् । एवं सति चरणाविति द्विवचनमात्रावलम्बनेन श्रीसंबन्धस्य उपलक्षणत्वोक्तौ गुणादिसंबन्धेऽप्येवमुक्तिः प्रसज्यते । चरणशब्दे उपायवाचिशब्द-समभिव्याहारादुपयुक्तगुणविग्रहविशिष्ट उपायो भवतीति विवक्षितमिति चेत्—इदमत्रापि तुल्यम् । एवं सति अस्या विशेषणत्वेऽभ्युपगम्यमाने सर्वशक्तित्वविरोधः प्रसज्यत इति वदतामेतत्पुरुषकारापेक्षायामपि सर्वशक्तित्वविरोधः प्रसज्येत । "युवत्वादौ तुल्ये" इति श्लोकोक्तगुणविभागरीत्या पुंस्त्वपितृत्वप्रशासितृत्वादिभिः प्रतापोत्तरं दण्डधरं सन्तमीश्वरमाश्रयितुं प्रवर्तमानानां स्त्रीत्वमातृत्वादिगुणातिशयेनास्यास्तमाश्रयितुमस्माकं पुरुषकारभावोपि ईश्वरस्वातन्त्र्यनियत इत्युक्तौ, इत्थमेव सहधर्मचारिण्याऽनया विशिष्टस्य सत एव शरण्यताऽपि ईश्वरस्वातन्त्र्यनियतेति स्वीकारे न कस्यापि प्रमाणस्य निरोधो भवति ।

(शरणशब्दार्थः)

अत्र शरणशब्दः "उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् । वर्तते सांप्रतं त्वेष उपायार्थैकवाचकः ॥" इति विशिष्योक्तेरुपायपरः ।

भरन्यासबलादेव स्वयत्नविनिवृत्तये ।
अत्रोपायान्तरस्थाने रक्षको विनिवेशितः ॥

सर्वाधिकारिणां तत्तच्छास्त्रार्थैराराधिते सर्वेश्वरे फलोपाये सति, अत्र विशिष्य उपाय इत्युक्तेरावश्यकता उपायान्तरस्थाने सहजकारुण्यादिविशिष्टस्येश्वरस्यावस्थापनरूपस्य प्रपत्तिप्रकारस्य प्रत्यायनार्थेत्येतावदेव ।

अत्र भक्तियोगस्थाने प्रपत्तौ तिष्ठन्त्याम्, ईश्वरस्योपायान्तरस्थाने स्थितिः कथमिति चेत्—अङ्गरूपेण प्रपत्तिं कृत्वा उपायरूपेणोपासनमप्यनुष्ठाय प्राप्यस्य फलस्य तमुपायमन्तरैव प्रपत्तिमात्रेण प्राप्तेर्मूलमीश्वरस्य सहजकारुण्यादिस्वभावविशेष इत्यतः, अकिंचनस्येश्वर उपायान्तरस्थानेऽवस्थित इत्युच्यते ।

अभिमतफलस्योपायतया विहितं भरं वोढुमसमर्थेन अकिञ्चनेन, गोप्तृत्वेनावस्थितस्य तस्य "त्वं ममोपायो भव" इति उपायान्तरस्थाने निवेशनं नाम—मम शिरसि उपायान्तरमनारोप्य, तद्वहने जनिष्यमाणस्याभिमतस्य सर्वस्यापि प्रदानं समर्थकारुणिकस्य तवैव भरत्वेन स्वीकरणीयमिति प्रार्थनम् ॥ इममंशं निष्कृष्य निक्षेपोऽङ्गीत्युच्यते । इदं स्वनिर्भरत्वपर्यन्तम् । इमं निष्कर्षमभिप्रेत्यैव "सांप्रतं त्वेष उपायार्थैकवाचकः" इत्युच्यते ।

उपायप्रार्थनायाः निक्षेपस्य च पृथक् पृथक् निर्देशस्थलेषु उपाय-शब्दे एतद्विवक्षायास्त्यागो वा, भरसमर्पणादीनां सुव्यक्तत्वाय पृथगुक्तिर्वा, अत्र स्वरूपभरफलानां समर्पणीयत्वादनेकांशविशिष्टे समर्पणे अंशान्तरपरता वा भवितुमर्हति । एभिः त्रिभिः प्रकारैः पुनरुक्तिदोषो नास्ति (निवर्तते) ।

इदमुपायत्वं न्यासविद्याया विशिष्य वेद्याकारः । एतदपेक्षिताः सन्तो ज्ञानशक्त्यादय आयान्ति ॥

("प्रपद्ये" शब्दार्थः)

"प्रपद्ये" इत्यत्र गतिवाची धातुः गत्यर्थानां बुद्ध्यर्थत्वादत्रापेक्षितं बुद्धिविशेषमाचष्टे । अत्र बुद्धिर्नाम—"रक्षिष्यतीति विश्वासः" इत्युक्तोऽध्यवसायः । अङ्गेषु सारभूतं विश्वासं पुरस्कृत्य सपरिकरः साध्योपायोऽत्र प्रतीयते । कथमिति चेत्—अत्र "प्र" इत्युपसर्गो विश्वासस्य प्रकर्षरूपां महत्तां प्रदर्शयति । अयं विश्वास-प्रकर्षः श्रीमच्छब्दे नारायणशब्दे च निहितेषु पुरुषकारसंबन्ध-गुणादिषु अनुसंहितेषु सत्सु उपनमति । एतेन स्वगतापचारप्राचुर्यादि-निबन्धनाः शङ्काः सर्वा अपि निवर्तेरन् । इदं विश्वासदार्ढ्यमावश्य-कमित्ययमर्थः, "राक्षसानामविस्रम्भादाञ्जनेयस्य बन्धने । यथा विगलिता सद्यस्त्वमोघाऽप्यस्त्रबन्धना ॥ तथा पुंसामविस्रम्भात् प्रपत्तिः प्रच्युता भवेत् । तस्मात् विस्रम्भयुक्तानां मुक्तिं दास्यति साऽचिरात् ॥" इत्युक्तः। अस्य व्यवसायस्य प्रभावः, "व्यवसायात् ऋते ब्रह्म नासादयति तत् परम्", "निस्संशयेषु सर्वेषु नित्यं वसति वै हरिः । ससंशयान् हेतुबलान्

नाध्यावसति माधवः ॥" इत्यादिषु सुप्रसिद्धः ॥ अस्मिन् महाविश्वासे जाते सति पश्चाद्विमर्शकाले कदापि (कथमपि) संशयो नोदियात् । अतः, पश्चात् कदापि अस्मिन् विषये यथा संशयो न स्यात् तथाभूतः प्रथमक्षणे महाविश्वासः प्रपत्तेरङ्गम् । अस्मिन् मन्दे सत्यपि विशिष्य कटाक्षयितुं प्रवृत्त ईश्वरः शेषपूरणं कुर्यात् । "मित्रभावेन संप्राप्तं न त्यजेयं कथंचन" इति शरण्योऽनुजग्राह किल । अञ्जल्यादिकमपि, "न जातु हीयते" इत्युक्तस्वभावं किल वर्तते । अतो मन्दविश्वासोऽपि महाविश्वासपर्यन्तो भवति ॥

इत्थमुपायत्वेनाध्यवस्यामीति महाविश्वासे उक्ते सति, "अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः ॥", "त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः । शरणागतिरित्युक्ता", "भव शरणम्" इत्यादिप्रमाणानुसारेण उपायप्रार्थनाऽप्यत्र प्रतिपादिता भवति। अस्यामुपायप्रार्थनायां गोप्तृत्ववरणमन्तर्गतम् । न पृथग्भूतम् । [ननु] इष्टप्राप्त्यनिष्टनिवृत्तिरूपफलप्रार्थनायामुत्तरखण्डे क्रियमाणायां सत्याम्, अत्र फलप्रार्थनाकरणे पुनरुक्तिः स्यात् । [अङ्ग] प्रपत्तेः फलत्वेन प्रार्थ्यमानो भक्तिरूपोपाय इव स्वतन्त्रप्रपत्तिनिष्ठस्यात्र साध्यत्वेन प्रार्थनीयत्वेन च वर्तमानः कश्चिदुपायो नास्ति । एवं सति अत्र प्रार्थनायाः प्रतिपादनं कथमिति चेत्—फलप्रदाने सर्वाधिकारिविषये साधारणे सत्यपि, अकिञ्चनस्य सर्वभरन्यासकर्तुर्विषये प्रपत्तिः उपायान्तरस्याङ्गं यथा न भवेत् तथा-

शरण्यस्यैव उपायान्तरस्थानेऽवस्थाय फलप्रदानरूपस्यांशस्यातिशयितत्वात् सोऽतिशयो भरस्वीकारांशोऽत्र प्रार्थ्यते ॥ [ननु] अथापि इत्थमुपायरूपेणावस्थातव्यमित्यपेक्षिते, अभिमतफलविशेष उपायान्तरव्यवधानमन्तरैव दातव्य इति किं न प्रार्थितं भवति ? अतः उत्तरखण्डे प्रार्थना किं नाधिकेति चेत्—उक्तप्रकारेण प्रार्थनाविषये अंशभेदस्य प्रत्यायनार्थं पृथगपेक्षणं क्रियते इति नाविवयम् । उत्तरखण्डेऽपेक्षणीयफलविशेषव्यञ्जकस्य वाक्यस्यान्वयमात्रार्थं प्रार्थनापदे अध्याहृतेऽपि फलस्वरूपमात्रे तात्पर्यमिति वा परिहारः सुवचः । पूर्वोत्तरखण्डयोरुभयोः सम्पिण्डितार्थनिष्कर्षे क्रियमाणे, अकिञ्चनस्य मम त्वयोपायान्तरस्थाने स्थित्वा फलविशेषस्य दानार्थं यथोक्तमात्मरक्षाभरनिक्षेपं करोमीत्येकं विशिष्टप्रार्थनान्वितभरसमर्पणं फलति । इदं समर्पणमपि अध्यवसायशब्दार्थः । इत्थं सपरिकरं भरसमर्पणमेव प्रपत्तिशास्त्रार्थ इत्यमुमर्थं प्रमाणसंप्रदायाभ्यां बहुत्र समार्थयामहि । "अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति ॥" इति प्रपत्तिमन्त्रान्तरेपूक्तं कर्तव्यनिक्षेपप्राधान्यमत्रापि तुल्यम् ।

मोक्षप्रदस्य सिद्धोपायस्य मुमुक्षुगतः कश्चिच्छास्त्रीयः साध्यव्याजो वशीकरणमित्येतत् स्वं (मुमुक्षुं) कर्तृत्वेन प्रदर्शयतोत्तमेन सिद्धम् । अत्रौचित्यात् [1]"उपायेन केनापि हीनो दासोऽहम्", "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः", "न धर्मनिष्ठोऽस्मि न

1 पुगलोन्रिल्ला वडियेन्—तिरुवाय्मोऴि 6-10

चात्मवेदी" इत्याद्युक्तरीत्या अधिकारिविशेषः कार्पण्यरूपः परिकरश्च सूचितौ। इदं गद्ये "अनन्यशरणः" इति पदे, लघुगद्ये "स्वात्मनित्यनियाम्य" इति चूर्णिकायाम्, श्रीवैकुण्ठगद्ये "तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः" इति चूर्णिकायां च प्रपञ्चितम्। श्रीवरदरामानुजोऽपि (यज्ञमूर्तिः) (अरुळाळप्पेरुमाळेम्पेरुमानार्) "स्वाभीष्टे परसंबन्धे स्वाशक्त्या हीनसाधनः। तत्प्राप्त्युपायं तत्पादौ कृत्वा विश्वासपूर्वकम्॥" इत्यनुजग्राह॥ इत्थमकिञ्चनाधिकारस्य भरसमर्पणरूपस्योपायस्य प्रतिपादनात् दुष्करकर्मान्तरनैरपेक्ष्यमर्थसिद्धम्॥

इत्थं शरणशब्दान्विते "प्रपद्ये" इति पदे "रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा। आत्मनिक्षेपकार्पण्ये" इति निर्दिष्टानि चत्वारि प्रतिपादितानि भवन्ति। "चराचराणि भूतानि सर्वाणि भगवद्वपुः। अतस्तदानुकूल्यं मे कार्यमित्येव निश्चयः॥", "स्वस्य स्वामिनि वृत्तिर्या प्रातिकूल्यस्य वर्जनम्" इत्यादिप्रमाणानुसारेण, स्वामित्वादीनि निबन्धनानि प्रतिपादयति सविशेषणे नारायणशब्दे आनुकूल्यसंकल्पः प्रातिकूल्यवर्जनं च सूचितमित्येतत् पूर्वमेवावोचाम। इत्थं परिकरा अपि उपायार्थतया सकृत्कर्तव्या इत्येतमर्थमधिकारान्तरेऽवोचाम।

("प्रपद्ये" इत्यत्र लडर्थः)

अस्मिन् क्रियापदे वर्तमानव्यपदेशो बहिर्लवनादिमन्त्रेष्विवानुष्ठानकालाभिप्रायः। अनेवम्भावेन—'अयं वर्तमानव्यपदेशो वर्तमान-

देहावधिकतया प्रपत्त्यनुष्ठानकर्तव्यतां विवक्षती'ति, 'फलप्राप्तिपर्यन्तं प्रपत्तिपरिकरस्य विश्वासस्यानुवृत्तिं विवक्षती'ति, 'प्रपत्तिकाले स्वसंकल्पितरीत्या अनुकूल्यसंकल्पादेः प्रपत्तिपरिकरभावेनैवाग्रेऽप्यनुवर्तनीयतां प्रदर्शयती'ति चोच्यमानाः पक्षाः अस्योपायस्य सपरिकरस्य सकृत्कर्तव्यतां प्रदर्शयद्भिः प्रमाणैर्विरुध्येरन् । त्वरातिशयेन भोगरूपत्वेन चोपनमन्त्या आवृत्तेः पूर्वखण्डोक्तरीत्याऽनुष्ठितोपायशरीरे न प्रवेशः । अतः अस्मिन् उपायवाक्ये वर्तमानव्यपदेशः, "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता" इत्युक्तां रागप्राप्तभोगरूपानुवृत्तिं विवक्षतीत्यपि न ।

इत्थं सर्वशरण्यत्वं शरणागतिस्वरूपमेतत्परिकरा अधिकारविशेषश्च पूर्वखण्डे प्रकाशितानि जातानि । एतेनानन्योपायत्वं सिद्धम् ॥

(उत्तरखण्डार्थः)

इत्थं प्रतीतायाः शरणागतेः, "तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम्" इत्याद्युक्तरीत्या सकलफलसाधनत्वात्, "तदन्यः को महोदारः" इत्युक्तरीत्या परमोदारस्य शरण्यस्य [1]"गृह्यमाणे न्यूनताशून्यमभीष्टसर्वप्रदम्" इत्युक्तरीत्या अर्थितार्थपरिदानदीक्षितरूपेणावस्थितत्वात् अत्र कस्य फलस्य कृते प्रपत्तिः क्रियत इत्यपेक्षायाम्, महोदारस्य शरण्यस्य, सर्वोत्कृष्टविषयस्यास्य वशीकरणविशेषस्य, शेषत्वैकरसस्य स्वस्वरूपस्य चानुरूपः फलविशेष

1 कोळक्कुरैविलॆन् वॆण्डर्ट्टॆल्लाम् तरुम्—तिरुवाय्मोऴि 3-9-5

उत्तरखण्डेन [1]"स्वार्थमेव मम स्वीकरणरूपमिदमेव" इत्युक्तरीत्या समस्तविरोधिनिवृत्तिपर्यन्तया प्रार्थ्यते। एतेनानन्यप्रयोजनत्वं सिध्यति।

अत्र सविशेषणो नारायणशब्दः प्राप्यताया अनुरूपाणि स्वामित्वादीनि अनन्तगुणविभूतिविशिष्टस्य स्वामिनः सर्वप्रकारनिरतिशयभोग्यतेत्येवंरूपान् आकारान् यथाप्रमाणं प्राधान्येन दर्शयति।

इत्थमुभयविभूतिविशिष्टस्य प्राप्यत्वेऽपि आत्महविरुद्देश्यत्वेन शेषत्वप्रतिसंबन्धित्वेन तन्निबन्धनकैङ्कर्यलक्ष्यत्वेन च प्रधानप्राप्यरूपेण वर्तमानाविमौ विशिष्टदम्पती इति द्योतनार्थमत्र श्रीमच्छब्दः। अयमर्थः, "वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः", "तया सहाऽऽसीनमनन्तभोगिनि" "आत्मानुरूपया श्रिया सहासीनम्", [2]"उज्ज्वलाग्रहस्तवलयायां श्रियां त्वयि चैवाधिवसतोः", [3]"अलंकारशालिश्रीमहालक्ष्म्या सह त्वाम्" इत्यादिष्वपि विवक्षितः।

इहत्यः श्रीशब्दः "श‍ृणाति निखिलान् दोषान् श्रीणाति च गुणैर्जगत्। श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम्॥ श्रयन्तीं श्रीयमाणां च श‍ृणतीं श‍ृण्वतीमपि।" इत्याद्युक्तरीत्याऽनेकार्थसद्भावेऽपि

1 तनक्केयाकवेन्नै क्कोळ्ळमीदे—तिरुवाय्मोऴि 2-9-4

2 ओण्तोडियाळ् तिरुमगळुं नीयुमे निलानिर्प-तिरुवाय्मोऴि 4-9-10

3 कोलत्तिरुमामगळोडु उन्नै—तिरुवाय्मोऴि 6-9-3

"श्रिञ् सेवायाम्" इति धातोर्निष्पन्नः सेव्यत्वादीन् वदन् कैङ्कर्यप्रतिसम्बन्धित्वपरः ॥

श्रीमते इति शब्देन विशिष्टे प्रतिसंबन्धिनि प्रतीतेऽपि सर्वविधकैङ्कर्यप्रयोजकप्रीतिविशेषोत्पादक - संबन्धगुणविभूत्यादि-परिपूर्णानुभवसिद्धयर्थमत्र नारायणशब्दः प्रयुक्तो भवति। अत्र चतुर्थी तादर्थ्यमुखेन कैङ्कर्यं सूचयति। तादर्थ्यमात्रस्य नित्यत्वात् "तच्छेषत्वानुसंधानपूर्वतच्छेषवृत्तिकः", "अहं सर्वं करिष्यामि" इत्याद्युक्तरीत्याऽत्र परिपूर्णानुभवपूर्वकं कैङ्कर्यं प्रार्थनीयम्। शरणागतिदशायां शरण्यं प्रति अभिमतप्रार्थनां करोतीत्यतोऽत्र, भवेयम् इति पदमध्याहार्यम्। इत्थं प्राधान्येन प्रथमत इष्टप्राप्तिं प्रार्थ्य तदर्थमनन्तरं नमसा सर्वानिष्टनिवृत्तिः प्रार्थ्यते ॥

अप्रार्थितः परिहरन् स्वपरैः स्वरक्षां
तादर्थ्यधीपरिहृतस्वपरार्थभावः।
अन्योपभोगविरहादनघः प्रपन्नो
भुंक्ते स्वभोगमखिलं पतिभोगशेषम् ॥

अस्य नमसोऽपि क्रियापदमध्याहरणीयम्, 'न मम स्याम्' इति। अनेन मदर्थं न भवेयमित्युक्तं भवति। "न मम किञ्चित् स्यात्" इति सर्वविषयममकारनिवृत्तिमुखेन सर्वानिष्टनिवृत्तिः प्रार्थ्यत इति वा। श्रीमन्त्रे इष्टप्राप्त्यनिष्टपरिहारविषये उक्तौ चोद्यपरिहारावत्राप्यनुसन्धेयौ। अनेन नमःशब्देनाविद्या-कर्म-तदुभयवा-

सना-रुचि-प्रकृतिसंबन्धादिरूपसर्वविरोधिषु निवर्त्यमानेष्वपि एतन्निर्वाचकश्रुत्युक्तरीत्या परिपूर्णकैङ्कर्यरूपफलदशायां फलान्तरानुभवन्यायेन शङ्कितयोः स्वाधीनस्वार्थकर्तृत्वस्वाधीनस्वार्थभोक्तृत्वरूपयोर्यवसयोर्निवर्तनेऽत्र प्रधानतात्पर्यमित्यनुसंदधते। एतेन फलान्तरानुभवदशायां जायमानयोः स्वाधीनस्वार्थकर्तृत्वभोक्तृत्वभ्रमयोर्मुक्तदशायां कैङ्कर्ये अभावं दृष्ट्वा तथा प्रार्थयते इति सिद्धम्।

"परमात्मनि नाराणां सर्वभारसमर्पणात्। नैरपेक्ष्यं तु संजातं नम इत्युच्यते बुधैः॥" इति इहत्यनमश्शब्दं श्रीवरदरामानुजो (यज्ञमूर्तिः) व्याचख्यौ। एतच्छ्लोकोक्तं नैरपेक्ष्यं स्वरक्षणे निर्भरत्वम्। अनेन निर्भरत्वेन भरसमर्पणं सूचितं वा स्वनिर्भरत्वपर्यन्तं भरसमर्पणमत्र विवक्षितं वा भवति। हविस्समर्पणे "इदमिन्द्राय न मम" इतिवत् "अहं श्रीमते नारायणाय" इत्यत्र भरगर्भतया समर्प्य, "न मम" इति स्वसम्बन्धो व्यवच्छिद्यत इत्युक्तौ अस्याः समर्पणरूपयोजनायाः स्वारस्यम्। अस्यां योजनायां पूर्वखण्डोऽङ्गप्रकपरः; उत्तरखण्डोऽङ्गिप्रतिपादकः। "अहमद्यैव मया समर्पितः" इत्युक्तरीत्याऽत्र "अहं श्रीमते नारायणाय" इति समर्पणे कृते सति, "यत् संरक्ष्यतयाऽर्प्यते", "तवैवास्मि हि भरः" इत्याद्युक्तरीत्या स्वरक्षणभरः स्वरक्षणफलं च तदीयमेवेति अत्राभिप्रेतमिति वा। "नमः" इत्यनेनात्मात्मीयैः सह स्वरक्षणतत्फलाभ्यां च सह स्वस्य संबन्धाभावः प्रदर्श्यते। परसंबन्धविधौ स्वसंबन्धनिषेधे च तात्पर्यादेतयोः

चतुर्थीनमसोर्द्वयोरपि फलमस्ति। अस्मिन् समर्पणेऽपि परनिरपेक्ष-कर्तृत्वादिकं निषेद्धुं "नमः" इत्युच्यत इति वा। स्थूलप्रक्रिया-स्वीकारेऽपि "नमामि" इति पदस्यात्मसमर्पणार्थतया व्याख्यान-परपदस्तोत्रप्रक्रिययाऽयं नमश्शब्दः समर्पणार्थस्य संगतः।

इत्थमुत्तरखण्डमात्मसमर्पणपरतयाऽनुसन्दधतामेतदनुरूपः स्वरूपानुबन्धी फलविशेषोऽत्र स्वतःप्राप्तः। पूर्वोक्तरीत्या फलपर-तयोत्तखण्डमनुसंदधतामिदमात्मरक्षाभरसमर्पणमुपायपरे पूर्वखण्डे शरणशब्दान्वितक्रियापदेऽनुसन्धेयम्।

(द्वयस्थपदप्रतिपादितार्थसंग्रहः)

इत्थं द्वये पदेषु क्रमेण शब्दार्थस्वभावाभ्यां पुरुषकारयोगः, तस्य नित्यत्वम्, उपायवैशिष्ट्यम्, शरण्यगुणपूर्णत्वम्, संबन्धविशेषः, दिव्यमङ्गलविग्रहयोगः, तत्र शेषभूतस्याश्रयणावलम्बनम्, तस्यो-पायत्वप्रकारः, वशीकरणविशेषः, तत्परिकराः, अधिकारिविशेषः, प्राप्यवैशिष्ट्यम्, गुणविभूतिविशिष्टप्राप्यत्वम्, कैङ्कर्यप्रतिसम्बन्धित्वम्, कैङ्कर्यप्रार्थना, सर्वविधकैङ्कर्यलाभः, सर्वानिष्टनिवृत्तिः, तस्या आत्यन्ति-कत्वम्, पराधीनपरार्थकर्तृत्वम्, तथाविधभोक्तृत्वमित्येते प्राधान्येन, एतदपेक्षितार्थाः सर्वेऽपि सिद्धसाध्यविभागवद्भ्यामुपायोपेयाभ्यां द्वाभ्यां प्रधानप्रतिपाद्याभ्यां संबद्धाः प्रकाशिताः॥

(अर्थद्वयानुसन्धाने क्रमः)

इत्थं शारीरकशास्त्र इव तत्त्वविशेषस्योपायविशेषस्य फलविशेषस्य चास्मिन् मन्त्ररत्ने प्रतिपादितत्वेऽपि, अस्य श्वेताश्वतर-

मन्त्रवत् फलापेक्षापूर्वकोपायानुष्ठानप्रधानत्वात् उपायफलयोरु त्पत्तिक्रमेण संगतेन पाठक्रमेण फलप्रतिपादकवाक्यस्य पाश्चात्यत्वेऽपि अर्थक्रमेणेदं पूर्वमनुसन्धेयमिति पूर्वेऽनुजगृहुः । पुरुषः पुरुषार्थमविमृश्योपायविमर्शमुपायानुष्ठानं च न कुर्यात् किल । इत्थं श्रीमन्त्रेऽपि उपायफलप्रतिपादकांशयोः क्रमप्रकारौ द्रष्टव्यौ । फलार्थिनोऽधिकारिणस्सत एव ह्यस्य एतदुपायानुष्ठानं प्राप्तं भवति ।

(द्वयस्य संपिण्डितार्थः)

"द्वयेन शरणं व्रजेत्", "द्वयार्थः शरणागतिः" इत्यभियुक्तोक्तितो द्वयमुपायानुष्ठानं प्राधान्येन प्रकाशयति। अत्र पूर्वखण्डः, चतुर्थ्यन्तपदद्वयम्, नमश्चेति अवान्तरवाक्यत्रयसत्त्वेऽपि पिण्डीभूय उपायप्रधानैकवाक्यरूपे परिसमाप्तता भवति । कथमिति चेत्—सर्वस्वामिनः सर्वप्रकारनिरतिशयभोग्यस्य श्रीमहालक्ष्म्यविनाभूतस्य नारायणस्य श्रीचरणयोः स्वरूपप्राप्तसर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यस्य विरोधिनां सर्वेषां निवृत्तिपूर्वकं परिपूर्णकैङ्कर्यप्राप्त्यर्थम् अकिञ्चनो दासोऽहम्, स्वरक्षणभरादिषु ममान्वयो यथा निवृत्तः स्यात् तथा श्रीमतो नारायणस्य चरणयोरङ्गपञ्चकसंपन्नमात्मरक्षाभरसमर्पणं करोमीति द्वये सम्पिण्डितोऽर्थः ॥

वैराग्यविजितस्वान्तैः प्रपत्तिविजितेश्वरैः ।
अनुक्रोशैकविजितैरित्युपादेशि देशिकैः ॥

इदमष्टपदं व्यासे समासे षट्पदं विदुः ।
वाक्यं पञ्चपदैर्युक्तमित्याख्यातप्रधानकम् ॥ | १

(द्वयमहिमनिरूपणम्)

एकं द्वयं त्र्यवयवं सुखलभ्यतुर्यं
व्यक्तार्थपञ्चकमुपात्तषडङ्गयोगम् ।
सप्तार्णवीमहिमवत् विवृताष्टवर्णं
रङ्गे सतामिह रसं नवमं प्रसूते ॥

(अधिकारार्थसंग्राहिका गाथा)

आम्नातं द्वयं संमेत्य (द्वयमधीत्य), दययोपकुर्वतः श्रीवल्लभस्य चरणौ द्वावपि शरणतयाऽऽश्रित्य अस्मदीयं पङ्कजवासिनीनाथमुपसृत्य आनन्दवर्धकदेशे दास्यानां सर्वेषां निर्दोषज्ञानेन सह स्वीकरणप्रकारं न्यरूपयाम ॥

न वेदान्ताच्छास्त्रं न मधुमथनात् तत्त्वमधिकं
न तद्भक्तात् तीर्थं न तदभिमतात् सात्त्विकपदम् ।
न सत्त्वादारोग्यं न बुधभजनाद् बोधजनकं
न मुक्तेः सौख्यं न द्वयवचनतः क्षेमकरणम् ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे द्वयाधिकारो द्वाविंशः

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## चरमश्लोकाधिकारः २३

य उपनिषदामन्ते यस्मादनन्तदयाम्बुधेः
त्रुटितजनताशोकः श्लोकः स्वयं समजायत ।
तमिह विधिना कृष्णं धर्मं प्रपद्य सनातनं
शमितदुरिताः शङ्कातङ्कत्यजः सुखमास्महे ॥
दुर्विज्ञानैर्नियमगहनैर्दूरविश्रान्तिदेशैः
बालानर्हैर्बहुभिरयनैः शोचतां नः सुपन्थाः ।
निष्प्रत्यूहं निजपदमसौ नेतुकामः स्वभूम्ना
सत्पाथेयं किमपि विदधे सारथिः सर्वनेता ॥

(गाथा)

संभूय विलक्षणहस्तवलयया श्रीदेव्या स्वयम्, एकसंकल्पेन सृष्टाः सर्वे चेतनाः यथोज्जीवेयुः तथा, विलक्षणद्वारकानगरीक्षेमानुगुणं वसुदेवपुत्रभूतो राज्ञां रथे सारथीभूय स्थितः शीतलतुलसीपुष्पवक्षाः, स्वयमेवास्माकं स्वेनैवोक्ताद्वितीयधर्मो भवन्, स्वं सदा दृष्ट्वा दृष्ट्वा चरणयोरुत्तंसनस्य प्रतिबन्धकीभूतां चक्षुःपिधानलीलां निवर्तयति ॥

(चरमश्लोकावतारिका)

"एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ॥" इत्युक्तरीत्या श्रियः पत्यौ सर्वेश्वरे साक्षु-

परित्राणदुष्कृद्विनाशधर्मसंस्थापनार्थं विलक्षणद्वारकाक्षेत्राधीशो भूत्वा एत्यावतीर्य (द्वारकाक्षेत्राधीशत्वप्राप्त्यर्हमवतीर्य) सर्वसुलभीभूते, "द्रौपद्या सहिताः सर्वे नमश्चक्रुर्जनार्दनम्" इत्युक्तरीत्या शरणागतानां पाण्डवानां कृते, 'एषां दूतः' इत्यवस्थाय अर्जुनं रथिनं कृत्वा स्वयं सारथीभूय तद्विधेयतया स्थितवति सति, अस्मिन्नर्जुने च स्वं निमित्तमात्रं स्वीकृत्य सर्वेश्वरस्य स्वप्रतिपक्षनिरसनार्थां समवस्थितिं दृष्ट्वा, बन्धुविनाशः सिद्ध इति निश्चित्य अस्थानस्नेहजशोकेनास्थानकृपया आचार्यादीनां युद्धोन्मुखत्वेऽपि तेषां वधेन पापं भवतीति भयेन च व्यामुह्य, किं हितमिति ज्ञातव्यमिति विचार्य, "यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इति विज्ञापितवति सति, तच्छोकनिवर्तनार्थं स्वयं देहादिव्यतिरिक्तं परशेषतैकरसं नित्यात्मस्वरूपं, एतत्स्वरूपज्ञस्य परमपुरुषार्थलाभार्थं परम्परया कारणभूतौ कर्मयोगज्ञानयोगौ, साक्षादुपायत्वेन चोदितं भक्तियोगं च सपरिकरमुपदिश्य तदा अयं परमपुरुषार्थो झटिति प्राप्तव्य इति त्वरायां सत्यामपि सपरिकरस्यास्योपायस्य दौष्कर्यात्, एतदुपायानुष्ठानार्थमपेक्षितयोः ज्ञानशक्त्योः सत्त्वेऽपि अनेकावधानेन सह चिरकालसाध्योपायस्वभाववशात् अभिमतस्य शीघ्रसिद्ध्यनर्हत्वेनावस्थितत्वाच्च निरतिशयशोकाविष्टे अर्जुने तं व्याजीकृत्य स परमकारुणिको गीतोपनिषदाचार्यः, "भक्त्या परमया वाऽपि प्रपत्त्या वा महामते । प्राप्योऽहं नान्यथा प्राप्यो मम कैङ्कर्यलिप्सुभिः ॥" इति स्वेन विकल्प्य विहितयो-

रूपाययोर्मध्ये, "तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम्" इति स्वचरणप्राप्तिरूपफलस्य, अन्येषामभिमतानां च सर्वेषां साधारणसाधन-मानुकूल्यसंकल्पादिव्यतिरिक्तपरिकरनिरपेक्षं लघुतरं क्षणमात्रसाध्यं रहस्यतमोपायं श्रोतव्यशेषरहितोपदेशपर्यवसितेन चरमश्लोकेन सकल-लोकरक्षार्थमनुगृह्णाति ।

श्रुतिसिद्धेऽस्मिन्नर्थे शरण्येन सर्वेश्वरेण स्वयमुपदिष्टे सति, इदमेव, "सन्त्यज्य विधिना नित्यं षड्विधां शरणागतिम् । आचार्यानुज्ञया कुर्यात् शास्त्रदृष्टेन वर्त्मना ॥" इति श्रीविष्णुतत्त्वाद्युक्ताचार्यानुज्ञा-रूपमपि संपन्नम् ॥

(चरमश्लोकव्याख्यारम्भः)

"सर्वधर्मान्" इत्यादि—अस्य श्लोकस्य शङ्करादिभिः कुदृष्टिभिरुक्तान् सर्वान् अर्थान् तात्पर्यचन्द्रिकायां निक्षेपरक्षायां च विस्तरेणादूषयाम । अत्र सारभूतान् अर्थान् सत्संप्रदायसिद्धरीत्या आचक्ष्महे । अत्र पूर्वार्धमुपायविधायकम् । उत्तरार्धं फलनिर्देश-मुखेनविधिशेषभूतम् । अतोऽयं श्लोक उपायविधानप्रधानः ॥

(सर्वधर्मशब्दार्थः)

धर्मो नाम—शास्त्रैकसमधिगम्यं पुरुषार्थसाधनम् । धर्मानिति बहुवचनेनाभिमतसाधनत्वेन शास्त्रचोदितानां धर्माणां बाहुल्यमुच्यते । सर्वशब्देन सपरिकरतारूपस्थितिर्विवक्ष्यते ; धर्मपरिकराणामपि धर्मत्वेन व्यवहारे नास्ति हि क्षतिः । अस्य सर्वशब्दस्यैकशब्दप्रतिसंबन्धितया योजने क्रियमाणे अयम्

अङ्गिनां नानाधर्माणां कात्स्‍न्यँ वक्ति । एवं सामान्यत उक्तावप्यत्र प्रकरणवशात् मोक्षार्थतया शास्त्रविहितानां सपरिकराणां नानाप्रकाराणामुपासनानां सर्वेषां प्रतिपादने तात्पर्यम् ।

पुरुषोत्तमत्वज्ञानस्य सर्वविद्योपकारकतत्त्वज्ञानमात्रतया, अवताररहस्यचिन्तनस्यानुष्ठीयमानोपासनादीनां शीघ्रनिष्पत्ति-हेतुतया, देशवासादीनामुपायविरोधिपापक्षयहेतुत्वमुखेनोपाय-निष्पादकतया च श्रीगीताभाष्यादिषु समर्थितत्वादेतेषां साक्षान्मोक्षोपायत्वापादनपूर्वम् अङ्गिबहुत्वविषयकेण बहुवचनेन विवक्षावर्णनं नोचितम् । "नाना शब्दादिभेदात्" इत्युक्तरीत्या एषाम-भावेऽपि सद्विद्यादहरविद्यादिभेदेनाङ्गिबहुत्वस्य लाभादिदं बहुवचनं सार्थम् । अङ्गिबहुत्वस्य परिकरबहुत्वस्य च विवक्षणेऽपि न विरोधः ॥

(परित्यज्येति शब्दार्थः)

"परित्यज्य" इत्यत्र **त्यागो** नाम—"अनया च प्रपत्त्या मामाकिञ्चन्यैकपूर्वकम्" इत्याद्युक्तरीत्या **अकिञ्चनस्य** स्वस्य दशा-दर्शनेनोपायान्तरेषु जातं **नैराश्यम्** । आशया ग्रहणे क्रियमाणे, आशात्यागः त्याग इति सुवचः किल । तत्र 'परि' इत्युपसर्गेण "अनागतानन्तकालसमीक्षयाऽप्यदृष्टसन्तारोपायः", "त्वत्पादकमला-दन्यन्न मे जन्मान्तरेष्वपि" इत्याद्युक्तरीत्या **अत्यन्ताकिञ्चनस्य सर्वकालेषु सर्वप्रकारयोग्यताराहित्यस्य** ज्ञानेन ततो **नैराश्यातिशय** उच्यते । **सर्वप्रकारैस्त्यागो** नाम—**पूर्णानुष्ठानशक्त्यभावे यथा-शक्त्यनुष्ठानं** कुर्म इति, तद्योग्यताविरहदशायामन्यान् कांश्चिदनु-

कल्पान् वा उपायोपायान् वाऽनुतिष्ठाम इति स्वस्य दुष्करेषु प्रवर्तमानाया दुराशाया अभावः। अस्यानुवादस्याधिकारविशेषप्रदर्शनं प्रयोजनम्। अत्र परीत्युपसर्गेणाधिकारपौष्कल्यं विवक्ष्यते। "अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्" इत्यत्र "प्राप्य" इत्यस्य विधित्वं हित्वा "प्राप्य वर्तमानस्त्वम्" इति व्याख्यानवत् अत्रापि "परित्यज्य स्थितस्त्वम्" इति विवक्षितुं युक्तम्। इत्थमर्थान्तरेष्वपि प्रयोगसत्त्वात् त्वाश्रुतिमात्रावलम्बनेन त्यागोऽङ्गमिति वक्तुं न युक्तम्।

"परित्यज्य" इत्यस्य विधित्वे, प्रपत्त्यध्यायादिषु विहितरीत्या आकिञ्चन्यप्रतिसन्धानादिरूपं कार्पण्यं प्रपत्त्यङ्गं विधीयत इत्युक्तौ नार्थे विरोधः। तदा, 'सर्वधर्मान् परित्यज्य' इत्यनेन, "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः", 'न धर्मनिष्ठोऽस्मि" इत्याद्युक्तरीत्या सर्वधर्मैः स्वस्य योग्यतापर्यन्ततया त्यक्ततां पुरस्कृत्येत्युक्तं भवति। एतावद्विलम्बितप्रतीतिकोऽप्यर्थो बहुप्रमाणानुगुणत्वात् तद्विरुद्धशङ्काद्युक्तसर्वधर्मस्वरूपत्यागाद्यर्थापेक्षयोपादेयः।

प्रपत्त्यर्थं कश्चिदपि धर्मो नानुष्ठेय इति प्रपत्तेर्नैरपेक्ष्यमुच्यत इत्येतत् विधिपक्षस्योचितम्। तदा परीत्युपसर्गः, "आचान्तेन कर्तव्यम्; शुचिना कर्तव्यम्" इत्यादिषूक्ताः सर्वसाधारणयोग्यतापादका अप्येतदङ्गतया न स्वीकार्या इति विवक्षति।

(स्वरूपत्यागविधिवादनिरसनम्)

एवमस्वीकृत्य, कर्मयोग-ज्ञानयोग-भक्तियोगरूपाणां धर्माणां स्वरूपत्यागः प्रपत्तेरङ्गमिति पक्षे, प्रपत्तिः सर्वाधिकारहीना स्यात्।

धर्मानुष्ठानशक्तस्य किल तेषां त्यागो विधातव्यः। इदं बहुप्रमाणसिद्धस्य कार्पण्यरूपस्याङ्गस्य, "[1]उपायेन केनापि हीनो दासोऽहम्", "[2]कुलेषु" "[3]स्नात्वा त्रीन्" "न धर्मनिष्ठोऽस्मि" इत्यादिषु प्रसिद्धस्य अकिञ्चनाधिकार इति संप्रदायस्य च विरुद्धम्।

ईश्वरं प्रति अत्यन्तपरतन्त्रत्वादुपायान्तराणां क्षेत्रज्ञो नित्याशक्त इति कल्पयित्वाऽस्य तेषां त्यागो विधीयत इति कथनं सर्वशास्त्र-स्ववचन-स्वप्रवृत्त्यादिविरोधादत्यन्तपरिहास्यम्। तदा तुल्यन्यायतया "व्रज" इति विधानमपि न घटेत। उपायान्तराणां जीवात्मा नित्याशक्त इति प्रतिपादनं स्वानिष्टस्यानुवादपक्षस्य स्थिरीकरणापादनमित्येतावदेव। एकप्रयोगस्यैव अशक्तं प्रति त्यागानुवादरूपत्वं शक्तं प्रति त्यागविधिरूपत्वं चैकस्मिन् वाक्ये न घटेत। फले वैषम्ये असति अधिकारिणि चैकस्मिन् सति गुरुलघुविकल्पोऽपि वक्तुं न युज्यते। गुरूपाये शक्तस्यैव तत्त्यागविशिष्टलघूपायविधौ गुरूपाये प्रवर्तमानस्य कस्याप्यभावात् मुखान्तरेणाधिकारिभेदस्य दुर्वचत्वाच्च गुरूपायविधायकानि शास्त्राणि सर्वाण्यप्रमाणानि स्युः। लघूपायप्ररोचनार्थं गुरूपायं विधाय स एव निषिध्यत इति कथनमत्यन्तानुचितम्। अनुपाया उपायत्वेन विधीयन्ते इत्युक्तौ श्रुतिस्मृत्यादीनां मोहनशास्त्रत्वप्रसङ्गात् शरण्य-

1 पुकलोन्रिल्लावडियेन्—तिरुवाय्मोऴि 6-10-10

2 कुलङ्गलाय—तिरुच्चन्द 90

3 कुलित्तुमून्ऱु—तिरुमालै 25

स्वरूपादीन्यपि न सिध्येयुः। गुरुभूतानां कृष्यादिव्यापाराणां लघूनां रत्नवाणिज्यादीनाञ्च अर्थार्थिषु विकल्पोऽप्यधिकारिविशेषव्यवस्थयेत्येतत् लोकप्रसिद्धम्। श्रीकूरेशस्य चरमश्लोकव्याख्यानेऽप्येतावत एव विवक्षितत्वात् न कश्चिद्विरोधः। समावर्तनादिषु गुरुलघुविकल्पोऽप्यवस्थाविशेषैर्नियत इत्यनभ्युपगमे गुरुविधानवैयर्थ्यं प्रसज्येत।

ज्ञानपूर्तिं वा विश्वासपूर्तिं वहन् प्रपत्तेरधिकारी, ज्ञानमान्द्यं वा विश्वासमान्द्यं वा वहन् उपासनादीनामधिकारीत्युक्तौ, एषां चरमश्लोकादीनामुपदेष्टृत्वात् परमास्तिकत्वाच्च पूर्णज्ञानविश्वासानां व्यासादीनामुपासनादिष्वधिकारो न स्यात। ते उपदेशकाले ज्ञानविश्वासवन्तः पश्चाद्व्यामुह्य उपासका बभूवुरिति प्रतिपादनानुगुणं न किमपि प्रमाणमस्ति। प्रपन्नाः सन्तो लोकसंग्रहार्थमुपासनादीन् अन्वतिष्ठन् इत्यस्य गमकं तत्तत्प्रबन्धेषु न किमपि वचनमस्ति। तथाकल्पनेऽपि स्वाधिकारं प्रति निषिद्धानां लोकसंग्रहार्थमनुष्ठाने, तेषामेतान् प्रति पापत्वादधिकारविरुद्धानुष्ठानस्य करणात्, स्वानुष्ठानमुखेन लोकसंग्रहोऽपि कर्तुमशक्यः स्यात्। स्वस्य द्वयोर्मार्गयोः शास्त्रानुमतत्वे तयोर्मध्ये लोकानां शक्यं तेषां हितं च सन्तमेकं स्वयमनुष्ठाय प्रदर्श्य लोकानां तत्र दृढावस्थापनमेव लोकसंग्रह इति श्रीगीताभाष्येऽनुजग्राह। न तु संन्यासिनं प्रति निषिद्धस्य गृहस्थैकान्तधर्मस्य संन्यासिनाऽनुष्ठाय प्रदर्शनं लोकसंग्रहार्थं भवितुमर्हति। इदमाज्ञातिलङ्घनमित्येवमेव। इत्थं

प्रपत्त्यधिकारिणो निषिद्धस्य तेनैव कैङ्कर्यबुद्ध्याऽनुष्ठानमपि स्वाधिकारविरुद्धम् । प्रपत्तेरनपेक्षितानि शास्त्रीयाणि कैङ्कर्य-बुद्ध्याऽनुतिष्ठतां न विरोधः ।

स्वस्वजात्याद्यनुरूपाणां स्वस्वशक्यानां सर्वधर्माणां स्वरूप-त्यागोऽङ्गतया विधेय इति पक्षे, प्रपत्त्युत्तरकाले स्ववर्णा-श्रमाद्यधिकारानुरूपं नियतं कैङ्कर्यफलं हित्वा अहिंसासत्यवचनादि-सामान्यधर्मान् आचार्यवन्दनादीनि च हित्वा पशुमृगपक्ष्यादि-वदटनं प्रसज्येत । निषेधवाक्यसिद्धानां निवृत्तिरूपधर्माणां स्वरक्षणार्थस्वव्यापाररूपत्वाभावेन शरणागत्या सह विरोधा-भावादत्र प्रवृत्तिरूपधर्माणां त्याग एव विवक्षित इति निर्वाहोऽपि मन्दः । निवृत्तिरपि व्यापारविशेष इत्येतत, सोऽपि स्वरक्षणार्थ इत्येतच्च लोकवेदसिद्धं किल ॥ एतद्विधिबलात् प्रवृत्तिनिवृत्ति-रूपान् सर्वधर्मानपि परित्यज्याटनमेव प्रपन्नस्य शास्त्रार्थो भवत्विति चेत्—प्रपन्नैः पूर्वैः, आधुनिकैश्च सावधानैः क्रियमाणानि कैङ्कर्याणि अपचारपरिहरणानि च विरुद्धानुष्ठानानि स्युः । यथाप्रमाणं प्रपत्तिसंप्रदायप्रवर्तकानां परमकारुणिकानां च सतां भ्रमवि-प्रलम्भसंभावनाऽपि नास्ति । यावज्जीवं सर्वधर्मत्यागस्य विधेयत्वे किलायं विरोधो भवति । प्रपत्त्यनुष्ठानक्षणे सर्वधर्मस्वरूपत्याग-स्याङ्गत्वे नास्ति हि विरोध इति चेत्—तदा असंभावितानां स्वरूप-त्यागो न विधेयः । संभावितानां स्वरूपत्यागस्य विधेयत्वे तादात्त्विकानि भगवत्क्षेत्रवास-शिखायज्ञोपवीतोर्ध्वपुण्ड्रधारणादीनि परित्यज्य प्रपत्तिः कर्तव्या प्रसज्येत ।

अतः उपासने उपनमद्भिः कर्माद्यङ्गैर्निरपेक्षायाः सत्याः प्रपत्तेरङ्गत्वेन केऽपि धर्मा न स्वीकार्या इत्येतदेव त्यागविधिपक्षस्योचितम् । अस्मिन् त्यागविधिपक्षे उपायान्तरसामर्थ्यरहितानां, तत्सत्त्वेऽपि विलम्बाक्षमाणां चास्यां प्रपत्तावधिकारः । एवं सति केषामपि प्रमाणानां विरोधो नास्ति ।

पूर्वाचार्या अप्यत्र सर्वधर्मस्वरूपत्यागः प्रपत्त्यङ्गमिति, इत्थं नेति च विवादं नाकार्षुः । किं तु प्रपत्त्यधिकारभूतस्य आकिञ्चन्यस्य प्रपत्तिगतस्य नैरपेक्ष्यस्य चास्मिन् चरमश्लोके केषु पदेषु विवक्षणमुचितमिति विममृशुरित्येवमेव ।

अधिकारं पुरस्कृत्योपायस्य निरपेक्षताम् ।
एकशब्देन वक्तीति केचिद्वाक्यविदो विदुः ॥
नैरपेक्ष्यं पुरस्कृत्य विहितस्य लघीयसः ।
उपायस्याधिकारं तु श्लोकद्योत्यं विदुः परे ॥
इत्थमर्थाविशेषेऽपि योजनामात्रभेदतः ।
प्राचां विवादः संवृत्तो भाष्यकारैरवारितः ॥
अज्ञातपूर्ववृत्तान्तैर्यदत्रारोपितं परैः ।
तत्तु श्रीविष्णुचित्ताद्यैर्निर्मूलमिति दर्शितम् ॥

("इदं शरणमज्ञानाम्" इत्युक्ताधिकारविशेषनिरूपणम्)

एवं सति "इदं शरणमज्ञानामिदमेव विजानताम् । इदं तितीर्षतां पारमिदमानन्त्यमिच्छताम् ॥ इति, "अविद्यातो देवे

परिबृढतया वा विदितया स्वभक्तेर्भूम्ना वा जगति गतिमन्यामविदुषाम्" इत्युच्यमानस्याधिकारभेदस्य सद्भावः कथमिति चेत्—अत्रोक्तमज्ञानं न पश्वादिवत् शास्त्रीयस्य कस्याप्यज्ञानम् । अन्यत् किमिति चेत्—उपासनादिषु विशदज्ञानाभावो वा प्रपत्तावपि सूक्ष्मविशेषाणां ज्ञानाभावोवेत्येतावदेव । अत्र "विजानताम्" इति "देवे परिबृढतया वा विदितया" इति चोक्तो ज्ञानविशेषोऽपि उपासनादिषु विशदज्ञानं वा प्रपत्त्युपयुक्ते शरण्यगुणविषये विशदज्ञानं वा इत्येतावदेव । न त्वेतदनपेक्षितं सर्वविषयकज्ञानम् । परिबृढत्वरूपशरण्यगुणविशेषज्ञानं हि इहोच्यते । अस्मिन् उपयुक्तज्ञाने सत्यपि, उपायान्तरे शक्त्यभावे अकिञ्चनः सन् प्रपत्तेरधिकारी भवति । शक्तौ सत्यामपि, "शरैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः । मां नयेत् यदि काकुत्स्थस्तत् तस्य सदृशं भवेत् ॥" इत्युक्तरीत्या रक्षकहस्तप्रतीक्षणपूर्वकं स्वहस्तमाकुञ्च्यावस्थानं किलोचितमिति चेत्—इदं प्रपन्नोत्तरकृत्यविशेषस्योदाहरणम् । अन्यथा उपायविधायकशास्त्राणि निरर्थकानि स्युः । उपायान्तरे स्वस्य ज्ञानसत्त्वे तत्रानुष्ठानशक्तिसत्त्वेऽपि विलम्बक्षमत्वाभावे सति झटिति फलप्रदानक्षमा प्रपत्तिरेवास्माकमुचितेति मन्वानोऽपि अस्याः प्रपत्तेरधिकारी । इदम् "इदं तितीर्षतां पारम्" इत्यादिषूच्यते । कथमिति चेत्—"तितीर्षतां पारम्" इत्येतत् झटिति अनिष्टनिवृत्तिर्जायतामिति त्वरावतामित्यर्थकम् । "आनन्त्यमिच्छताम्" इत्येतत् स्वरूपप्राप्तपरिपूर्णभगवदनुभवप्राप्तिमन्तराऽऽत्मधारणासमर्थानामित्यर्थकम् ।

इदमुभयमभिप्रेत्य, "स्वभक्तेर्भूम्ना वा" इत्याचष्टे । अत्र भक्तिरिति प्रेमपारवश्यमुच्यते ; न तु भक्तियोगः । अस्या भक्तेर्भूमा च झटिति प्राप्तेरभावे विनाशपर्यवसायी अवस्थाविशेषः । अयं केषांचित् व्यवस्थितभक्तियोगस्याभावेऽपि सुकृतविशेषमूलकभगवत्प्रसादात् जायेत । एतदवस्थावानपि प्रपत्तेरधिकारी । एवम्भावादुपायान्तराज्ञानामस्मिन्नुपाये समुदायज्ञानमात्रवताम्, अत्रोपायान्तरे च विशदज्ञानसत्त्वेऽपि उपायान्तरे अनुष्ठानशक्तिशून्यानाम्, एतदुभयसत्त्वेऽपि विलम्बासहात्यतिशयवतां च प्रपत्तौ प्रवृत्तिर्युज्यते । अयं विलम्बाक्षमोऽपि स्वसंकल्पितकाले फलप्राप्तेः कृते उपायान्तररहितः । इमं प्रकारमभिप्रेत्य "जगति गतिमन्यामविदुषाम्" इत्युच्यते । व्यासादयोऽधिकारिपुरुषत्वात् विलम्बक्षमा उपायान्तरशक्ताश्च भवन्ति । अत उपासने प्रवृत्ताः । न तु ज्ञानमान्द्यात् विश्वासमान्द्याद्वा प्रवृत्ताः ।

अशक्तस्यातिकृच्छ्रेषु दुराशादार्ढ्यशालिनः ।
कस्यचित् बुद्धिदौर्बल्यं लघुत्यागस्य कारणम् ॥
तत्र प्रपत्त्यनर्हाणामन्यदित्यपि युज्यते ।
व्यासादिषु तु नैवैषा नीतिः संशयघातिषु ॥

इत्थमुपासनप्रपदनयोरधिकारस्य व्यवस्थितत्वात् शास्त्रद्वयमपि सप्रयोजनम् । द्वयोरप्यधिकारिणोः स्वधर्मे प्रतिपत्तिवैषम्यमेवास्ति । प्रपन्नस्य स्वोद्दिष्टं फलमुद्दिश्यान्यस्य कस्यचिदनुष्ठाने ब्रह्मास्त्र-

बन्धन्यायेन विरोधसंभवेऽपि स्वयम्प्रयोजनभावेन, भगवद्भागवत-समृद्ध्यादिफलान्तरोद्देशेन वाऽन्यस्य कस्यचिदनुष्ठाने नास्ति विरोधः॥

(उपायत्वबुद्धित्यागवादनिरसनम्)

इत्थं स्वरूपत्यागस्यायुक्तत्वेऽपि उपायत्वबुद्धित्यागः "परित्यज्य" इत्यस्यार्थः स्यादिति चेत्—प्रपन्नस्योत्तरकृत्यगोचरेषु वाक्येषु उपायत्वबुद्धित्यागस्य विधानमित्येतदुचितम्। इहोत्तरकृत्य-परत्वमन्तरैव उपायविधायकत्वेन स्थिते वाक्ये प्रतिपादना-देतद्बुद्धित्यागपूर्वकं धर्मस्वरूपं प्रपत्तेरङ्गतयाऽनुष्ठेयमिति फलतीति, स्वयंप्रयोजनं केवलकैङ्कर्यमुत्तरकृत्यमिति मतं न सिध्येत्। अस्यो-पायस्योच्यमानं धर्मान्तरनैरपेक्ष्यमपि न सिध्येत्। अयमुपायो-ऽकिञ्चनाधिकारिकश्च न स्यात्। कथमिति चेत्—अनुपायेषूपाय-बुद्धित्यागोऽत्र न विधेयः। उपायेषूपायबुद्धित्यागपूर्वकमनुष्ठानं तावत् प्राचीनोपासनादिषु स्थितिरेवेति। अत्रोपायत्वबुद्धित्यागोऽर्थ इति प्रतिपादनपरे पक्षे, त्यागविधेरनुष्ठानविधेश्चाधिकारिभेदेन विरोध-परिहारवर्णनमप्यनपेक्षितवचनम्। अत्र स्वरूपत्यागे उच्यमाने किलायं विरोधप्रसङ्गो भवति। इत्थं बुद्धिविशेषत्यागपूर्वककर्म ज्ञान-भक्तीनां प्रपत्त्यङ्गत्वेन स्वीकारपक्षे उपासनप्रपदनयोरङ्गाङ्गिव्य-पदेशव्यत्यासमात्रं स्यात्। अङ्गभावे यथाकथञ्चिदनुष्ठानमपि पर्याप्तमिति वैषम्यमपि मन्दम्। "सकलाङ्गोपसंहारे काम्यं कर्म प्रसिध्यति" इत्युक्तं किल।

अतः स्वरूपत्यागोक्तौ कैङ्कर्यस्यापचारता ।
उपायत्वमतित्यागे तत्स्वरूपाङ्गता भवेत् ॥
सात्त्विकत्यागयुक्तानां धर्माणामेतदङ्गता ।
नूनं विस्मृतकाकादिवृत्तान्तैरुपवर्णिता ॥
सकृत् प्रपदनेनैव धर्मान्तरदवीयसा ।
तत्क्षणेऽभिमतं पूर्वे संप्रापुरिति शुश्रुम ॥
प्रसक्ताङ्गत्वबाधे तु ब्रह्मास्त्रसमतेजसः ।
उपायस्य प्रभावश्च कैङ्कर्यादि च सुस्थिरम् ॥

अतोऽत्र सर्वधर्माणां स्वरूपत्यागोऽङ्गत्वेन विधीयत इति, तदङ्गत्वानुगुणमत्र बुद्धिविशेषत्यागमात्रं विधीयत इति प्रतिपाद्यमानौ पक्षौ आज्ञानुपालनादिशास्त्राणां प्रपत्तेर्नैरपेक्ष्यप्रतिपादकशास्त्राणां पूर्वाचार्यसंप्रदायानाम्, प्रपन्नतया स्थितानां पूर्वशिष्टानामाचारस्य च विरुद्धौ ॥

(त्यागविधितात्पर्यनिरूपणम्)

इत्थमुक्तैर्दोषैर्धर्माणां स्वरूपत्यागः प्रपत्तेर्नाङ्गम् । उक्तनैरपेक्ष्यात् तेषां धर्माणां स्वरूपमपि अस्याः नाङ्गम् । अतोऽत्रान्येषां केषामपि धर्माणामपेक्षाऽस्याः प्रपत्तेर्नास्तीति प्रतिपादनेऽस्य त्यागविधेस्तात्पर्यम् । एवंप्रतिषेधस्य प्रसङ्गोऽपेक्ष्यते । इह के धर्माः प्रसक्ताः प्रतिषिध्यन्त इति चेत्—वेदान्तचोदितासु विद्यासु मध्ये कासुचिद्विद्यासु आम्नाता अङ्गत्वेन प्रतीता वर्णाश्रमधर्माः गतिचिन्तनादयश्च

विद्यान्तरेषु यथा प्राप्नुवन्ति, तथा न्यासविद्यायामपि एतेषु तुल्यन्यायतयाऽङ्गत्वेन प्राप्तेषु, एवमङ्गत्वप्रसक्तिमतां सर्वेषां धर्माणामपेक्षा अस्या नास्तीति प्रतिपादनमस्य स्थलस्योचितम्। एषां धर्माणां "सहकारित्वेन च" इति सूत्रोक्ते विद्यासहकारित्ववेषे निवृत्तेऽपि, 'विहितत्वाच्चाश्रमकर्मापि' इति सूत्रान्तरोक्तस्य विनियोगान्तरस्य प्रपन्नविषये निवारकं नास्ति। अत एषां धर्माणामनुष्ठानस्य धर्मत्यागस्य च प्रपत्त्यङ्गत्वाभावात् अशक्येषु नैराश्यमधिकारे निविशते; शक्यानां नित्यनैमित्तिकानामनुष्ठानमाज्ञानुपालनरूपं कैङ्कर्यमात्रं भवति॥

संकल्पमात्रमेवाङ्गं श्रुतमाचरणं पुनः।
अनङ्गमाज्ञया प्राप्तं न संकल्पनिबन्धनम्॥

(प्रभूतकैङ्कर्यप्रयोजकम्)

एवं सति अस्य(प्रपन्नस्य)नित्यनैमित्तिकेष्वनन्तर्भाव्याणां प्रभूतकैङ्कर्याणां प्रयोजकः क इति चेत्—इमानि अस्योपायान्तरकोटौ न प्रविशन्ति। अङ्गान्तरनिरपेक्षायाः प्रपत्तेः परिकरा अपि न भवन्ति। अकरणे ईश्वरः कुप्येदिति धिया न करोति। पृथगेवैषां किमपि पापक्षयस्वर्गपशुपुत्रादिफलान्तरमाशास्य च न करोति। लौकिका द्यूतादीनि यथा कुर्वन्ति तथा केवलं स्वेच्छया न प्रवर्तते। मुक्तवत् भगवदभिप्रायं प्रत्यक्षीकृत्य तत्प्रीणनार्थं प्रवर्तत इत्यपि न। तर्हि कथमिति चेत्—एषां कैङ्कर्याणां फलान्तरवत् भगवत्प्रीतेरपि फलत्वेन

शास्त्रसिद्धत्वात् तत्प्रीणने सत्त्वोत्तरस्वप्रकृतिस्वभावात् रुचेर्जननात् सुहृत्पुत्राद्युपलालनेष्विव सर्वविधबन्धोस्तस्य प्रीणने शास्त्रं करदीपं गृहीत्वा प्रवर्तते ।

(प्रपन्नस्यापि शास्त्रवश्यत्वम्)

अत्र केचित्—सर्वेश्वरसन्निधौ सर्वभरन्यासं कृतवतो विवेकिनः त्याज्योपादेयविभागनिर्णायकं स्वरूपज्ञानं किल । इत्थमस्य स्वरूपवश्यत्वातिरेकेण शास्त्रवश्यत्वं कथमित्याचक्षते । इदमप्यनुपपन्नम् । कथमिति चेत्—स्वरूपमेवंविधमिति शास्त्रसाह्येन निर्णीते सति, अस्य स्वरूपस्य अमुकपुरुषार्थस्तदुपायश्च त्याज्यौ, अमुकपुरुषार्थस्तदुपायश्चोपादेयाविति विभज्य विज्ञानार्थमामुक्तत्वसिद्धि शास्त्रं विना मार्गो नास्ति । स्वरूपे शेषत्वादिकमवलम्ब्य किञ्चिदौचित्यमात्रं ज्ञातुं शक्यमित्येतावदेव । न तु शेष्यभिमतकैङ्कर्यस्यायं प्रकारः । अस्य कैङ्कर्यस्योपाया इमे इति कांश्चित् स्वरूपज्ञानं नियततया न प्रदर्शयेत् । अतश्च शास्त्राण्यनादृत्य, निषिद्धद्रव्यैर्वा, विहितेष्वपि न्यायार्जितभिन्नैर्द्रव्यैर्वा स्वरुच्यनुरोधेन शास्त्रविरुद्धप्रकारैः कैङ्कर्यस्य करणे प्रवृत्तौ उपचारापचारयोर्भेदो न स्यात् । तदा स्वरुचिव्यतिरेकेणान्यस्य कस्यचिन्नियामकस्याभावात् मुमुक्षुभिस्त्यज्यमानानि सर्वाणि निषिद्धानि स्वरुचिमात्रेण कैङ्कर्यतयाऽनुष्ठेयानि प्रसज्येरन् । हविर्निवेदनेऽपि श्रीभाष्यकारः, "शास्त्राविरुद्धानि संभृत्य" इत्यनुजग्राह । अतः शास्त्रवश्येन सता स्वाधिकार्यतया शास्त्रविहितानि कैङ्कर्याण्येव कर्तुमुचितानि । "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्य-

व्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥"
इत्युपदेशः सर्वाधिकारिसाधारणो भवति ।

श्रीयामुनाचार्यैः श्रीगीतार्थसंग्रहे, "ज्ञानी तु परमैकान्ती परायत्तात्मजीवनः । तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः ॥ भगवद्ध्यान-योगोक्तिवन्दनस्तुतिकीर्तनैः । लब्धात्मा तद्गतप्राणमनोबुद्धीन्द्रियक्रियः ॥ निजकर्मादि भक्त्यन्तं कुर्यात् प्रीत्यैव कारितः । उपायतां परित्यज्य न्यस्येत् देवे तु तामभीः ॥" इति [विशेष]प्रतिपादनस्थले "प्रीत्यैव कारितः" इतीदमपि शास्त्रमनपेक्षितमित्येवम्परं न । किंतु इह शास्त्रमवलम्ब्यैव ज्ञातव्येषु कैङ्कर्येषु स्वामिसन्तोषजनकत्वनिबन्धनायाः शेषभूतस्य स्वस्य जायमानायाः प्रीतेः प्रेरकत्वातिशयस्य प्रतिपादने तत्परम् । एषां श्लोकानामुपासनाधिकारिविषये योजने क्रियमाणे उपासना-दीनां स्वादुतमत्वस्य, फलोपायभूतशरण्यप्रसादनरूपतया साक्षादुपायत्ववैधुर्येणावस्थितेः, अनेनोपासनेन प्रसन्नस्य सर्वेश्वरस्यैव फलं प्रति साक्षादुपायरूपेणावस्थितेश्च प्रतिपादने तात्पर्यं भवितुमर्हति । स्वतन्त्रप्रपत्तिनिष्ठविषये एषां श्लोकानां योजने, अनेन आज्ञानु-ज्ञाभिः क्रियमाणेषु कैङ्कर्येषु सर्वेषु भक्तियोगादिविधिव्यवस्थाभंगं विनैवा-नुष्ठेयेष्वपि स्वामिसन्तोषं विनाऽन्यस्य कस्यचिन्मोक्षादिप्रयोजनस्योपायत्वेन एतदननुष्ठानादस्यानुष्ठातुरनन्योपायतायाः अनन्यप्रयोजनतायाश्चाभंगस्य, अकिञ्चनमेतं प्रति ईश्वरस्यैवोपायान्तरस्थाने स्थित्वा फलप्रदातृत्वस्य च प्रतिपादने तात्पर्यम् ॥

(वर्णाश्रमधर्माणां पारमैकान्त्यविरुद्धत्वशङ्कापरिहारः)

उभयेष्वप्यधिकारिषु "प्रतिबुद्धा न सेवन्ते", "अनन्यदेवता-भक्ताः", "नान्यं देवं नमस्कुर्यात्" इत्याद्युक्तरीत्या परमैकान्तिषु सत्सु अत्र "निजकर्मादि भक्त्यन्तम्" इत्युक्तरीत्या **वर्णाश्रम-धर्माणामनुष्ठानार्थमेषां** प्रवृत्तौ **अग्नीन्द्रादिदेवतान्यामिश्रत्वात् परमैकान्तित्वं** किं न भ्रश्येदिति **वेदान्तव्युत्पत्तिशून्याश्चोद्यं** कुर्युः ।

अत्र "साक्षादप्यविरोधं जैमिनिः" इति **सूत्रोक्तरीत्या अग्रनयनादिव्युत्पत्तिवशादग्न्यादिशब्दानां सर्वेश्वरस्य साक्षा-द्वाचकत्वेन निर्वहणे** एषां **श्रीसहस्रनामस्थश्रीनामवदवस्थानादेषु** न **देवतान्तरस्पर्शः** । "देवान् ऋषीन् पितॄन् भगवदात्मकान् ध्यात्वा सन्तर्प्य" इति **नित्यप्रभृतिषु श्रीभाष्यकारैरुक्तरीत्या तत्तद्देवता-शरीरकं परमात्मानमनुसन्धाय** तत्तत्कर्मणामनुष्ठानस्य शास्त्रसिद्धत्वे "उपासात्रैविध्यात्" इत्युक्तरीत्या **प्रतर्दनविद्यादिषु विशेष्यदिव्या-त्मस्वरूपेण चेतनाचेतनविशिष्टतया** च **परमात्मन** उपासने क्रियमाणे **विशेषणीभूतचेतनाचेतनेषु** यथा आराध्यत्वं नास्ति तथाऽत्राप्ययं **विशेषणीभूतदेवर्षिपित्रादीन्** नाराधयति । "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च", "हव्यकव्यभुगेकस्त्वं पितृदेव-स्वरूपधृक्", "ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥" इत्युक्तरीत्या **सर्वान्तर्या-मिण** एव **प्रतिबुद्धेनानेनाराध्यत्वाद्** एवं विज्ञायानुतिष्ठतोऽस्य यथाशास्त्रमनुष्ठीयमानैः कैङ्कर्यैरुपायान्तरस्पर्शस्याप्रसङ्गवत् **कैङ्कर्यार्थ-**

द्रव्यार्जन-निवेदितोपयोगादिभिः प्रयोजनान्तरस्पर्शस्याप्रसङ्गवच आराध्यविशेषणतया विधिबलप्राप्तैश्चेतनाचेतनैर्देवतान्तरस्पर्श-दोषो न प्रसज्यते । "नारायणं परित्यज्य हृदिस्थं प्रभुमीश्वरम् । योऽन्य-मर्चयते देवं परबुद्ध्या स पापभाक् ॥", "यस्तु नारायणं देव सामान्येनाभिमन्यते । स याति नरकं घोरं यावच्चन्द्रदिवाकरम् ॥", "बुद्धरुद्रादिवसतिं श्मशानं शवमेव च । अटवीं राजधानीं च दूरतः परिवर्जयेत् ॥" इत्याद्युक्तरीत्या देवतान्तरेषु परत्वबुद्धेः, समत्वबुद्धेः नित्यनैमित्तिकासंबद्धदेवतान्तरस्थलेषु गमनस्य वा करणे एव परमैकान्तिनो दोषो भवति । नित्यनैमित्तिकेष्वाराध्यस्य सर्वान्तर्यामिणः शरीरत्वेनावतिष्ठमानासु आसु देवतासु परत्वबुद्धेः साम्यबुद्धेः स्वनिष्ठत्वबुद्धेः आराध्यत्वबुद्धेः फलप्रदत्वबुद्धेश्चाभावात् उपास्यविशेषणीभूतप्राणवैश्वानरत्रैलोक्यादिभिरस्य व्यभिचारा-प्रसङ्गवत् शास्त्रसिद्धैरग्नीन्द्रादिविशेषणैरप्यस्यैकान्त्यविरोधो न प्रसज्यते।

श्रीवङ्गिपुरपूर्णोऽपि प्रपन्नस्याहोरात्रकृत्यं भगवत्समाराधनं वक्तुं प्रवृत्य "गायत्रीजपपर्यन्तं मन्त्राचमनपूर्वकम् । सान्ध्यं कर्माखिलं साधु समाप्य च यथाविधि ॥ समिदाज्यादिभिर्द्रव्यैर्मन्त्रैरपि यथोदितैः । हुत्वाऽग्नीन् अग्निहोत्रादावुक्तं कालमपि क्षिपन् ॥" इति, "ततो माध्यंदिनं कर्म स्वोदितं श्रुतिचोदितम् । स्नानादिब्रह्मयज्ञान्तं कृत्वाऽखिलम-तन्द्रितः ॥" इति, "होमं पितृक्रियां पश्चादनुयागादिकं च यत्" इति चैभिः प्रकारैस्तत्तत्तन्मन्त्रपूर्वकान् वर्णाश्रमधर्मान् अनुजग्राह । श्रीभट्टार्याः श्रीकूरेशाश्च स्वस्वानुगृहीतनित्यग्रन्थयोः "श्रुतिस्मृत्युदितं

कर्म यावच्छक्ति परात्मनः । आराधनत्वेनाऽऽपाद्य सोर्ध्वपुण्ड्रश्च तर्पयेत् ॥" इत्यादिकमनुजगृहुः । महायतिरपि "श्रीपराशरभट्टार्यचरणौ संश्रयेमहि" इत्यादिना संप्रदायविशेषज्ञापनार्थं गुरुनमस्कारादीनि कृत्वा "भगवच्चरणाम्भोजपरिचर्याविधिक्रमम् । एकान्तिभिरनुष्ठेयं नित्यं समभिदध्महे ॥" इत्यारभ्य, "आपो हीत्यादिभिर्मन्त्रैर्वाचकैः परमात्मनः । संप्रोक्ष्य मन्त्राचमनं मन्त्रैस्तत्प्रतिपादकैः ॥ आदित्यान्तःस्थितस्यार्घ्यं वितीर्य परमात्मनः । प्रतिपादिकया विष्णोः सावित्र्या तं जपेत् हरिम् ॥ ध्यायन् जप्त्वोपतिष्ठेत तमेव पुरुषोत्तमम् । नारायणात्मकान् देवान् ऋषीन् संतर्पयेत् पितॄन् ॥" इत्यनुजग्राह । श्रीभाष्यकारसंप्रदायस्थैः कुलैः सर्वैरप्यद्य यावत् स्वसूत्रोक्तरीत्या तत्तद्देवतामन्त्रैर्विवाहोपनयनादीनि अनुष्ठीयमानानि पश्यामः। श्रीमहापूर्णप्रभृतयः परमाचार्या अपि स्वस्वसूत्ररीत्या यज्ञादीन् अन्वतिष्ठन्नित्येतत सर्वेषां प्रसिद्धम् ।

(पाञ्चरात्रनियतानामर्थानामन्याधिकारिकत्वम)

तस्मात् श्रीभाष्यकारस्य तच्छिष्यप्रशिष्याणाञ्चोपदेशानुष्ठानयोर्निष्ठावद्भिः आगमसिद्धान्तानुवर्तिसंहिताविशेषेषु प्रतिनियततयोक्तैर्मन्त्रविशेषैः क्रियाविशेषाणामनुष्ठानं न युक्तम् । अधिकाराद्यानुरूप्येण चतुर्विधपाञ्चरात्रस्य विभक्ततयाऽवस्थितिम्, स्ववचनविरोधरहितस्थले "अनुक्तमन्यतो" ग्राह्यम् इति न्यायस्य प्रवृत्तिप्रकारम्, चतुर्ष्वाश्रमेषु ब्रह्मविद्या मोक्षलाभश्चास्तीति शारीरकादिषु यथा समर्थितम् तथा आगमसिद्धान्तादिषु चतुर्षु साक्षात

मोक्षोपायो मोक्षप्राप्तिश्चास्तीत्येतच्च । श्रीपाञ्चरात्ररक्षायामुपापी-पदाम । एषु शास्त्रेषु व्यवस्थितविधानरीतिमुत्सृज्य स्वस्वाभिमतमन्त्रैः सर्वकर्मणामनुष्ठाने प्रायश्चित्तादीनि विस्तरेण प्रतिपादितानि ।

(विरुद्धपक्षाणां निराकरणम्)

अतः आमुक्तत्वसिद्धि स्वाधिकारानुगुणरूपेण शास्त्रोक्तं नियमं विना कैङ्कर्यं कर्तुमुपायो नास्ति । इत्थं प्रपन्नेनापि शास्त्रवश्येन सता शास्त्रोक्तकैङ्कर्यस्यैव कर्तव्यत्वात्, विधिनिषेधलङ्घनपक्षः, विहितनिषिद्धत्यागपक्षः, वर्णाश्रमधर्मा औपाधिकत्वात् जातस्वरूप-ज्ञानेन त्याज्या इति पक्षः, एते कार्या वा त्याज्या वेत्यविशेष इति पक्षः, एषां त्यागे प्रीतिहानिमन्तराऽन्यः कश्चित् प्रत्यवायो नास्तीति पक्षः, एषामननुष्ठाने लोकविरोधमात्रमेव प्रत्यवाय इति पक्षः, अन्येऽप्येवंप्रकाराः पक्षा सर्वेऽपि सम्यङ्न्यायानुगृहीतशास्त्रसंप्रदाय-विरुद्धत्वात् सत्त्वस्थानामनुपादेयाः ।

संन्यासाश्रमस्थानां प्राचीनानि कानिचित् निषिध्य नूतनानां केषांचिद्विधानवत् भागवतत्वं निमित्तीकृत्य कानिचिन्निषिध्य केषा-ञ्चिदपूर्वाणां विधानेऽपि "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु" इत्यादिभिरवश्यकर्तव्यतया विहितानि कर्माणि न त्याज्यानि । धर्मशा-स्त्रसूत्रभेदेष्विव भगवच्छास्त्रसंहिताभेदेषु इतिहासपुराणेषु चोच्य-मानाः सन्ध्योपासनभेदास्तत्तच्छास्त्रस्थैरनुष्ठेयाः । "दैवतान्यभि-गच्छेत्तु", "देवस्थानप्रणामनम्" इत्यादिरीत्या धर्मशास्त्रेतिहासादिषूक्ता आचाराश्च परमैकान्तिनः शास्त्रबलाद्भगवद्विषये नियताः ।

अतः कैश्चिदपि शास्त्रैर्न विरोधः । "तस्मादष्टाक्षरं मन्त्रं मद्भक्तैर्वीतकल्मषैः । सन्ध्याकालेषु जप्तव्यं सततं चात्मशुद्धये" इति श्रीवैष्णवधर्मशास्त्रेषूक्तम्, "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता" इति गद्योक्तम्, अन्यान्यप्येवंभूतानि सर्वाणि अवश्यकर्तव्यनित्यनैमित्तिकाविरोधेन तदास्कन्दितकालेतरकालेषु नियम्यानि । "श्रौतस्मार्ताविरुद्धेषु कालेषु जपमाचरेत् ॥" इति नारदादयोऽप्यूचुः । "हुत्वाऽग्नीन् अग्निहोत्रादावुक्तं कालमपि क्षिपन्" इति वङ्गिपुरपूर्णोऽप्यनुजग्राह । श्रीभाष्यकारा अन्तिमदशायामपि क्लेशेनोत्थाय सन्ध्याकाले जलाञ्जलिप्रक्षेपमकार्षुः । अतो वर्णाश्रमधर्माणामौपाधिकत्वबुद्ध्या त्यागः पूर्वानुष्ठानादिविरुद्धः । एवं त्यजने देहेन्द्रियाद्युपाधीन् विना मालाकरण-दीपारोपणादिविशेषकैङ्कर्याणामप्यनुष्ठातुमशक्यत्वात् तान्यपि सर्वाणि औपधिकत्वात् त्याज्यानि स्युः । तदनुष्ठानाशायां तद्योग्यतापादका आचारसंस्कारादयोऽपि त्यक्तुं न युज्यन्ते । अतः—

आहार-ग्रह-मन्त्रार्थ-जात्यादिनियमैर्युतः ।
कुर्याल्लक्ष्मीशकैङ्कर्यं शक्त्याऽनन्यप्रयोजनः ॥

मङ्गल्यसूत्रवस्त्रादीन् संरक्षति यथा वधूः ।
तथा प्रपन्नः शास्त्रीयपतिकैङ्कर्यपद्धतिम् ॥

यद्वन्मङ्गल्यसूत्रादेस्त्यागे संरक्षणेऽपि वा ।
रक्षेन्निरोधैर्भोगैर्वा पतिस्तद्वदिहापि नः ॥

अवज्ञार्थमनर्थाय भक्तजन्मादिचिन्तनम् ।
शास्त्रव्यवस्थामात्रार्थं न तु तद् दुष्यति क्वचित् ॥
अत एव हि शास्त्रेषु तत्तज्जात्यैव दर्शिताः ।
धर्मव्याध-तुलाधार-शबरी-विदुरादयः ॥
स्वजात्यनुगुणैर्वैषां वृत्तिरप्यैतिहासिकी ।
विशेषविधिसिद्धं तु तद्बलात् तत्र युज्यते ॥
देशकालाधिकार्यादिविशेषेषु व्यवस्थिताः ।
न धर्माः प्राप्तिमर्हन्ति देशकालान्तरादिषु ॥
केचित् तत्तदुपाख्यानतात्पर्यग्रहणाक्षमाः ।
कलिकोलाहलक्रीडां वर्धयन्ति रमापतेः ॥
"मातृभिः पितृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥
जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥"
एवमादिषु पूजोक्तिर्यथौचित्यान्नियम्यते ।
भक्तम्लेच्छादिपूजोक्तिरेवमेव नियम्यताम् ॥

एते नियमाः सर्वेऽपि संप्रतिपन्नशिष्टानुष्ठानपरम्परयाऽपि सिद्धाः । अतः स्ववर्णाश्रमादिव्यवस्थितनियमैः सह भगवत्कैङ्कर्य-करणं न परमैकान्तित्वविरुद्धम् ॥

साक्षाल्लक्ष्मीपतावेव कृतं कैङ्कर्यमञ्जसा ।
सारकल्कविभागेन द्विधा सद्भिरुदीर्यते ॥
कृतकृत्यस्य कैङ्कर्यं यत् अनन्यप्रयोजनम् ।
गुर्वादिरक्षणार्थं वा तत् सारं संप्रचक्षते ॥
दम्भार्थं परपीडार्थं तन्निरोधार्थमेव वा ।
प्रयोजनान्तरार्थं वा कैङ्कर्यं कल्क इष्यते ॥

परमैकान्तिभिन्नैः क्रियमाणं कैङ्कर्यं सर्वेश्वरः पादाभ्यां स्वीकरोतीत्येतत्, परमैकान्तिभिः क्रियमाणं कैङ्कर्यं शिरसा प्रतिगृह्णातीत्येतच्च, "तत् सर्वं देवदेवस्य चरणावुपतिष्ठते" इति, "याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः । ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्" इति च श्रीवेदव्यासभगवान् अनुजग्राह ।

(त्यागविधित्यागानुवादपक्षयोर्निगमनम्)

इत्थमनेन भगवदाज्ञयाऽनुष्ठीयमानानां नित्यनैमित्तिककैङ्कर्याणां भगवदनुज्ञया एतत्प्रीतिमात्रप्रयोजनोद्देशेनानुष्ठीयमानानामधिकानां कैङ्कर्याणां च अनया प्रपत्त्या सह संबन्धराहित्येनावस्थितिः, "सर्वधर्मान् परित्यज्य" इति विधानेन सिद्धा ॥

अतः शक्यानि सर्वाणि न प्रपत्त्यर्थमाचरेत् ।
अशक्येषु च सामर्थ्यं न तदर्थं समार्जयेत् ॥

अस्यां योजनायाम् अधिकारभूतमाकिञ्चन्यम्, "मा शुचः" इति समाश्वासनवाक्ये सूचितम् । अनुवादपक्षे स्वाशक्त्या त्यक्तेभ्यो व्यतिरिक्तानि शक्यत्वात् क्रियमाणानि आज्ञानुपालनादीनि प्रपत्त्या

न संबध्यन्ते इत्येतत् एकशब्दे विवक्षितं भवितुमर्हति । अस्मिन् पक्षे "मा शुचः" इति वाक्यं "सर्वधर्मान् परित्यज्य" इत्युक्तमधिकारं व्यक्तं कुर्वत् सत् अग्रिमाणि निर्भरत्वादीनि पुरस्कृत्योत्तरकालेऽपेक्षितान् स्थितिप्रकारान् सर्वान् उपलक्षयति ।

(विधिपक्षे नानागत्यन्तरप्रदर्शनम्)

त्यागविधिपक्षस्य प्रमाणविरोधप्रसङ्गरहिता अन्या अपि काश्चिद्गतयो भवन्ति—

आत्मशक्यवृथायासनिवारणमिहापि वा ।
लज्जापुरस्सरत्यागवादोऽप्यत्र नियम्यताम् ॥
स्व(सु)दुष्करेषु धर्मेषु कुशकाशावलम्बतः ।
आशालेशानुवृत्तिर्वा त्यागोक्त्या विनिवार्यते ॥
अविशिष्टफलत्वेन विकल्पो यश्च सूत्रितः ।
तन्मुखेनापि वाऽत्रेष्टं ब्रह्मास्त्रन्यायसूचनम् ॥

अशक्येषु प्रवृत्तं प्रति त्यजेत्युक्तिः, स्वदुष्करेषु स्वत एव निवृत्तेषु अभिनिवेशवन्तं प्रति अयं नापेक्षित इत्युक्तिः, विकल्पितेषूपायान्तरेषु कस्यचिदत्र मेलने ब्रह्मास्त्रन्यायेन विरोधः स्यादिति निवर्तनं चात्र विधिप्रकाराः ॥

(प्रथमपादार्थसंग्रहः)

अतोऽशक्ताधिकारत्वमाकिञ्चन्यपुरस्क्रिया ।
अनङ्गभावो धर्माणामशक्यारम्भवारणम् ॥

तत्प्रत्याशाप्रशमनं ब्रह्मास्त्रन्यायसूचनम् ।
सर्वधर्मपरित्यागशब्दार्थाः (६) साधुसम्मताः ॥
देवतान्तरधर्मादित्यागोक्तिरविरोधिनी ।
उपासकेऽपि तुल्यत्वादिह सा न विशेषिका ॥

"उपायापायसंत्यागी" इत्यादिषूक्तः उपायत्यागोऽपि एभिः प्रकारैर्निर्वाह्यः ।

(प्रथमपादार्थसंग्राहिका गाथा)

[1]उद्योगेऽपि अशक्ये नोद्योक्तव्यम्; पूर्वं तस्मिन् आशायास्त्यागः श्रेष्ठः; नापेक्षेत शरणमार्गोऽन्यं कमपि सहायम्; (सहायान्तर) चिकीर्षायाम्, (अयं) ब्रह्मास्त्रवल्लज्जितो वर्तेत; दीर्घकालसाध्ये पूर्णज्ञानानामुचिते मार्गेऽन्वयरहितस्य तव केवलतां (आकिञ्चन्यं)सहायत्वेन स्वीकृत्य मम पादस्याऽऽश्रयणे तवापराधान् सर्वान् क्षमिष्ये इत्युक्तवतः पुण्यस्य गुणान् सर्वान् वर्णयेम ॥

---

मूण्डालुमरियदनिल् मुयलवेण्डा
मुन्नमदिल् आशैतनै विडुहै तिण्मै
वेण्डादु शरणनेरि वेरोर्कूट्टु

वेण्डिलयनत्तिरंपोल् वेल्हि निर्कुम्
नीण्डाहु निरैमतियोर् नेरियिर्कूडा
निन् तनिमै तुणैयाक एन्नन् पादम्
पूण्डालुन् पिड़हलेल्लां पोरुप्पेनेन्न
पुण्णियनार् पुगड़नैत्तुं पुगड़ुवोमे ॥

("माम्" "अहम्" पदार्थयोर्निरूपणम्)

अत्र "माम्" "अहम्" इति पदयोः क्रमेणावताररहस्ये पुरुषोत्तमत्वप्रतिपादनप्रकरणे चोक्तरीत्या सौलभ्ये स्वातन्त्र्ये च प्राधान्येन तात्पर्यम् ।

(1) अवतारस्य सत्यत्वमजहत्स्वस्वभावता (2) ।
(3) शुद्धसत्त्वमयत्वं च स्वेच्छामात्रनिदानता (4) ॥
(5) धर्मग्लानौ समुदयः साधुसंरक्षणार्थता (6) ।
इति जन्मरहस्यं यो वेत्ति नास्य पुनर्भवः ॥

इदमवताररहस्यज्ञानं सद्वारकप्रपत्तिनिष्ठस्योपायपूरकम् । स्वतन्त्रप्रपत्तिनिष्ठं प्रति स्वतन्त्रसौलभ्यस्य प्रदर्शकम् । एतत्प्रकरणद्वयसिद्धे सौलभ्यस्वातन्त्र्ये परस्परसहायभूते ।

स्वतन्त्रस्यापि नैव स्यादाश्रयो दुर्लभस्य तु ।
अस्वतन्त्रात् फलं न स्यात् सुलभादाश्रितादपि ॥
अस्वतन्त्रे न कैङ्कर्यं सिध्येत् स्वैरप्रसङ्गतः ।
दुर्लभे साध्यमप्येतन्न हृद्यं लोकनीतितः ॥

अतः केवलसुलभतृणादिवैधर्म्येण श्लाघ्यः, दुर्लभमेरुवैधर्म्येण सुलभः परश्च शरण्यः आश्रयणीयः प्राप्यश्च भवति । अनयोरुभयोः पदयोः सर्वरक्षकस्य सर्वशेषिणो रक्षणावसरप्रतीक्षणदशा प्रतीयते । इत्थमवसरप्रतीक्षस्येश्वरस्य "रक्षापेक्षां प्रतीक्षते" इत्युक्तरीत्या, कदाऽस्मान् इमे अपेक्षेरन् इत्यभिप्रायेणाभिमुख्येनावस्थितिः मामिति

पदेन सूचिता । कदा वयमिमान् शोधितमलाभरणवदङ्गीकुर्यामे-त्यभिप्रायेण सत्वरस्य स्वप्रयोजनभावेन फलदाने औत्सुक्येन स्थितिः अहमिति पदेन प्रदर्श्यते ।

इत्थमकिञ्चनस्याधिकारिणो यथाविधि रक्षापेक्षापूर्वकभर-न्यासातिरेकेणान्यत किमप्यनपेक्षमाणं सिद्धोपायं "मामेकम्" इति प्रदर्श्य तद्वशीकरणार्थं साध्योपायम्, शरणं व्रजेति विधिना दर्शयति । इत्थं विधीयमानायाः प्रपत्तिरूपविद्यायाः शरण्यप्रसादनत्वेन चोदितत्वनि-बन्धनमुपायत्वं भक्तियोगतुल्यम् । अनया प्रसन्न ईश्वरो मोक्षस्य साक्षादुपायः। अस्या विद्याया विशिष्य वेद्याकारो निरपेक्षोपायत्वम् । एतदुपयुक्ता आकाराः सर्वेऽपि "मामेकम्" इति पदयोर्विवक्षिताः ॥

("माम्" इति पदे विवक्षिता आकाराः)

"एष नारायणः श्रीमान्" इत्यादिषु निर्दिष्टप्रकारस्य शरण्यस्य प्रतिपादके "माम्" इति पदे श्रीमन्त्रे द्वये च प्रकाशितानि सर्वरक्षकत्वसर्वशेषित्वश्रीपतित्वनारायणत्वानि एतदाकृष्टानि परत्वसौलभ्योपयुक्ततया प्राप्तानि सर्वज्ञत्वसर्वशक्तित्वादीनि परम-कारुणिकत्वसौशील्यवात्सल्यादीनि, द्वये द्विवचनान्तपदेन प्रतीतः शुभाश्रयः परत्वसौलभ्यव्यञ्जकः पार्थसारथेर्दिव्यमङ्गलविग्रह-विशेषश्च प्रदर्श्यन्ते । अत्र [1] "अनुपमगुण" इत्यादिषूक्तं वात्सल्य-स्वामित्वसौशील्यसौलभ्यरूपैतद्गुणचतुष्टयम् आदावस्थानस्ने-हादिभिर्व्यामुह्यतोऽर्जुनस्यानादराकरणात्, "मत्तः परतरं नान्यत्" इति

1 निकरिल्पुकड़ाय्—तिरुवाय्-6-10-10

स्वयमेवोपदेशनात्, "हे कृष्ण हे यादव", "रथं स्थापय मेऽच्युत" इति यथोच्येत तथाऽवस्थाय सारथ्यादीनां करणात्, द्रष्टव्यमिति प्रार्थिते सति **स्वैश्वरूप्यं** प्रदर्श्य, पुनरपि प्राचीनः सौम्यविग्रह एव प्रदर्शनीयः इति प्रार्थिते सति तदैव **सारथिरूपेणाविर्भूयावस्थानाच्च** व्यञ्जितम्।

(रक्षणोपयुक्तप्रधानगुणनिरूपणम्)

**उक्तेषु शरण्यगुणेषु आश्रितसंरक्षणस्य प्रधानतमाः**, "सर्वज्ञोऽपि च विश्वेशः सदा कारुणिकोऽपि सन्" इति **भगवच्छास्त्रे**, "त्वज्ज्ञानशक्तिकरुणासु सतीषु" इत्य**भियुक्तवाक्ये** च संगृहीताः। एषु त्रिष्वपि **ज्ञानशक्ती निग्रहानुग्रहसाधारणे। स्वामित्वमपि लीलोपकरणत्वापादनस्य भोगोपकरणत्वापादनस्य** च साधारणहेतुत्वाद् ज्ञानशक्त्योः **रक्षणैकान्ततया** नियमने असमर्थम्। **कारुण्यम्** एतदवान्तरभेदाः **सौशील्यवात्सल्यादयश्चानुग्रहैकान्तानि**। एवमस्य कारुण्यस्य विशेषं दृष्टवन्तः पूर्वे—, "सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च। सामर्थ्यवान्, कृपामात्रमनोवृत्तिः प्रसीद मे॥" इति, [2]"त्वत्कृपामेव विश्वसितवान् आसम्" इति, [3]"नाध्यवस्येयमितः परं त्वत्कृपाव्यतिरिक्तं मम" इति [4]"त्वत्कृपामेव प्रतीक्षे दासोऽहम्" इति, [5]"श्रीमहालक्ष्मीं कृत्वाऽपि मम हृदयं वासस्थानत्वेन स्वीकृतवतो महादयावतः" इति,

---

2 निन्नरुले पुरिन्दिरुन्देन्—पेरियाड्वार् ति 5-4-1

3 तुणियेनिनि निन्नरुलल्लदेनक्कु—पेरियति-11-8-8

4 उनदरुले पार्पनडियेन्—पेरुमाळ् ति-5-4

5 तिरुमामगळैप्पेर्टुमेन्नॆञ्जक्कोयिल्कोण्ड पेररुलालन्-पेरियति-9-5

[6]"त्वच्छ्रीकृपामन्तरा रक्षणं दुर्लभम्", [7]"तव श्रीकृपां पङ्कजाङ्गनायाः श्रीकृपाम्" इति, [8]"हा हेति कृपां कृत्वा" इति, "कृपया केवलमात्मसात्कुरु" इति, "करीश तेषामपि तावकी दया तथात्वकृत् सैव तु मे बलं मतम्" इति चैभिः प्रकारैरिमं कृपागुणं रक्षकत्वेनानुसन्धाय, संबन्धं गुणान्तराणि च कारुण्यस्याऽऽज्ञाकारीणि कृत्वा स्वयं कारुण्यैकान्तिनः संजाताः ॥ श्रीजानक्यपि गुणान्तरेषु सत्सु "वधार्हमपि काकुत्स्थः कृपया पर्यपालयत्" इत्यनुजग्राह । गद्ये च "मदीययैव दयया" इत्युक्त्याऽस्या कृपायाः प्राधान्यं विवक्षितम् । इत्थमाश्रितरक्षणस्य कृते प्रधानैः परिकरैश्च भवद्भिः सर्वाकारैर्विशिष्टः स्वमभिमुखस्थितो "माम्" इति निर्दिदेश ॥

(एकशब्दार्थनिरूपणम्)

(1) "माम्" इति पदे एकवचनेनैकत्वे प्रतीते सति पुनरपि उपात्त एकशब्दः [9]"स्वात्मदः कल्पकः" इत्युक्तरीत्या प्राप्यस्यैव प्रापकत्वसत्त्वादुपायफलैक्यमाचष्टे इति [च] योजयन्ति । अस्य "मामेकमेव शरणम्" इति समानप्रकरणवाक्यमप्यनुगुणम् । एवकारे सत्येव एकशब्दे सति अस्य अवधारणव्यतिरिक्तार्थस्याभ्युपगम उचितः किल ।

---

6 उन् तिरुवरुळालन्रिक्काप्परिदु – तिरुविरुत्तम्-62

7 निन् तिरुवरुळुं पङ्कयत्ताळ् तिरुवरुळुं—तिरुवाय्मोऴि-9-2-1

8 आवावेन्ररुळ् शेय्दु—तिरुवाय्मोऴि-5-1-9

9 तन्नैत्तन्दकऱ्कम्—तिरुवाय्-2-7-11

(2) एवमनुक्त्वा, "मुख्यान्यकेवलेष्वेकम्" इत्युक्तरीत्या बह्वर्थ एकशब्दः केवलपर्यायः सन् "मामेव ये प्रपद्यन्ते", "तमेव शरणं गच्छ" इत्याद्युक्तरीत्याऽवधारणार्थः शरण्यगुणपौष्कल्यात् स्वस्वातन्त्र्यादीनि निवर्तयतीति चाचक्षते। कथमिति चेत्— स्वरक्षाया उपयुक्तानां वशीकरणानां शास्त्रनियुक्तेन स्वेनानुष्ठानात् रक्षायां स्वस्यापि कर्तृत्वे प्रतीते सिद्धोपायभूतेन शरण्येन सह समतया स्वस्मिन्नपि उपायत्वस्याभिमाने प्रसज्यमाने, इत्थं प्रसक्तमुपायद्वित्वं निवर्तयत्येकशब्दः। तस्य निवृत्तिः कथमिति चेत्— "कर्ता शास्त्रार्थवत्त्वात्" इत्युक्तरीत्या जीवस्य कर्तृत्वे प्रामाणिके सत्यपि इदं पराधीनमल्पविषयं प्रतिहतियोग्यं च वर्तते। अत एतत्कृतोपायानुष्ठानस्यापि, "वरद तव खलु प्रसादात् ऋते शरणमिति वचोऽपि मे नोदियात्" इत्युक्तरीत्या तत्कटाक्षात् निदानादुत्पद्यमानत्वात्, तत्प्रेरितस्य, तस्मिन्नसहकुर्वाणे प्रसारणाकुञ्चनयोरप्यसमर्थस्य, तत्प्रत्तकरणकलेबरैस्तत्प्रदर्शितमुपायं तस्मिन् साह्यं कुर्वति सत्यनुष्ठाय तत्प्रदास्यमानफलार्थं चातकवत् तदुन्मुखतयाऽवतिष्ठमानस्यास्य स्वाधीनसर्वविषयाप्रतिहतकर्तृत्वशालिना तेन सह तुल्यतया द्वितीयसिद्धोपायत्वेन गणनं विवेकिनो मुमुक्षोर्नोचितमित्येकशब्देनोक्तं भवति।

(3) उक्तन्यायेन साध्योपायस्य प्रपत्तेरपि सिद्धोपायेन सह एकपङ्क्तिस्थत्वेन गणनीयत्वाभावार्थमेकशब्द इत्यप्याचक्षते। तत् कथमिति चेत्—इयं प्रपत्तिर्भक्तियोगवत् प्रसादनत्वेन विहिता सत्यपि सहजकारुण्यादिविशिष्टसर्वेश्वरगतकालुष्यशमनमात्रार्था यथा स्यात्

साक्षात्फलस्य सहजसामर्थ्यकारुण्यविशिष्टस्यास्य संकल्प एव कारणं यथा स्यात्, तथा तस्मिन् स्वयमत्यन्ताकिञ्चनस्य प्रपन्नस्य भरस्वीकारेण भक्तियोगादिरूपगुरुतरोपायानां स्थाने स्थित्वा एतदानुकूल्यसंकल्पादियुक्तप्रपत्तिमात्रव्याजसापेक्षे, अन्यस्य कस्याप्यनपेक्षणात् निरपेक्षोपायत्वमेवास्या न्यासविद्याया वेद्याकारत्वेनावलम्ब्य "त्वमेवोपायभूतो मे भव" इत्यपेक्षणीये सति, "[1]मदीयज्ञानस्यान्तर्निवेशितवानहम्; तदपि तस्य सरसकृपैव" इति, [2]"अनुमान्य मां त्वच्चरणयुगलस्याधस्तात् स्थापयन् स्वामिन्" इति चोक्तरीत्योपायभूते तस्मिन् कारयति सति क्रियमाणस्य व्याजमात्रस्य तत्समोपायत्वेन गणनं नोचितमित्येकशब्दस्य तात्पर्यम्।

(प्रपत्तौ सम्बन्धज्ञानमात्रत्वादिवादानां निराकरणम्)

इत्थं सिद्धोपायविषये साध्योपायस्य व्याजमात्ररूपेण अप्रधानतया चावस्थितिमभिप्रेत्य, "सम्बन्धज्ञानमात्रम्" "सिद्धोपायप्रतिपत्तिमात्रम्" "अनिवारणमात्रम्" "अनुमतिमात्रम्" "अचिद्व्यावृत्तिमात्रम्" "चैतन्यकृत्यम्" "चित्तसमाधानम्" "अधिकारिविशेषणम्" इत्येभिः प्रकारैरतिवादं कृतवन्तः। इमा अन्यपरोक्तीराश्रित्य एत एव [प्रपत्तिशब्दस्य] अर्थ इति निर्णयो न युक्तः। एते सर्वेऽपि "शरणं व्रज" इति विधेर्विरुद्धाः। अतिप्रसङ्गादिदोषा अपि भवन्ति।

---

1 एन्नुणर्विनुळ्ळे इरुत्तिनेन् अदुवुमवनदिन्नरुळे तिरुवाय् 8-8-3
2 ईशॅविट्टन्नै उन् ताळिणैक्कीळ् इरुत्तुमम्माने ,, 8-8-9

कथमिति चेत्—संबन्धज्ञानमात्रमिति वोच्यताम्, सिद्धोपाय-प्रतिपत्तिमात्रमिति वोच्यताम्, अस्य **वाक्यमात्रजन्यत्वे विधिविषयत्वं** न स्यात्। **अविधेयज्ञानेन मोक्ष** इति वदतामुपासनादिविधिविरोधो भाष्यादिसिद्धः। **तत्त्वज्ञान**वतः पश्चात् कर्तव्यज्ञानान्तररूपत्वे, **प्रपत्तिविधिलक्षणानुष्ठानवाक्यो**क्तरीत्याऽस्याः **स्वरूप**मङ्गीकार्यम्॥ **सिद्धोपायस्वीकार** इति वाक्यस्यापि **सिद्धोपायज्ञानपूर्वकं** स स्वस्य कार्यकरो यथा स्यात् तथा क्रियमाणे **विधिप्राप्तप्रार्थनापूर्वकभरन्यास-रूपाधिकारिकृत्ये** किल **तात्पर्यम्**॥ **अनिवारण**मित्यस्य **निवारणा-**भावमात्रत्वे, रक्षकमीश्वरम् अयं पूर्वं **प्रबलस्सन्** वारितवांश्चेत्, **ईश्वरस्ये-श्वरत्वं संकुचितं** स्यात्। **अपराधेन निग्रह**मुत्पाद्य निवारितवांश्चेत्, तर्ह्येतेन क्रियमाणया प्रपत्त्या **प्रसादनरूप**यैव भाव्यम्। **स्वरक्षणार्थ-व्यापारेण** निवारितवानिति चेत्—तर्हि **निर्व्यापारसुषुप्तिप्रलयाद्य-वस्थासु, व्यापरणयोग्यत्वा**पादक**जाग्रद्दशायाम**निवारणेनास्य स्थिति-काले **चेश्वरेण मोक्षप्रदानं कर्तव्यं** प्रसज्येत॥ **अनुमतिमात्र**मित्युक्तौ तत् उपासकस्यापि **तुल्यम्**॥ **अचिद्व्यावृत्तिमात्रस्य प्रतिकूलता-दशाया**मपि संभवादेतावन्मात्रं **रक्षणीयतायां** प्रयोजकं भवितुं नार्हति॥ **चैतन्यकृत्य**मिति वादे **उपासनादीनाम्**, अन्यासां **चेतनवृत्तीनां** च सर्वासां **चैतन्यकृत्यत्वा**दस्याः कश्चिद्विशेषो नोक्तः स्यात्। **चेतनस्य** स्वयमेव जायमानमिति विवक्षणे **उपदेशादयो**ऽनपेक्ष्याः स्युः॥ **फलानु-पयुक्तचित्तसमाधानमात्र**मिति वादे स्वस्वरुच्यनुरूपं प्रतिपुरुषं भिद्येत। "व्रज" इति **विधेयतया फलतत्कामनादिरूप**तामन्तरा च विद्यमा-

नमिदमधिकारिविशेषणमिति वक्तुं न शक्यम् । कर्तव्यत्वेन विधीयमानायां प्रपत्तावेवैवं यस्यकस्यचित् लोपप्रकारस्य गवेषणे **उपासनादीनामप्येवं** लोपापादनं सुकरम् । तदा एभिर्मुखैः प्रपत्तेरुपासनादिभ्यो व्यावृत्तेरभिधित्सा न निरुह्येत । **स्वविषयस्वीकारविशिष्टस्य** सतः **फलप्रद**तयाऽवस्थितत्वेऽपि अयं **सिद्धोपायः स्वीकारेणापि निरपेक्ष** इति बुद्धिः कर्तव्येति चेत्—इदं दृष्टिविधिवत् आरोपितं वा स्ववचनविरुद्धं वा भवति । अतः **ईश्वरः प्रसादनीयः** सन् **प्रधानसिद्धोपायः**— **भक्तिप्रपत्ती द्वे** अपि **प्रसादनभूतौ** अप्रधानसाध्योपायाविति अनयोर्द्वयोर्मध्ये कस्यांचिदेकस्यां यथाधिकारं स्थितिर्युज्यते ॥

(एकशब्दस्यावशिष्टानि अर्थान्तराणि)

(4) **अपेक्षितफलार्थमुपायत्वेन विहितानि साधनान्तराणि** यथा न द्वारीकार्याणि स्युः, तथा **प्रपत्तेरनन्तरं स्वीकृतभरस्य शरण्यस्यै**काकित्वेनावस्थितिप्रकारमभिप्रैति एकशब्द इत्याचक्षते । तत् कथमिति चेत्—प्रपत्तिं कृत्वा तदनन्तरमु**पासनादीनामपि** अनुष्ठाने कृते सति **फलोपायो** भवन् **शरण्यः अकिञ्चनस्य विलम्बाक्षमस्यास्य** विषये **प्रपत्तेः** स्वस्य च मध्येऽवस्थितं कमपि भारमनारोपयन्नेव अस्य भारं स्वगुणेष्वारोप्य, "शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तत् वैष्णवं पदम् ॥" इति, "[1]गतिं मम त्वच्चरणावेव शरणं दत्तवानसि" इति चोक्तरीत्या

1 आरेनक्कु निन् पादमे शरणाकत्तन्दोड्न्दाय्–तिरुवाय्-5-7-10

गुणविशिष्टतया स्वयमेव निरपेक्षफलप्रदरूपेणावतिष्ठते इति स्थिति-प्रकारमनुसंदधानस्सन् शरणं व्रजेति अत्रोक्तं भवति ।

(5) इत्थमेव परिपूर्णं स्वमुद्दिश्य प्रपदने क्रियमाणे आनुकूल्य-संकल्पाद्यतिरेकेणान्यं कमपि परिकरमत्र विद्यान्तरेष्विवान्तर्भाव्य सोऽपि प्रसादनरूपेणोपायकोटौ निविशते इति बुद्धेर्निवर्तनार्थमेकशब्दः (प्रयुक्तः) इत्यप्याचक्षते । 'आज्ञानुज्ञाभिरनुष्ठीयमानानि कर्तव्यान्तराणि सर्वाणि न प्रपत्तेः सहायभूतानि । अनया प्रपत्त्या वशीकृतः फलं प्रदास्यन् अहमेक एवास्य क्षणिकोपायस्य प्रतिभूः स्थितोऽस्मि । एतत्प्रपत्तिफलोद्देशेनान्यत् किमपि अपेक्षितम् अवश्यकर्तव्यं नास्ति । तत् अपेक्षितकर्तव्यं सहायत्वेन स्वीकृत्याहं त्वां रक्षिष्यामीति न' इति तात्पर्यम् । एतेन आनुकूल्यसंकल्पादिविशिष्टप्रपत्तिव्यतिरेकेण प्रपत्तिपरिकर इति नाम कृत्वा स्वेन सहान्यत् किमपि सहकारिकारणं न योजनीयमित्युक्तं भवति । "येन केनापि प्रकारेण द्वयवक्ता त्वम्" इति, "प्रपत्तिवाचैव निरीक्षितं वृणे" इति चोक्तरीत्या पूर्णप्रपत्त्यर्थमपेक्षितस्य ज्ञानस्याभावेऽपि यथाकथंचिदनुष्ठाने कृतेऽपि कार्यकरणशीलस्यास्योपायस्य, अन्यस्य यस्य कस्यचित् परिकरस्यान्वेषणप्रसङ्गो नास्ति किल ।

"ततः सागरवेलायां दर्भान् आस्तीर्य राघवः। अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥ बाहुं भुजगभोगाभमुपधायारिसूदनः ।" इति भगवत्कृतसमुद्रशरणागतिस्थले, "स राजा परमापन्नो देवश्रेष्ठमगात् तदा । शरणं सर्वभूतेशं भक्त्या नारायणं हरिम् ॥ समाहितो निराहारः

षड्रात्रेण महायशाः । ददर्शादर्शने राजा देवं नारायणं प्रभुम् ॥" इति **सम्भव्याधोपाख्याने ब्रह्मदत्तचरिते** चोक्ताः **प्रकाराः** सर्वेऽपि **न प्रपत्तेरङ्गानि** । अनयोर्द्वयोः स्थलयोः **सपरिकरप्रतिशयनादिप्रधानत्वात्** तत्र ते **नियमा** वक्तुं युक्ताः । एवं **सुकृतप्रणामे**ऽपि द्रष्टव्यम् ॥

अत्र **प्रपत्त्यध्यायाद्युक्तानुकूल्यसंकल्पादिव्यतिरेकेणान्ये** केऽपि नियमा नापेक्षिताः । **आकिञ्चन्यैकधनानां द्रौपदी-दमयन्ती-राक्षसी-विभीषण-क्षत्रबन्धु - मुचुकुन्द-गजेन्द्र - पाण्डव-देव-सुमुख-त्रिशङ्कु-शुनश्शेफ-किरात - काक-कपो**तादीनां **शरणागत्यवसरे** तादात्त्विका**नुकूल्यादिव्य**तिरेकेणान्यां कामपि **इतिकर्तव्यताम्** उच्यमानां न पश्यामः । **क्षणकालसाध्येन निरपेक्षेण प्रपत्तिमात्रेण** झटिति तेषां **शरणागतानां** तत्तदपे**क्षितसिद्धिं** चाद्राक्ष्म। इत्थं **मोक्षार्थप्रपत्ता**वप्येतदुद्दिष्टकाले **फलसिद्धेर्न** क्षतिः ।

इदं "मा शुचः" इति **वाक्यस्यापि** तात्पर्यम् । "परित्यज्य" इत्यत्र **परिकरान्तरनैरपेक्ष्ये**ऽर्थत्वेनोक्ते सति **एकशब्दे** इयं **योजना दृढीकरणार्था** भवितुमर्हति । अस्यार्थान्तरं **विवक्षित**मिति वा । एकशब्दस्येतदर्थकत्वे सति, "परित्यज्य" इत्येतस्य तत्रोक्तानि **अर्थान्तराणि** ग्राह्याणि ।

**सपरिकरप्रपत्तेः उपासनादीनाम**ङ्गिनामेतत्प**रिकर**भूतानां **धर्मान्तराणां** चान्वयस्य निवर्तनपरयोर्व्याख्ययोः, **अनेनैकशब्देन** शरण्यस्य विशेषणं कथमिति चेत्—अकिंचनविषये **एषां प्रसादन**-स्वरूपेण शरण्येन सह संबन्धस्याभावं प्रदर्शयितुं "मामेकम्" इत्युच्यते ।

(6) "सर्वधर्मान्" इत्यत्र अधस्तात् सर्वशब्दम्, "सर्वपापेभ्यः" इत्यग्रिमं सर्वशब्दं च दृष्ट्वा अयमेकशब्दः सर्वशब्दप्रतिसंबन्धित्वेनाऽवतिष्ठते इत्याचक्षते । तदा—

**सुदुष्करेण शोचेद्यो येनयेनेष्टहेतुना ।**
**सस तस्याहमेवेति चरमश्लोकसंग्रहः ॥**

अनेन किमुक्तं भवतीति चेत्—"यत् येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत् सांख्येन योगेन न च भक्तितः ॥ प्राप्यते परमं धाम यतो नावर्तते यतिः । तेनतेनाप्यते तत्तन्न्यासेनैव महामुने । परमात्मा च तेनैव साध्यते पुरुषोत्तमः ॥" इत्युक्तरीत्या स्वाभिमतानि यानि कानिचित् फलान्युद्दिश्य तदनुगुणतया पृथक् पृथक् शास्त्रैर्विहितेषूपायेषु ज्ञानाभावेन वा, ज्ञाने सति शक्त्यभावेन वा, एतयोरुभयोः सतोर्विलम्बाक्षमत्वेन वा शोचन्तमधिकारिणं प्रति, तेषूपायेषु कस्मिंश्चिदपि त्वया नैवाटितव्यम्, तैः तैः पृथक् पृथक् देयानां फलानां सर्वेषां (प्रदाने) प्रपत्तिवशीकृतोऽहमेक एव पर्याप्तः' इत्युक्तं भवति । 'बहुभिरौषधैर्दातुं शक्यानि आरोग्याणि सर्वाणीदं सिद्धौषधमेकमेव यतो दातुं समर्थम्, अतस्त्वया औषधान्तरार्थमयतमानेन सता अस्यौषधस्यैकस्योपजीवनमेव पर्याप्तम्, इदं तव तैरौषधैर्निवर्तनीयान् व्याधीन् सर्वान् निवर्तयेत्, त्वया परस्तात् सर्वेऽपि भोगाः स्वयमेव भोक्तुं शक्याः । त्वया, 'आरोग्यभोगाभ्यां हीये' इति नोद्विग्नेन भाव्यम्' इति यथोच्येत, तथाऽयं वर्तते **चरमश्लोकः।**

**सर्वशब्दप्रतिसंबन्धिन एकशब्दस्य सिद्धोपायप्राधान्यात्** शरण्यविशेषणरूपेणावस्थानेऽपि, "न्यासेनैव" इत्युक्तरीत्या प्रपत्तिरेकैव

सर्वधर्मान्तरस्थाने विधीयत इति फलेत् । एतेन त्रिवर्गार्थिभिरपि इयं भगवत्प्रपत्तिः कर्तुमर्हेति सिद्धम् । तदा, "त्वयाऽपि प्राप्तमैश्वर्यं यतस्तं तोषयाम्यहम् । नाहमाराधयामि त्वां तव बद्धोऽयमञ्जलिः ॥ स त्वं प्रहर वा मा वा मयि वज्रं पुरन्दर । नाहमुत्सृज्य गोविन्दमन्यमाराधयामि भोः ॥" इत्याद्युक्तरीत्या नित्यनैमित्तिकेषु विशेषणतयाप्रवेशमात्रा- तिरेकेण सर्वास्वप्यवस्थासु अन्यादृश **देवतान्तरस्पर्शराहित्यमुचितम्** । मोक्षार्थमुपायान्तराण्यर्थयमानैरुपायविरोधीनि निविवर्तयिषुभिरपीयं प्रपत्तिः कर्तुमर्हा ; प्राप्तिविरोधीनि निविवर्तयिषूणामपीयं प्रपत्तिरेव पर्याप्ता । एवं प्रपत्तेः सकलाभिमतसाधनत्वमत्रोक्तं भवति । अत्र **प्रपत्त्यु- पायविरोधिनिवर्तनस्य** प्रकारं **श्रीगीताभाष्ये द्वितीययोजनाया-** मनुजग्राह ; **प्राप्तिविरोधिनिवर्तन**प्रकारं गद्येऽनुजग्राह । अतो- भयत्रापि एकमनादृत्यापरस्य निरूपणं कृतमिति न । स्थलद्वयमपि **सर्वाभिमतसाधनस्यास्योपायस्य प्रभावोदाहरणपरम्** । प्रणवस्य मन्त्रान्तरेऽनुप्रविश्यावस्थानं स्वातन्त्र्येणावस्थानं च यथा, तथा अस्याः प्रपत्तेरधिकारिविशेषविषये भक्त्यङ्गत्वेन, अधिकार्यन्तरविषये स्वातन्त्र्येण चावस्थानं च **वचनबलसिद्धम्** । इत्थं **नियताधिकारतया** भक्ति- प्रपत्त्योः विकल्परूपा स्थितिः, "भक्त्या परमया वाऽपि प्रपत्त्या वा महामुने ।" इत्यादिषु प्रसिद्धा । अतः "सम्यग्ज्ञानेन वा मोक्षो गङ्गायां मरणेन वा । प्रणामाद्वाऽपि सुकृतात् भक्त्या वा लभते नरः ॥" इत्यादिषु **साक्षादुपायेन** सह परम्परोपायानामप्युपादानं **तत्प्राश- स्त्यातिशय**प्रत्यायनमात्रार्थम् ।

गुणविशिष्टतया स्वयमेव निरपेक्षफलप्रदरूपेणावतिष्ठते इति स्थिति-प्रकारमनुसंदधानस्सन् शरणं व्रजेति अत्रोक्तं भवति ।

(5) इत्थमेव परिपूर्णं स्वमुद्दिश्य प्रपदने क्रियमाणे आनुकूल्य-संकल्पाद्यतिरेकेणान्यं कमपि परिकरमत्र विद्यान्तरेष्विवान्तर्भाव्य सोऽपि प्रसादनरूपेणोपायकोटौ निविशते इति बुद्धेर्निवर्तनार्थमेकशब्दः (प्रयुक्तः) इत्यप्याचक्षते । 'आज्ञानुज्ञाभिरनुष्ठीयमानानि कर्तव्यान्तराणि सर्वाणि न प्रपत्तेः सहायभूतानि । अनया प्रपत्त्या वशीकृतः फलं प्रदास्यन् अहमेक एवास्य क्षणिकोपायस्य प्रतिभूः स्थितोऽस्मि । एतत्प्रपत्तिफलोद्देशेनान्यत् किमपि अपेक्षितम् अवश्यकर्तव्यं नास्ति । तत् अपेक्षितकर्तव्यं सहायत्वेन स्वीकृत्याहं त्वां रक्षिष्यामीति न' इति तात्पर्यम् । एतेन आनुकूल्यसंकल्पादिविशिष्टप्रपत्तिव्यतिरेकेण प्रपत्तिपरिकर इति नाम कृत्वा स्वेन सहान्यत् किमपि सहकारिकारणं न योजनीयमित्युक्तं भवति । "येन केनापि प्रकारेण द्वयवक्ता त्वम्" इति, "प्रपत्तिवाचैव निरीक्षितुं वृणे" इति चोक्तरीत्या पूर्णप्रपत्त्यर्थम-पेक्षितस्य ज्ञानस्याभावेऽपि यथाकथंचिदनुष्ठाने कृतेऽपि कार्यकरण-शीलस्यास्योपायस्य, अन्यस्य यस्य कस्यचित् परिकरस्यान्वेषणप्रसङ्गो नास्ति किल ।

"ततः सागरवेलायां दर्भान् आस्तीर्य राघवः। अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥ बाहुं भुजगभोगाभमुपधायारिसूदनः ।" इति भगवत्कृतसमुद्रशरणागतिस्थले, "स राजा परमापन्नो देवश्रेष्ठमगात् तदा । शरणं सर्वभूतेशं भक्त्या नारायणं हरिम् ॥ समाहितो निराहारः

षड्रात्रेण महायशाः । ददर्शादर्शने राजा देवं नारायणं प्रभुम् ॥" इति सप्तव्याधोपाख्याने ब्रह्मदत्तचरिते चोक्ताः प्रकाराः सर्वेऽपि न प्रपत्तेरङ्गानि । अनयोर्द्वयोः स्थलयोः सपरिकरप्रतिशयनादिप्रधानत्वात् तत्र ते नियमा वक्तुं युक्ताः । एवं सुकृतप्रणामेऽपि द्रष्टव्यम् ॥

अत्र प्रपत्त्यध्यायाद्युक्तानुकूल्यसंकल्पादिव्यतिरेकेणान्ये केऽपि नियमा नापेक्षिताः । आकिञ्चन्यैकधनानां द्रौपदी-दमयन्ती-राक्षसी-विभीषण-क्षत्रबन्धु - मुचुकुन्द-गजेन्द्र - पाण्डव-देव-सुमुख-त्रिशङ्कु-शुनश्शेफ-किरात - काक-कपोतादीनां शरणागत्यवसरे तादात्विकानुकूल्यादिव्यतिरेकेणान्यां कामपि इतिकर्तव्यताम् उच्यमानां न पश्यामः । क्षणकालसाध्येन निरपेक्षेण प्रपत्तिमात्रेण झटिति तेषां शरणागतानां तत्तदपेक्षितसिद्धिं चाद्राक्ष्म। इत्थं मोक्षार्थप्रपत्तावप्येतदुद्दिष्टकाले फलसिद्धेर्न क्षतिः ।

इदं "मा शुचः" इति वाक्यस्यापि तात्पर्यम् । "परित्यज्य" इत्यत्र परिकरान्तरनैरपेक्ष्येऽर्थत्वेनोक्ते सति एकशब्दे इयं योजना दृढीकरणार्था भवितुमर्हति । अस्यार्थान्तरं विवक्षितमिति वा । एकशब्दस्यैतदर्थकत्वे सति, "परित्यज्य" इत्येतस्य तत्रोक्तानि अर्थान्तराणि ग्राह्याणि ।

सपरिकरप्रपत्तेः उपासनादीनामङ्गिनामेतत्परिकरभूतानां धर्मान्तराणां चान्वयस्य निवर्तनपरयोर्व्याख्ययोः, अनेनैकशब्देन शरण्यस्य विशेषणं कथमिति चेत्—अकिंचनविषये एषां प्रसादनस्वरूपेण शरण्येन सह संबन्धस्याभावं प्रदर्शयितुं "मामेकम्" इत्युच्यते ।

(6) "सर्वधर्मान्" इत्यत्र अधस्तात् सर्वशब्दम्, "सर्वपापेभ्यः" इत्यग्रिमं सर्वशब्दं च दृष्ट्वा अयमेकशब्दः सर्वशब्दप्रतिसंबन्धित्वेना-वतिष्ठते इत्याचक्षते। तदा—

**सुदुष्करेण शोचेद्यो येनयेनेष्टहेतुना।**
**सस तस्याहमेवेति चरमश्लोकसंग्रहः॥**

अनेन किमुक्तं भवतीति चेत्—"यत् येन कामकामेन न साध्यं साधनान्तरैः। मुमुक्षुणा यत् सांख्येन योगेन न च भक्तितः॥ प्राप्यते परमं धाम यतो नावर्तते यतिः। तेनतेनाप्यते तत्तन्न्यासेनैव महामुने। परमात्मा च तेनैव साध्यते पुरुषोत्तमः॥" इत्युक्तरीत्या स्वाभिमतानि यानि कानिचित् फलान्युद्दिश्य तदनुगुणतया पृथक् पृथक् शास्त्रैर्विहि-तेषूपायेषु ज्ञानाभावेन वा, ज्ञाने सति शक्त्यभावेन वा, एतयोरुभयोः सतोर्विलम्बाक्षमत्वेन वा शोचन्तमधिकारिणं प्रति, तेषूपायेषु कस्मिंश्चिदपि त्वया नैवाटितव्यम्, तैः तैः पृथक् पृथक् देयानां फलानां सर्वेषां (प्रदाने) प्रपत्तिवशीकृतोऽहमेक एव पर्याप्तः' इत्युक्तं भवति। 'बहुभिरौषधैर्दातुं शक्यानि आरोग्याणि सर्वाणीदं सिद्धौषधमेकमेव यतो दातुं समर्थम्, अतस्त्वया औषधान्तरार्थमयतमानेन सता अस्यौषधस्यैकस्योपजीवनमेव पर्याप्तम्, इदं तव तैरौषधैर्निवर्तनीयान् व्याधीन् सर्वान् निवर्तयेत्, त्वया परस्तात् सर्वेऽपि भोगाः स्वयमेव भोक्तुं शक्याः। त्वया, 'आरोग्यभोगाभ्यां हीये' इति नोद्विग्नेन भाव्यम्' इति यथोच्येत, तथाऽयं वर्तते **चरमश्लोकः।**

**सर्वशब्दप्रतिसंबन्धिन एकशब्दस्य सिद्धोपायप्राधान्यात्** शरण्यविशेषणरूपेणावस्थानेऽपि, "न्यासेनैव" इत्युक्तरीत्या प्रपत्तिरेकैव

सर्वधर्मान्तरस्थाने विधीयत इति फलेत् । एतेन त्रिवर्गार्थिभिरपि इयं भगवत्प्रपत्तिः कर्तुमर्हति सिद्धम् । तदा, "त्वयाऽपि प्राप्तमैश्वर्यं यतस्तं तोषयाम्यहम् । नाहमाराधयामि त्वां तव बद्धोऽयमञ्जलिः ॥ स त्वं प्रहर वा मा वा मयि वज्रं पुरन्दर । नाहमुत्सृज्य गोविन्दमन्यमाराधयामि भोः ॥" इत्याद्युक्तरीत्या नित्यनैमित्तिकेषु विशेषणतयाप्रवेशमात्रातिरेकेण सर्वास्वप्यवस्थासु अन्यादृश देवतान्तरस्पर्शराहित्यमुचितम् । मोक्षार्थमुपायान्तराण्यर्थयमानैरुपायविरोधीनि निविवर्तयिषुभिरपीयं प्रपत्तिः कर्तुमर्हा ; प्राप्तिविरोधीनि निविवर्तयिषूणामपीयं प्रपत्तिरेव पर्याप्ता । एवं प्रपत्तेः सकलाभिमतसाधनत्वमत्रोक्तं भवति । अत्र प्रपत्त्युपायविरोधिनिवर्तनस्य प्रकारं श्रीगीताभाष्ये द्वितीययोजनायामनुजग्राह ; प्राप्तिविरोधिनिवर्तनप्रकारं गद्येऽनुजग्राह । अतोभयत्रापि एकमनादृत्यापरस्य निरूपणं कृतमिति न । स्थलद्वयमपि सर्वाभिमतसाधनस्यास्योपायस्य प्रभावोदाहरणपरम् । प्रणवस्य मन्त्रान्तरेऽनुप्रविश्यावस्थानं स्वातन्त्र्येणावस्थानं च यथा, तथा अस्याः प्रपत्तेरधिकारिविशेषविषये भक्त्यङ्गत्वेन, अधिकार्यन्तरविषये स्वातन्त्र्येण चावस्थानं च वचनबलसिद्धम् । इत्थं नियताधिकारतया भक्तिप्रपत्त्योः विकल्परूपा स्थितिः, "भक्त्या परमया वाऽपि प्रपत्त्या वा महामुने ।" इत्यादिषु प्रसिद्धा । अतः "सम्यग्ज्ञानेन वा मोक्षो गङ्गायां मरणेन वा । प्रणामाद्वाऽपि सुकृतात् भक्त्या वा लभते नरः ॥" इत्यादिषु साक्षादुपायेन सह परम्परोपायानामप्युपादानं तत्प्राशस्त्यातिशयप्रत्यायनमात्रार्थम् ।

प्राप्यस्यैव प्रापकत्वं स्वप्राधान्यनिवारणम् ।
प्रपत्तेर्व्याजमात्रत्वमन्योपायैरनन्वयः ॥
तदङ्गैरप्यसंबन्धः सर्वसाध्येष्वभिन्नता ।
इत्थमर्थाः पडाचार्यैरेकशब्दस्य दर्शिताः ॥
केचित्त्विहैकशब्दार्थं शरण्यैक्यं प्रचक्षते ।
विशिनष्टि तथापि श्रीर्गुणविग्रहवत् प्रभुम् ॥
ईश्वरी सर्वभूतानामियं भगवतः प्रिया ।
संश्रितत्राणदीक्षायां सहधर्मचरी स्मृता ॥
एकं जगदुपादानमित्युक्तेऽपि प्रमाणतः ।
यथाऽपेक्षितवैशिष्ट्यं तथाऽत्रापि भविष्यति ॥
एकोपास्तिविधानेऽपि गुणादीनां यथाऽन्वयः ।
तथैकशरणव्रज्याविधानेऽप्यनुमन्यताम् ॥
यथा गुणादिवैशिष्ट्ये सिद्धोपायैक्यमक्षतम् ।
एवं पत्नीविशिष्टत्वेऽप्यभीष्टं शास्त्रचक्षुषाम् ॥
प्रभाप्रभावतोर्यद्वदेकोक्तावितरान्वयः ।
एवमन्यतरोक्तौ स्यात् सहवृत्त्यभिधानतः ॥
स्मरन्ति चैनां मुनयः संसारार्णवतारिणीम् ।
ऊचतुः स्वयमप्येतत् सात्त्वतादिषु तावुभौ ॥
उपायोपेयदशयोर्द्वयेऽपि श्रीः समन्विता ।
इष्टा च शेषिणि द्वन्द्वे शेषवृत्तिर्यथोचिता ॥

अतोऽनन्यपरानेकश्रुतिस्मृत्यनुसारतः ।
पत्नीविशिष्ट एवैकः प्रपत्तव्य इहोदितः ॥

(शरणशब्दार्थनिरूपणम्)

इहत्यस्य **शरणशब्दस्यापि द्वयाधिकारे** उक्तोऽर्थोऽनुसन्धेयः । इदं **शरणवरणमर्जुनं** प्रत्युपदिष्टं सदपि, "अनालोचितविशेषाशेषलोकशरण्य" इत्युक्तरीत्या **सर्वविषयमित्येतत् श्वेताश्वतरश्रुतिप्रसिद्धम्** । "कृष्णं धर्मं सनातनम्", "शरण्यं शरणं च त्वाम्", "योगो योगविदां नेता", "अमृतं साधनं साध्यम्" इत्यादिष्वपि संकोचाभावात् **सर्वविषयत्वं विवक्षितम्** । इत्थमस्य **शरणतया** चरणीयत्वाय स्वस्यानन्यशरणत्वमेवापेक्षितम् ॥

(व्रजशब्दार्थः)

**व्रजेत्ययं शब्दः** "प्रपद्ये" इत्यत्र निर्णीतं **सपरिकरात्मनिक्षेपमेव** वक्ति । तत्रानुष्ठातुः स्वानुसन्धानरूपत्वादुत्तमः प्रयुक्तः । अत्र "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इत्यभिमुखतया स्थितं प्रति विधानपरत्वात् **मध्यमः** आसीत् । एषामानुकूल्यसंकल्पाद्यङ्गान्तराणामप्यत्र सूचितत्वप्रकारो द्वये इवोचितपदेषु द्रष्टव्यः । "सकृत् कृतः शास्त्रार्थः" इति निर्णयस्य, उपासने इवात्र **आवृत्तिपरः**, अपवादो नास्ति । अयमर्थः, "सकृदेव प्रपन्नाय" इत्यादिवचनेनापि सुप्रतिष्ठितः । **महोदारस्य सर्वशक्तेः** सन्निधौ भरन्यासं कुर्वतः **स्वाभिप्रायविशेषातिरेकेण फलविलम्बस्य हेतुर्नास्ति** । अतोऽस्याः **न्यासविद्यायाः** प्रारब्धनिवर्तकत्वं विशेषो भवति ॥

(जीवनियोज्यत्वस्थापनम्)

अत्र केचित्—स्वतन्त्रं प्रति किल किंचिद्विधातुं युज्यते। अत्यन्तपरतन्त्रतयाऽध्यात्मशास्त्रेषु मूलमन्त्रादिषु च शिक्षितमधिकारिणं प्रति "व्रज" इति कस्यचित् कर्तव्यस्य विधानं कथम्?—इत्याचक्षते। इदं पारतन्त्र्यकाष्ठामपरामृश्योक्तरूपम्। कथमिति चेत्—"कर्ता शास्त्रार्थवत्त्वात्", "परात्तु तच्छ्रुतेः" इति वेदान्तनिर्णीतरीत्या अस्य भगवदधीनकर्तृत्वस्य सत्त्वात् एतं प्रति विधाने न दोषः। अचिद्भिः शब्दादीनामीश्वरोत्पादितानां वहनवत् एतावतः स्वातन्त्र्यस्य ग्रहणं वहनमप्यस्य भगवत्पारतन्त्र्यकाष्ठायाः स्थितिप्रकारः।

अस्य कयाऽपि विधया कर्तृत्वं नास्तीति चेत्-प्रकृत्यविद्यादीनां कर्तृत्वपरसिद्धान्ततुल्यता प्रसज्येत। कर्तृत्वं स्वाधीनमिति चेत्—सर्वात्मनियन्ता एकोऽस्तीत्यस्यार्थस्यासिद्ध्या निरीश्वरसिद्धान्तप्रकारः प्रसज्येत। ईश्वराधीनतया प्राप्तं कर्तृत्वमपि ज्ञातृत्वमात्रमिति चेत्—पुरुषार्थसंपादनरुचेस्तदुपायप्रवृत्तेश्चाभावः प्रसज्येत। ज्ञानं तदवस्थाविशेष इच्छा चास्ति, अन्यः कश्चिदपि व्यापारो नास्तीत्युक्तौ—दृष्टादृष्टार्थानां केषांचिदुपायानां स्वयंप्रयोजनभूतानां कैङ्कर्याणां चानुष्ठानस्य हेतुर्न स्यात्। अतो ज्ञानचिकीर्षाप्रयत्नाः त्रयोऽप्यात्मनः सन्ति। अत्र चिकीर्षाप्रयत्नौ ज्ञानस्यावस्थाविशेषावित्येतत् वेदार्थसंग्रहप्रतिपादितलाघवयुक्त्या द्रष्टव्यम्। क्रियाश्रयत्वरूपं कर्तृत्वं चेतनाचेतनसाधारणम्। प्रयत्नाश्रयत्वरूपं कर्तृत्वं चेतनैकान्तम्। प्रयत्नो नाम—शरीरादिप्रेरणहेतुभूतो बुद्धिविशेषः।

ज्ञानमात्राश्रयत्वदशायां भोगमात्राश्रयत्वदशायां च क्रियाश्रयत्वमात्ररूपं सामान्यकर्तृत्वमेवास्ति। कस्यचित् स्वबुद्ध्योत्पादनसमये प्रयत्नाश्रयत्वरूपं कर्तृत्वं भवति। एवम्भूतं कर्तृत्वं कैङ्कर्यमात्रविषयकमित्युक्तिरपि नोचिता। तत्रापि भगवत्प्रीतिरूपं प्रयोजनमुद्दिश्योपायानुष्ठानं कृतवान् किल भवति।

(कर्तृत्वे त्याज्यांशनिरूपणम्)

अतः कर्तृत्वे बन्धहेतुभूत आकार एव त्याज्यः। स क इति चेत्—ईश्वरप्रत्तान् करणकलेबरादीन् ज्ञानशक्त्यादींश्चावलम्ब्य तस्मिन् प्रेरकतया धारकतया फलितया चावस्थाय सह कुर्वाणे सति प्रवृत्तिशीले स्वस्मिन् एतद्विपरीततयाऽनुसन्धानम्, अस्मिन् अनुसन्धाने यथावत् संपन्नेऽपि अत्र प्रयोजनान्तरमन्तर्भाव्यानुष्ठानं च बन्धकम्। भक्तिप्रपत्ती अपि प्रयोजनान्तरपरस्य बन्धिके किल भवतः। अतः स्वाभाविककैङ्कर्यार्थिनोऽनन्यप्रयोजनस्य च सतोऽस्य फलदशायां कर्तृत्वमिवोपायदशायां कर्तृत्वमपि न विरुद्धम्। फलदशायां विविधविचित्रकैङ्कर्यकर्तृत्वं केवलमीश्वरेच्छावैचित्रीसंवलितस्वेच्छानिबन्धनं भवति। संसारदशाकालिकं कर्तृत्वं सर्वं कर्मानुरूपमीश्वरेण परिणमितानि सत्त्वरजस्तमांस्युपाधित्वेनावलम्ब्य बहुविधं वर्तते। अत्र रजसा तमसा प्रयोजनान्तरसङ्गहेतुभूतसत्त्वेन च जायमानं कर्तृत्वं बन्धकम्। भगवत्प्राप्तिसङ्गजनकप्रकृष्टसत्त्वविशेषनिबन्धनं कर्तृत्वं मोक्षकारणम्। एतद्गुणत्रयसंबन्धशून्यं वर्तते मुक्तदशायां कर्तृत्वम्।

(जीवात्मनः कर्तृत्वाभाववचनतात्पर्यम्)

एवम्भावाद् आत्मनः कर्तृत्वाभावं प्रतिपादयतां वाक्यानां कर्तृत्वसद्भावं प्रतिपादयतां वाक्यानां च विषयव्यवस्थासंभवात् विरोधो नास्ति । तत् कथमिति चेत्-कर्तृत्वं नास्तीति वाक्यानि ईश्वराधीनं तदायत्तप्रकृतिगुणाधीनं च जायमानं कर्तृत्वं निरपेक्ष-मिति मन्तुं न युक्तमिति प्रतिपादयन्ति । कर्तृत्वमस्तीति प्रतिपादयन्ति वाक्यानि ईश्वरेच्छादिनिबन्धनतया जायमानानां ज्ञानतद्विशेष-चिकीर्षाप्रयत्नानां चायमेवाश्रय इति प्रतिपादयन्ति । इमं निष्कर्ष-प्रकारं "शरीरवाङ्मनोभिर्यत्" इत्यारभ्य गीताचार्य एव निर्धारया-मास । अत्र "दैवं चैवात्र पञ्चमम्" इति पुरुषोत्तम उच्यते ।

अयं जीवस्य कस्मिंश्चित् कार्ये प्रवर्तनकाले तत् कार्यं प्रति कारयितेत्युच्यते । स्वेन क्रियमाणेषु फलप्रदानादिषु सृष्ट्यादिषु च कर्तेत्युच्यते । कचित् प्रवृत्तस्य चेतनस्यानिवारणमात्रेणोपेक्षकः । तदानीमङ्गीकृत्यावस्थानादनुमन्ता । लघुभारं (कृशम् अग्रदारुभागं) वहतः प्रबलो गुरुभार(स्थूलदारुभाग)वहनेन यथा सहकरोति, तथा सह प्रवृत्त्या सहकारी । सृष्ट्यादिषु देवमनुष्यादिवैषम्यस्य जीवकर्मविशेषोपाधिकत्वात् "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः । तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥" इतीश्वरस्य कर्तृत्वनिषेधः क्रियते ।

इत्थं सर्वविषयसाधारणकर्तृत्वविशिष्टेश्वरनिबन्धनस्य जीवे स्वबुद्धिपूर्वप्रवृत्तिशक्तिरूपनियोगयोग्यत्वस्य सिद्धत्वादत्र व्रजेति विधाने न दोषः ॥

(कुरुकेश्वरवाक्यतात्पर्यम्)

इत्थं **भक्त्यादिवत् शरणागतिधर्मस्यापि कर्तव्यत्वेन विधीय**मानत्वात् "स्वेन संपद्यमानं हितं क्रीतदुग्धवत्; ईश्वराज्जायमानं हितं मातृस्तन्यवत्" इति कुरुकेश्वरवार्तोया अपि **'भक्तिप्रपत्त्यादयः** सर्वेऽपि तस्मादेव जायन्त इति मन्तव्यम्' इति **स्वगतपराधीनकर्तृत्वे तात्पर्यम्** ।

**अन्यविश्वाससिद्ध्यर्थं भक्त्युपायविधिं वदन् ।**
**सर्वशास्त्रेष्वविश्वासमाधत्ते मुखभेदतः ॥**
**मद्योपहतपात्रस्थतीर्थदृष्टान्तवर्णनम् ।**
**अहंकारान्वये तु स्यात् प्रपत्तावपि भक्तिवत् ॥**

अतः "प्रसीद मद्वृत्तमचिन्तयित्वा" इत्यादिकमपि पूर्वं कृतप्रपत्तिविषये क्षमायाचनप्रकार एवेति केषांचित्कथनमपि **अहंकारस्पर्शादिशङ्का**भिप्रायमात्रादेव । न तु **यथाशास्त्रमनुष्ठितां प्रपत्तिमपराधं** मत्वा तदर्थं क्षमायाचने तत्परम् । तथा सति, "पितामहं नाथमुनिं विलोक्य प्रसीद" इति **पूर्वाचार्यपुरस्कारादेः** स्वेन क्रियमाणत्वात् एतदर्थं क्षमा याचनीयेत्यनवस्था स्यात् । **अस्य स्वपरनिर्वाहकत्वे** एतद्वत् पूर्वकृत**प्रपदनमपि स्वपरनिर्वाहक**मिति वक्तुं शक्यम् । इहोच्यमानैः **कुतर्कैः पूर्वकृतप्रपत्तेरप्यपराधत्वसिद्धेः पूर्वेषां पुरस्करणमप्ययुक्तं** स्यात् । **अतोऽस्मिन् स्तोत्रे आद्यन्तयोः** क्रियमाण **आचार्यपुरस्कार** इहोच्यमानायाः **प्रपत्तेरपेक्षिततया| वैकल्यपरिहारार्थतया**

चोपयुक्तः प्राप्त इत्येव तत्त्वम् । अस्मिन् आचार्यपुरस्कार इव प्रपत्त्यादिष्वपि पराधीनकर्तृत्वं न दोषः ।

(स्वरूपज्ञस्य निषिद्धकर्मालेपवादनिरसनम्)

इत्थं पराधीनकर्तृत्वस्य प्रामाणिकत्वात्, 'आत्मनः कर्तृत्वाभावात् स्वरूपज्ञं निषिद्धकर्मसु किमपि न लिम्पति' इति पक्षोऽपि निरस्तः। मुमुक्षोरुक्तं बाल्यं न बालकृत्यं कामचारादिकम्, किं तु स्वमाहात्म्यानाविष्कारमात्रमित्येतद् "अनाविष्कुर्वन्नन्वयात्" इति सूत्रे समर्थितम् । "अनिष्टमिष्टं मिश्रं च", "यस्य नाहंकृतो भावः" इत्यादिवचनानि न बुद्धिपूर्वोत्तराघविषयाणीत्येतत् बहुशास्त्रविरोधाभावार्थं भाष्यादिषु समर्थितम् । "हत्वाऽपि" इत्येतदपि धर्मयुद्धादिविषयम् ।

उपभुक्तौषधन्यायादुत्तरापथ्यमर्दनम् ।
अनन्यपरनिर्बाधश्रुतिस्मृतिशतैर्हतम् ॥

मन्वादयोऽपि, "जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाश इव पङ्केन न स पापेन लिप्यते ॥", "प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति नियमचामासुः । इदं ब्रह्मविदोऽपि तुल्यमित्येतत् "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" इति सूत्रे दृष्टान्तरूपेण साधितम् । अतः आत्मनः कर्तृत्वाभावं पारतन्त्र्यज्ञानमात्रं वाऽवष्टभ्य बुद्धिपूर्वोत्तराघं कथंचिदपि न लिम्पेदित्युक्तिः एतदर्थं पुनः प्रपदनं न कर्तव्यमित्युक्तिश्च परपक्षावेते॥

( संबन्धज्ञानमेव प्रपत्तिरिति वादस्य निरसनम् )

अत्र केचित्—व्रजेत्यादिविधीन् अन्यपरान् कृत्वा, "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा ॥", "यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥", "आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर ॥" इत्यादिषु तात्पर्यगतीश्चापरामृश्य, एतान्यवलम्ब्य शास्त्रजन्यसंबन्धज्ञानातिरेकेणान्यो मुमुक्षोरनुष्ठेयः कश्चिदप्युपायो नास्तीति ब्रुवते । इदं भक्तिप्रपत्त्यादिविधिस्वारस्यविरुद्धम् । रागप्राप्तश्रवणमननाभ्यां सिद्धस्य शास्त्रजन्यज्ञानस्य नास्ति विधानापेक्षा । अविधेयज्ञानं मोक्षसाधनमिति वदतां विधिविरोधादिदोषाः प्रसज्यन्त इति साधितं किल । अतः सर्वविद्यानिष्ठानां मुमुक्षूणां साधारणं परम्परयोपकारकं जीवपरमात्मसंबन्धज्ञानं शास्त्रेण यस्य जातं तस्य, अस्मत्स्वामिनं निरतिशयभोग्यं श्रियःपतिं प्राप्तुं क उपाय इत्युपायाकाङ्क्षायां जातायाम् अत्र तत्तदधिकारिविशेषानुरूपे विधीयमाने ज्ञानान्तरे भक्तिप्रपत्ती । तयोः प्रपत्तिर्नाम—"यत् संरक्ष्यतयाऽर्प्यते" इत्याद्युक्तरीत्या सपरिकरं स्वरक्षाभरसमर्पणम् । अनेन सम्बन्धानुसन्धानगर्भेण भाव्यमिति प्रतिपादनार्थं संबन्धज्ञानं प्रपत्तिरित्यवोचन्नित्येतावदेव युक्तम् । अस्यां भरन्यासरूपप्रपत्तेः स्वरूपपरिकराधिकारादीनि पूर्वमेव विस्तरेणावोचाम ॥

(द्वितीयपादार्थसंग्राहिका गाथा)

[1]'साधनं सत्फलं चाहमेव भवेयम् ; साधकोऽपि मद्वशगो मामाश्रयेत् ; साधनं च न शरणागतिमार्गस्ते ; साधनानि एतन्निष्ठाया मध्ये कचिदपि न तिष्ठेयुः ; वेदनाप्रदमन्यदङ्गमस्मिन् नापेक्षितम् ; अन्येषां सर्वेषां (अवस्थान)स्थानेऽहमेव तिष्ठेयम्, दूतं नाथं च मामाश्रित्य शोकं त्यज' इत्युक्तवान् परिवृणोति ॥

(उत्तरार्धावतारणम्)

इत्थं पूर्वार्धेन कस्यचित् अधिकारिविशेषस्य द्वये पूर्वखण्डेऽनुसन्धेयं सर्वधर्मसाधारणं स्वासाधारणं च प्रभावं धारयन्तं सकृत्कर्तव्योपायविशेषमधिकार नैरपेक्ष्यादिविवरणपूर्वकं विधाय, उत्तरार्धेन द्वयोत्तरखण्डप्रतिपादितं फल नमश्शब्दसंक्षिप्तानिष्टनिवृत्तिविवरणमुखेनाऽऽचष्टे । अत्र पूर्वार्धेनाधिकारिकृत्यमाचष्ट । उत्तरार्धेन शरण्यस्य स्वीकृतभरस्य स्वस्य कृत्यं प्रतिपाद्य कृतकृत्यमिमं समाश्वासयति ।

---

1 साधनमुम् नर्पयनुम् नानेयावन्
साधनमुमेन्वयमामेन्नैप्पर्ट्रुम्
साधनमुं शरणनेरियन्रुनक्कु
साधनंगलिन्निलैक्कोरिडैयिल् निल्ला
वेदनैशेर्वेरङ्गमिदनिल् वेण्डा
वेरेल्लानिरकुनिलै नाने निन्रन्
दूतनुमा नाथनुमामेन्नैप्पर्ट्रि
शोकम् तीरेन वुरैत्तान् शूडूकित्राने ।

("अहम्"शब्दार्थः)

अत्र "मोक्षयिष्यामि" इत्युत्तमेन अहम् इति प्रतीयमानेऽपि अधिकम् "अहम्" इति पदम् अर्थस्वभावात् सर्वपापविमोचनोपयुक्तानामघटितघटनाशक्त्यादीनां विवक्षणेन सप्रयोजनं भवति। कृतापराधं श्रृङ्खलाबद्धं कृतवति समाधिकदरिद्रे मयि केनचित् व्याजेनोल्लसितकारुण्ये अपराधं क्षममाणे सति निवारयिता नास्ति, अन्येन केनाप्यस्य मुक्तत्वापादनमपि न शक्यमितीह तात्पर्यम् । अयमर्थः, "मोक्षदो भगवान् विष्णुः", "पशवः पाशिताः पूर्वं परमेण स्वलीलया। तेनैव मोचनीयास्ते नान्यैर्मोचयितुं क्षमाः ॥" इत्यादिषु प्रसिद्धः ॥

अस्मिन् "अहम्" इति पदे सहजकारुण्यादिषु मूलबलतया अवतिष्ठमानेषु, प्रपत्तिनिबन्धनप्रसादविशेषेऽग्रेसरसेनात्वेनावतिष्ठमाने निरङ्कुशस्वातन्त्र्यं सर्वविरोधिनिराकरणार्थं पुरतोऽवतिष्ठते । तत् कथमिति चेत्-सहजकारुण्यम् अल्पव्याजेनानन्तापराधानादरणौपयिकं प्रसादविशेषं जनयति। अयं प्रसादविशेषः कारुण्योपश्लिष्टः सन् निरङ्कुशस्वातन्त्र्यमाश्रितसर्वविरोधिनिराकरणप्रयोजकमापादयति। इत्थं सर्वपापविमोचनापेक्षितसर्वाकारविशिष्टेश्वरगतनिरपेक्षकर्तृत्वतत्परेऽहंशब्देऽवधारणं फलितम् ॥

("त्वा"शब्दार्थः)

"त्वा" इत्यनेनोच्यते, "न त्वेवाहम्" इत्यारभ्योपदेशपरम्परया चिदचिदीश्वरतत्त्वत्रयविवेके जाते ऐश्वर्यादिपुरुषार्थानामल्पत्वास्थिरत्वादिदोषान् संप्रबुद्ध्य मत्प्राप्तिरूपः परमपुरुषार्थः प्राप्तव्य

इत्यभिनिविष्टम्, एतदर्थमुपदिष्टे दुष्करोपायान्तरे संबन्धं हित्वा प्राप्यस्य सर्वविरोधिनिराकरणक्षमस्य मम सन्निधौ भरन्यासं कृत्वा कृतकृत्यम्, उद्दिष्टफललाभार्थमितः परं कस्मिंश्चिदपि कर्तव्यान्तरे प्राप्तिरहितं त्वामिति ॥

(सर्वपापेभ्यः इति शब्दार्थः)

इत्थं बन्धमोक्षशक्तं मोक्षप्रदम्, अशक्तं तत्सन्निधौ न्यस्तभरं मुमुक्षुं चोक्त्वा अग्रे "सर्वपापेभ्यः" इति बन्धकान्युच्यन्ते। पापं नाम—शास्त्रवेद्यमनर्थसाधनम्। अनर्थो नाम—प्रतिकूलप्राप्तिरनुकूलनिवृत्तिश्च। अत्र पापशब्दो मुमुक्षुं प्रत्यनिष्टफलानि सांसारिकपुण्यान्यपि वक्ति। "एते वै निरयास्तात स्थानस्य परमात्मनः" इत्युक्तेः स्वर्गादीनामपि मुमुक्षुं प्रति नरकत्वादस्य स्वर्गहेतुषु नरकहेतुषु च नास्ति विशेषः। अत एव मुमुक्षोः पापत्यागविधानवत्, "त्रैवर्गिकांस्त्यजेद्धर्मान्" इति विधीयते। "[1]उभयविधप्रबलकर्माणि पातयित्वा" इत्युक्तरीत्या सुकृतदुष्कृतानि उभयान्यपि मुमुक्षोर्निराकरणीयतया किल श्रुतिस्मृती प्रतिपादयतः। इत्थं पुण्यपापरूपं बन्धकारणं पापशब्देनोक्त्वा बहुवचनेन पुण्यपापयोरानन्त्यं विवक्षति। इतः परं सर्वशब्देन विशेषणं किमर्थमिति चेत्-प्राप्तिविरोधिकर्मणः कारणभूतायाः कार्यभूतायाश्चभवन्त्या अविद्यायाः, विपरीतवासनायाः, विपरीतरुचेः, स्थूलसूक्ष्मरूपप्रकृतिसंबन्धस्य

---

1 इरुवल्विनैकलुम् शारित्तु—तिरुवाय् 1-5-10

च पापराशौ घटनार्थम् । इत्थं "सर्वपापेभ्यः" इत्युक्तं विरोधिवर्गं सर्वं "मनोवाक्कायैः" इत्यारभ्य तिसृभिश्चूर्णिकाभिः शाब्दतया आर्थतया च प्रतिपादयामास ।

(प्रपन्नगतानामारब्धकार्याणां क्षन्तव्यत्वम्)

"क्षपयित्वाऽधिकारान् स्वान् शश्वत् कालेन भूयसा । वेधसो यत्र मोदन्ते शङ्कराः सपुरन्दराः ॥" इति, "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति चोक्तरीत्या केषांचिदधिकारावसाने मोक्ष इति स्थितम् । अधिकारिव्यतिरिक्तानामपि "अनारब्धकार्ये एव तु पूर्वे तदवधेः" इत्युक्तरीत्या प्रारब्धकर्मभोगावसाने इति स्थितम् । एवं स्थिते सति अत्रारब्धकार्यस्य क्षन्तव्यत्वोक्तिः कथमिति चेत्—फलप्रदानप्रवृत्ते कर्मणि जन्मान्तरदिवसान्तरस्थित्यादीनामारम्भकस्यांशस्यापि एतं स्वतन्त्रप्रपत्तिनिष्ठं प्रति अनिष्टत्वे, तद्विषयेऽप्यनेन शोके क्रियमाणे, तमंशमपीश्वरः क्षाम्यति । तदैव(सद्यएव)मोक्षप्राप्तिमन्तरा [आत्म]धारणस्याभावे प्रयोजकमार्त्यतिशयं बिभ्रतां तत्क्षण एव प्रारब्धकार्यं कर्म निःशेषं क्षाम्यति ! अतः आरब्धकार्यं क्षन्तव्यमित्यपेक्षणे न दोषः ॥

(क्रियमाणानां क्षन्तव्यत्वम्)

अत्र प्रपत्तिकालात् प्राक्तनान् "कृतान्" इत्युपादाय, पाश्चात्याः "करिष्यमाणान्" इत्युक्ताः । प्रपत्तिकाले क्रियमाणानां क्षन्तव्यत्वोक्तिः कथमिति चेत्—प्रारब्धोऽपरिसमाप्तश्च वर्तमान

इति **प्रक्रियया प्रपत्तेः** प्रागारभ्य पश्चादेव समापनीयतया **चिरकालसाध्यतया** स्थिताः **तत्क्षणे प्रामादिकाश्चात्र** "क्रियमाणान्" इत्युच्यन्ते । करिष्यमाणा नाम—पश्चात् प्रारप्स्यमानाः । इत्थं क्रियमाणैकदेशेषु करिष्यमाणेषु च **बुद्धिपूर्वकाः प्रपन्नस्य** "प्रायश्चित्तिरियं साऽत्र यत् पुनः शरणं व्रजेत्" इत्युक्तेः **पुनः प्रपत्त्या** शाम्यन्ति ।

(पातकाप्रतिबन्धकत्ववार्तातात्पर्यम्)

"**सर्वेश्वरेण मोक्ष**प्रदानसंकल्पे कृते **पातकान्यपि** निवारकाणि न भवन्ति" इति **वार्ताऽपि, बुद्धिपूर्वोत्तराघे** जातेऽपि **निग्रहो** नोदेति, प्रायश्चित्तं नापेक्षितमित्येवंपरा न ; किं तु **प्रसादनेन** तस्मिन् प्रसन्ने संपन्ने मोक्षोऽवश्यम्भावीत्येवम्परा । एतदर्थमेवमीश्वरेण पुनः प्रपत्तिरूपे प्रायश्चित्ते प्रवर्तनमपि **क्षमाफलम्** ।

(मालिन्यभोग्यतावचनतात्पर्यम्)

"प्रियतमादेहमालिन्यवत् [प्रसवसमयलग्न]वत्सदेहमालिन्यवच्च **प्रपन्नस्य दोषः**" इति **वार्तापि, दुष्टानामपि शरणागतत्वे** ईश्वरस्तान् अपरित्यज्य शोधयेदित्येवम्परा । अन्यथा **बुद्धिपूर्वोत्तराघ**मपि **ईश्वरस्य भोग्यमिति विवक्षितत्वे, प्रपन्नेनेद**मेव **यथाशक्ति संपाद्यं** स्यात् । **प्रकृतिविशेषस्वभावादपराधेषु बुद्धिपूर्वं** जातेष्वपि **पुनः प्रपदनमकुर्वतां** विषयेऽपि, "देवं शार्ङ्गधरं विष्णुं ये प्रपन्नाः परायणम् । न तेषां यमसालोक्यं न च ते नरकौकसः ॥", "यस्मिन् कस्मिन् कुले जाता यत्र कुत्र निवासिनः । वासुदेवरता नित्यं

यमलोकं न यान्ति ते ॥" इत्याद्युक्तरीत्या नरकादिप्रसङ्गं निराकृत्य राजपुत्राद्यपराध इव लघुप्रत्यवायेन निर्वीर्यत्वापादनमपि क्षमा-विशेषः। पापानां दृष्टप्रत्यवायेषु नरकादिप्रत्यवायेषु च सत्सु नरकादयोऽस्य न भवन्तीति विशेषवचनैः प्रतिपादितत्वे दृष्टप्रत्य-वायानां बाधका न सन्ति। वचनविरोधे न्यायो न प्रवर्तेत।

सापराधानामनुतापशून्यतया पुनःप्रपत्तिमकृतवतां सतां केषां-चित्, प्रपन्नानामुपक्लेशत्वेनोक्तान् काणत्वादिदृष्टप्रत्यवायान् अपश्यन्तः स्मः किलेत्यपि मन्दचोद्यम्। तेषामप्यपराधादितारतम्यानु-सारेण नानाप्रकारतापत्रयानुभवः उपयुक्तज्ञानमान्द्यम् इहत्यभग-वदनुभवसंकोचविच्छेदौ भगवद्भागवततत्कैङ्कर्यरसविच्छेदो भग-वदपचारभागवतापचारादयः शिष्टगर्हाबहिष्कारादयः सुकृत-विशेषनाशः सात्त्विकानादरो मनोरथभङ्गक्लेश इत्येतेषु प्रकारेषु यः कश्चिदुपक्लेशरूपः प्रत्यवायः सुदर्शः। अकृत्यकरणकृत्याकरणा-दिरूपाणां नानाविधपापानामित्थं नानाविधदृष्टप्रत्यवायकरत्वमपि श्रुतिषु मन्वादिधर्मशास्त्रेषु इतिहासपुराणभगवच्छास्त्रादिषु च प्रसिद्धम्। अतः काणत्वाद्युपक्लेशविशेषोदाहरणमुपलक्षणमि-त्येतत् वाक्योपक्रमे समुदायनिर्देशादिभिः सिद्धम्। वचनबल-सिद्धो बुद्धिपूर्वोत्तराघफलभूत उपक्लेशवर्गः प्रारब्धकर्मविशेष-फलमिति निष्कर्षणे हेतुर्नास्ति। एते यथासंभवमुभयविध-कर्मणाऽपि जायेरन्। अत एव किल बुद्धिपूर्वोत्तराघात् सात्त्विकाः

बिष्यति । अन्यथा पुनःप्रपत्तिविधायकं शास्त्रं तदनुसारि शिष्टानुष्ठानं पूर्वसंप्रदायश्च विरुध्येरन् ।

(वार्तान्तरतात्पर्यम्)

अपचारा(राधा)नन्तरमनुतापानुदये ज्ञानं नोत्पन्नमिति सिद्ध्यतीति (वेदान्तिमुनि)(नञ्जीयर्)वार्ताया अपि अनुदितानुतापानां ज्ञानमान्द्ये तात्पर्यम् । सोपाधिकभगवदभिप्रायभेदानुगुणं जननार्हो बुद्धिपूर्वापचाराः केषांचिन्न जायन्ते । केषांचित् जाता अनुतापादिभिर्नश्यन्ति । कठिनप्रकृतीनामनुतापोऽपि नोदियात् । अतो बुद्धिपूर्वोत्तराघे जातेऽनुतप्तेन पुनःप्रपत्तेरकरणे उपक्लेशप्रतिपादकश्रुत्यादिरीत्या लघुप्रत्यवायेन निस्तारो भवति ।

विवेकिनां प्रपन्नानां धीपूर्वागस्यनुद्यमः ।
मध्यानामनुतापादिः शिक्षा कठिनचेतसाम् ॥

एवंसिद्धे येन केनापि प्रकारेण भगवन्निग्रहस्यानुत्पत्तये बुद्धिपूर्वोत्तराघं परिहरणीयम् ॥

प्रीतिमेव समुद्दिश्य स्वतन्त्राज्ञानुपालने ।
निग्रहानुदयोऽप्यस्य नान्तरीयक एव वा ॥

इत्थं यथाशक्ति अपराधान् परिहृत्य क्रियमाणैर्भागवतापचारस्तद्भिः संसर्गश्च सर्वथा परिहरणीयः ॥

क्षमित्पापवर्गाणामनन्तानां महीयसाम् ।
तद्द्वेषिसंक्रमं जानन् त्रस्येत् तदपराधतः ॥
सापराधेषु संसर्गेऽप्यपराधान् वहत्यसौ ।
बोद्धुमीश्वरकृत्यानि तद्विरोधादभीप्सति ॥

(तृतीयपादार्थसंग्राहिका गाथा)

[1]अप्रतिहतस्वसंकल्पो भूत्वा स्वमनाश्रितानां संकल्पान् सर्वान् स्वयमुत्पाद्यापि निवारयन् नाथः भवे प्रवृत्तमसत्संकल्पमस्माद्भवादव परिवर्त्य, द्वयोश्चरणयोरधस्तात् रक्ष्यवस्तुत्वेनास्मान् निक्षिप्य, अस्माभिरभिनिविश्य प्राक्तनसंकल्पेन कृतात् कर्मणो जातं क्रोधं विस्मृत्य मुक्तिं दातुं पुरत आविर्भूय समीचीनसंकल्पेनास्माभिरभ्युपगम्यमानः कालः अद्येति वा श्व इति वेति स्मितं करोति ॥

("मोक्षयिष्यामि" शब्दार्थः)

"मोक्षयिष्यामि" इत्यनेनोच्यते, त्वदिष्टसमये(त्वां) मुक्तमापादयेयमिति ।

केषांचित् पापानां विषये "न क्षमामि" इत्युक्तिः, अत्र "सर्वपापेभ्यो मोक्षयिष्यामि" इत्युक्तिश्च किं न परस्परविरुद्धे । अतः इयमुपच्छन्दनमात्ररूपा किं न भवति इति चेत्—एतयोर्भिन्नविषय-

---

1 तन्निनैविल् विलक्किन्त्रित्तन्नैनण्णार्
निनैवनैत्तुं तान् विलैत्तु विलक्कुनाथन्
एन्निनैवै इप्पवत्तिलिन्त्रु मार्त्ति
इणैयडिकीड् अडैक्कलमेन्त्रेम्मैवैत्तु
मुन्निनैवालेयाम्मुयन्त्र विनैयाल् वन्द
मुनिवयर्न्दु मुत्तितर मुन्नेतोन्त्रि
नन्निनैवाल् नामिशैयुं कालेमिन्त्रो
नाळैयोवेन्त्र् नहै शेय्किन्त्राने ॥

त्वान्न विरोधः। "न क्षमामि" इत्युक्तिः "पद्मपत्रशतेनापि न क्षमामि वसुन्धरे", "उपचारशतेनापि न क्षमामि वसुन्धरे" इति अल्पप्रभावैः प्रायश्चित्तान्तरैर्न क्षाम्येयमित्येवम्परा। अत्र सर्वपापप्रायश्चित्तात्मना वर्तमानेन केनचिदुपायविशेषेण सर्वाणि क्षाम्येयमित्युच्यते। "यदि वा रावणः स्वयम्" इति किल शरण्याभिप्रायो वर्तते। इत्थं व्यवस्थितविषयत्वस्य वचनैः स्वयमेव प्रदर्शितत्वेन विरोधाभावात् नेदमुपच्छन्दनमात्रम्। अन्यथा भक्तिप्रपत्तिरूपमोक्षोपायविधायकानि सर्वाणि शास्त्राणि अत्यन्तं व्याकुलानि भवेयुः।

(सर्वपापमोक्षणस्वरूपम्)

अत्र पापेभ्यो मोक्षणं नाम—अनादिविपरीतानुष्ठानमूलकनिग्रहाभिप्रायस्येश्वरेण स्वयं त्यजनम्। अनया निग्रहनिवृत्त्या निग्रहकार्या अविद्यादयः सर्वेऽपि निवृत्ता भवन्ति। ईश्वरस्य निग्रहनिवृत्तिर्नाम—"मत्प्रसादात्" इत्युक्तोऽभिप्रायविशेषः। जीवस्याविद्यादीनां निवृत्तिर्नाम—ज्ञानविकासादिः।

(पुण्यपापनिवृत्तिक्रमः)

अस्येत्थंभूतपुण्यपापरूपसंसारकारणनिवृत्तिक्रमः कीदृश इति चेत्—उपायविरोधिषु पूर्वमेव स्वहेतुभिर्निवृत्तेषु, प्रारब्धेतराणि प्राप्तिविरोधिभूतानि पूर्वपुण्यपापानि उपायारम्भे निःशेषं निवर्तेरन्। उत्तरेषु पापेषु बुद्धिपूर्वकेतराणि देशकालवैगुण्यादिजनितानि च कान्यपि न श्लिष्येयुः। अनापदि बुद्धिपूर्वोत्तराघानि स्वाधिकारानुगुणप्रायश्चित्तविशेषेण वा शिक्षार्थलघुफल-

विशेषेण वा निवर्तेरन् । प्रपन्नस्य प्रारब्धेऽभ्युपगतकालाभ्यन्तरे विपक्वो भवन् कर्मांशोऽनुभवेन, अवान्तरप्रायश्चित्तेन वा नाश्यः । अवशिष्टश्च उपायमाहात्म्येन निवर्तेत । उभयभावनाक्रमेण जातेषु बुद्धिपूर्वोत्तरपुण्येषु प्रतिबन्धकशून्यानि उपासकस्य विद्यानुगुणपूर्वोत्तरपुण्यानि च फलप्रदानेन नश्यन्ति । विद्यानुपयुक्तेषु बुद्धिपूर्वोत्तरपुण्येषु प्रतिबद्धफलानि, विद्योपयुक्तपूर्वोत्तरपुण्येषु अनुकूलप्रतिकूलप्रबलकर्मान्तरफलैर्निरुद्धावसराणि अदत्तफलतयाऽऽधिक्येन स्थितानि चान्तिमकाले निवर्तेरन् । अयमर्थः, "इतरस्याप्येवमसंश्लेषः पाते तु" इति सूत्रेऽभिप्रेतः ।

भगवत्प्रीतिमात्रफलोद्देशेनानुष्ठितानि केवलकैङ्कर्यरूपसुकृतानि तदैव दत्तफलानीति तेषामश्लेषो न वक्तव्यः । लोकसंग्रहार्थविधिनाऽनुष्ठीयमानान्यपि स्वस्य तथैव भगवदाज्ञासिद्धानीति तान्यप्यस्य केवलकैङ्कर्यरूपाणि दत्तफलानि । एषु अनवधानेन सात्त्विकत्यागरहिततयाऽनुष्ठितानां सद्भावे, तानि सर्वाण्यपि, "तान्येव भावोपहतानि कल्कः" इत्युक्तरीत्या पापतुल्यानि "मोक्षयिष्यामि" इत्यस्य विषयाः । फलान्तरार्थं कृतानि प्रपत्त्यन्तराणि दत्तफलानि अपयन्ति । पूर्वप्रपत्तिसाध्यतयोद्दिष्टफलार्थतया पुनः प्रपत्त्यनुष्ठानं महाविश्वाससाहित्येनानुष्ठितपूर्वप्रपत्तिप्रतिसन्धानात् न घटते । अनेकप्रपत्तयोऽप्येकफलसाधनानीति मत्वा अनुष्ठाने कृते उपायान्तरच्छाया स्यात् ।

विद्यामाहात्म्येनैषां कर्मणां विनाशो नाम—ईश्वरेणैतदर्थं प्राप्तस्य फलप्रदानाभिसन्धेस्त्यजनम् । अश्लेषो नाम—एषामाश्रितानां विषयेऽस्य कर्मफलप्रदानाभिसन्धेरनुदयः ।

(सुकृतदुष्कृतयोः सुहृद्दुर्हृत्संक्रमणम्)

इत्थं सर्वकर्मसु निवर्तमानेषु सत्सु सुहृद्भिर्द्विषद्भिश्च विभज्य गृह्यमाणानि कानीति चेत्—अश्लेषविनाशविषयभूतानि, बुद्धिपूर्वोत्तरपुण्येषु कर्मान्तरप्रतिबद्धफलानि च ॥ एतान्युपायारम्भे सुहृत्सु द्विषत्सु चेश्वरः कुतो न संक्रामयति; अन्तिमदशापर्यन्तं प्रतीक्षणं किमर्थं करोतीति चेत्—एषामाश्रितानां विषये कृतस्याऽऽनुकूल्यस्योत्तरकाले विपरीते आचरिते एषां सुकृतानामसंक्रामणार्थम्, आश्रितविषये कृतस्य प्रातिकूल्यस्य पश्चात् क्षमायाचनार्थमवसरदानार्थं चैषामाश्रितानामन्तिमशरीरविश्लेषपर्यन्तमेषां पुण्यपापानि अन्यत्रासंक्रामयन् वर्तते । स्वर्गाद्यर्थसुकृतस्य मुमुक्षुं प्रति पापरूपत्वात् तत् मुमुक्षोः सुहृदि न संक्रान्तं भवति ॥

(संक्रमणतत्त्वम्)

येन केनचित् कृतानां कर्मणामन्येषु केषुचित् संक्रमणं नाम किमिति चेत्—एतस्य कर्तुर्विषये ईश्वरस्य जायमानौ यौ निग्रहानुग्रहौ, तत्समानभूतयोर्निग्रहानुग्रहयोरेतच्छत्रुमित्रविषये उदयः ॥ यैःकैश्चिदनुष्ठितैः कर्मभिरन्येषां येषां केषांचिद्विषये निग्रहानुग्रहयोरुत्पत्तौ सत्यामतिप्रसङ्गः किं न स्यादिति चेत्—एतौ मुमुक्षुविषये अनुकूलप्रतिकूलयोरुपचारापचाररूपे कर्मणी निमित्तीकृत्य जायेते इति

नातिप्रसङ्गः । अत एव किलोदासीनेषु सुकृतदुष्कृतयोर्द्वयोः संक्रमणानुक्तिः । फलसारूप्यमात्रादत्र संक्रमणोपचारः ।

अनया सुकृतदुष्कृतसंक्रान्तिप्रतिपादिकया श्रुत्या ईश्वरस्यात्यर्थप्रियज्ञानिविषये कृताभ्यामुपचारापचाराभ्यां जायमानयोः प्रीतिकोपयोस्तीव्रतमत्वं सूचितं भवति ।

(कर्मत्रैविध्यम्)

"सुदुष्करेण शोचेत् यः" इति श्लोकप्रतिपादितयोजनायां "सर्वपापेभ्यः" इत्येतत् अधिकार्यपेक्षानुरोधेन प्राप्तिविरोधीनि उपायविरोधीनि प्रतिकूलानुभवहेतूंश्च संगृह्णाति । अत्र प्राप्तिविरोधि तावत्—सापराधोऽयमस्माकमनुभविता मा भूदिति भगवतः संकल्पः। उपायविरोधि तावत्—अस्मान् अयं विशदं विज्ञाय वशीकर्ता मा भूदिति संकल्पः । प्रतिकूलानुभवहेतुस्तावत्—तत्तत्प्रतिकूलकर्मानुष्ठानजनितः स स फलप्रदानसंकल्पः । मुमुक्षोर्विषये सर्वे निग्रहाः निवृत्ताश्चेत्, निग्रहकार्या अचित्संबन्धादयो निग्रहनिवृत्तिरूपप्रसादेन निवृत्ता भवन्ति । ततः परं कारणाभावात् कार्याणि प्रतिकूलानि कान्यपि न जायेरन् । इदम् "अनावृत्तिः शब्दात्" इति सूत्रे विवक्षितम् ।

इमे निष्कर्षाः सर्वेऽपि भाष्ये सत्संप्रदायपूर्वकं चिरपरिचयं कृतवतां महाप्राज्ञानां गोचरा भवन्ति ॥

(प्रतिबन्धकनिवृत्तौ भगवत्प्राप्तेः स्वतः प्राप्तत्वम्)

इत्थं "सर्वपापेभ्यो मोक्षयिष्यामि" इति कार्यकारणरूपसमस्तप्रतिबन्धप्रवाहनिवृत्तावुक्तायां स्वतः प्राप्तः परिपूर्णभगवदनुभवा-

विर्भाव उक्त एव भवति । "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ यथोद्पानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इति शौनकभगवान् अनुजग्राह । ज्ञानद्रव्यस्य एतदीय-सर्वविषयविकासौपयिकस्वरूपयोग्यतारूपशक्तेश्च नित्यत्वात् तयोराविर्भावशब्दो मुख्यः । सर्वविषयविकासस्य दुःखनिवृत्त्यादीनां संकल्पादीनां कैङ्कर्याणाश्च आगन्तुकत्वेऽपि एषां निवृत्त-प्रतिबन्धस्वरूपोपाधिकतया अग्रे यावत्कालतत्त्वं संभवस्य द्योतनार्थमेषु, "आविःस्युर्मम सहजकैङ्कर्यविधयः" इत्यादिषु आविर्भावशब्दः प्रयुक्तो भवति । [स्वरूपयोग्यत्वभावात्] कर्मोपाधिकतया बहुविधानुकूल्यप्रातिकूल्ययोः संभवस्याधिकरणभूतानां भगवद्विभूतिभूतानां वस्तूनामग्रे यावत्कालतत्त्वं मोक्षदशायामानुकूल्यस्यैव स्वरूपप्राप्तत्वात् तत्राप्याविर्भावशब्दस्य न विरोधः । अतः "सर्वपापेभ्यो मोक्षयिष्यामि" इत्युक्ते इदमनुकूलावस्थान्तरं सिद्धं भवति ।

एकशब्दस्योपायफलैक्यार्थकत्वे इयमिष्टप्राप्तिरस्मिन् श्लोके सुव्यक्तं प्रतिपादिता भवति । अतः "मामेवैष्यसि" इति पूर्वश्लोके विशदमुक्तोऽर्थोऽत्र प्राप्तिविरोधिनिवर्तनबलात् एकशब्दे विवक्षाविशेषेण चोक्तो भवति । एवंसिद्धे अयं सापेक्षः सन् पूर्वश्लोकस्य शेषो न भवति ।

(कैवल्यविषयकत्वशङ्कापरिहारः)

"सर्वपापेभ्यो मोक्षयिष्यामि" इत्येतावता 'मामेवैष्यसि" इत्युक्ता भगवत्प्राप्तिः कथं नु सिध्येत् ? सर्वपापनिवृत्तौ सत्यामेव, भगवत्प्राप्तिं विनैव स्वात्ममात्रानुभवरूपं कैवल्यं प्राप्नुवन्तः किं न भवन्ति। भगवत्प्राप्तितो भिन्नं कैवल्यम्, "ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम्। कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति॥" इति नारदादिभिरुक्तं किल। श्रीयामुनाचार्या अपि "ऐश्वर्याक्षरयाथात्म्य-भगवच्चरणार्थिनाम्" इति, "संसृत्यक्षरवैष्णवाध्वसु" इति चानुजगृहुः। गद्येऽपि, "सर्वकामांश्च साक्षरान्" इति वाक्यमुपात्तम्। श्रीगीता-भाष्यादिषु चायमर्थः प्रपञ्चितः। अतः 'सर्वपापेभ्यो मोक्षयिष्यामि' इत्युक्ता सर्वपापनिवृत्तिः कैवल्यस्य भगवत्प्राप्तेश्च किं न साधारणी भवति—इत्येतत् मन्दचोद्यम्। कथमिति चेत्—सर्वपापेषु निवृत्तेषु स्वतः प्राप्तं भगवदनुभवं हित्वाऽवस्थाने कारणाभावात् तदा भगवदनुभवरहित आत्ममात्रानुभवो न घटते। अतस्तस्या-मवस्थायामैश्वर्यस्य जरामरणदुःखानां च प्राप्तेः कारणेषु कर्मसु निवृत्तेषु, परिपूर्णभगवदनुभवप्रतिबन्धकेषु कर्मसु अविनष्टेषु सत्सु, "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः" इत्येवंवक्तव्यरूपेणाव-तिष्ठते कश्चित् स्वात्मानुभवानन्दविशेषः। "आत्मार्थी चेत् त्रयोऽप्येते तत्कैवल्यस्य साधकाः" इत्युक्तरीत्या स्वशक्त्येन केनचिदुपायविशेषेण सिध्यतोऽस्यानुभवस्य अचिदनुभवेन भग-वदनुभवेन च सह संबन्धाभावात् कैवल्यमिति नाम चक्रुः।

**भगवत्प्राप्तौ कैवल्यशब्दः सर्वोपाधिनिवृत्तिमभिप्रैति । आत्ममात्रानुभवविषयकेषु** "स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता" इत्यादिषु **प्रयुक्तो मुक्तिशब्दोऽपि** "विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः" इत्यादिष्विव निर्वाह्यः । "जरामरणमोक्षाय" इत्येतदपि **देवानाममरत्वव्यपदेशवदापेक्षिकम्** ; क्रमेण मुक्तिपर्यन्तत भवनरूपं विषयं प्रतिपादयतीति वा । इत्थं **विभवव्यूहसालोक्यादिमात्रे मुक्तिशब्दोऽपि निर्वाह्यः** । 'लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये । अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥" इति **नियमितं** किल । **अत्रोक्तं सायुज्यं परमपदं गतस्य भोगसाम्यम्** ।

**केवलात्मानुभवो नित्यो** नेत्ययमर्थः, **साक्षान्मोक्षो** नेत्ययमर्थश्च, "चतुर्विधा मम जना भक्ता एव हि ते श्रुताः । तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः ॥ अहमेव गतिस्तेषां निराशीःकर्मकारिणाम् । ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः । सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ॥" इति वचनेन सिद्धौ । "मुच्येताऽऽर्तस्तथा रोगाच्छुत्वेमामादितः कथाम् । जिज्ञासुर्लभते भक्तिं भक्तो भक्तगतिं व्रजेत् ॥" इत्युक्तत्वात् श्रीगीतायां "जिज्ञासुः" इत्युक्त **आत्मनिष्ठोऽपि क्रमेण ज्ञानी** भवतीत्युक्तं भवति । [2]"स्थिरेऽभिनिविष्टश्चेत्" इति **भगवदनुभवस्य नित्यत्वोक्तेरेतद्द्वय-**

---

2 मन्नुरिल्—तिरुवाय्मोड़ि-1-2-5

च्छेद्यत्वेनोच्यमान **आत्ममात्रानुभवो नित्यो** नेत्येतद् व्यञ्जितम् । अस्य [3] 'नाशरहितः'' इति गाथादिषु नाशाभावप्रतिपादकं वचोऽपि चातुर्मास्यादिकर्मफलविशेषेष्वक्षय्यत्वोक्तिवत् [4] 'बहुकल्पम्'' इत्युक्तातिचिरकालस्थायित्वाभिप्रायम् । ''योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम्'' इति अस्यात्मानुभवस्य **स्थानविशेषो**ऽप्यभ्यधायि । अयं **स्थानविशेषः परमपदं** नेत्येतत् अस्मिन् **प्रकरणे**, ''एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये । तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः ॥'' इति **भगवत्प्राप्तिकामस्य परमैकान्तिनः सूरिदृश्यस्य स्थानान्तरस्य** प्रतिपादनात् सिद्धम् । **पञ्चाग्निविद्यादिषूक्तं ब्रह्मात्मकस्वात्मानुसन्धानं** कुर्वतां **भाष्यादिष्वर्चिरादिगतिर्ब्रह्मप्राप्तिश्चा**भ्यधायिषाताम् । अत एषां **पञ्चाग्निविद्यानिष्ठानामात्ममात्रानुभवरूपमवान्तरफलं प्राप्तमपि** मधुविद्यान्यायाद् ब्रह्मप्राप्तिपर्यन्तं सम्पद्येत ।

**प्रकृतिसंसृष्टस्य प्रकृतिवियुक्तस्य** वा स्थितस्यात्मवस्तुनो विषये **स्वरूपेण** वा **ब्रह्मदृष्ट्या** वा क्रियमाणानामनुसन्धानानां चतुर्णामाद्युपासनानामिव **अर्चिरादिगतिर्ब्रह्मप्राप्तिश्च** नास्तीत्येतमर्थम् ''अप्रतीकालम्बनान् नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च'' इति सूत्रेऽनुजग्राह । ''श्रुतोपनिषत्कगत्यभिधानाच्च'' इति सूत्रेऽपि क्वचित्

---

3 इरुदिकूडा—तिरुवाय्मोड़ि-6-9-10

4 एनैयूड़ि—तिरुवाय्मोड़ि-6-9-10

विद्याविशेषे उपास्यः परमात्मेत्यस्य अर्चिरादिगतिप्रतिपादनं हेतूकृत्य साधनात् जीवमात्रोपासकस्यार्चिरादिगतिर्नेत्येतत् सिद्धं भवति ।

अतो ब्रह्मप्राप्तिरहितानामस्मिन् श्लोके उच्यमाना सर्वपापनिवृत्तिर्नास्ति । सर्वपापनिवृत्तिमतां ब्रह्मानुभवसंकोचो नास्ति । इत्थमत्र सर्वपापनिवृत्तेः प्रतिपादनेन केवलात्मानुभवकारणस्य परिपूर्णब्रह्मानुभवप्रतिबन्धकस्य कर्मविशेषस्य निवृत्तिसिद्धे "मामेवैष्यसि" इति पूर्वश्लोकोक्तोऽर्थोऽत्र सिद्धो भवति । "मामेवैष्यसि" इत्युक्ता प्राप्तिर्नाम—परिपूर्णानुभवः । अस्य परिपूर्णानुभवस्य सिद्ध्यर्थमर्चिरादिगतिर्देशविशेषप्राप्तिश्च भवतः । अनेन क्रमेणैतदनुभवप्रदानं स्वतन्त्रोऽनादित्वेन नियमितवान् अस्तीत्येषोऽर्थः एतद्गतिविशेषादिप्रतिपादकशास्त्रैः सिद्धः ।

अस्य गतिविशेषस्य सिद्धेः पूर्वं शास्त्रेण ब्रह्मस्वरूपस्य ज्ञानकाले, योगेन साक्षात्कारकाले, विभवलोकादिषु प्राप्तिकाले च जायमानः प्रकाशः सुकृताधीनः करणायत्तश्च भवतीत्यतः परिमितो विच्छेदवांश्च भवति । मुक्तदशायां जायमानः प्रकाशः संकोचविकासकारणस्य कस्याप्यभावात् परिपूर्णविषयः पुनर्विच्छेदरहितश्च भवति । एतदनुभवपरीवाहात्मना "क्रियतामिति मां वद" इत्युक्तरीत्या शेष्यभिमतं परिपूर्णकैङ्कर्यं प्राप्नोति । "पारमार्थिक" इति गद्यवाक्योक्तानि फलपर्वाणि सर्वाण्यपि अत्र यथाप्रमाणं विवक्षितानि भवन्ति ॥

("मा शुचः" इति वाक्यतात्पर्यम्)

इतः परं "मा शुचः" इत्यनेन पूर्वोक्तार्थे यत् फलितं तत् प्रकाशितं भवति। केश्चित्, "मा शुचः" इत्यस्य विधित्वात् प्रपन्नेन सता पश्चाच्छोचनस्य विध्यतिलङ्घनरूपत्वात् एतम् उपायभूतः शरण्य उपेक्षत इति अस्य, स्वकार्यस्य स्वयमेव निर्वाहकः स्यादित्येवंरूपः प्रत्यवायः स्यादि-त्युक्तमपि (क्तम्; तदपि) बुद्धिपूर्वोत्तराघस्यापि "सर्वपापेभ्यः" इत्यत्र समुच्चयं कृत्वा स्वकृतस्य व्याख्यानस्य, प्रपन्नं शरण्यः कथंचिदपि न त्यजेदिति वाक्यस्य च विरुद्धम्। अतः अस्मिन्नुपाये प्रवर्तमानस्य शोकहेतूनां सर्वेषां निवृत्तेर्न शोचितव्यमित्येतदर्थप्रतिपादनेन **विश्वास-दृढीकरणे** [अस्य] तात्पर्यम् [यं भाव्यम्]॥

> बन्धुनाशादयः पूर्वं बहवः शोकहेतवः।
> तत्तत्समुचितैः सम्यगुपदेशैरपोदिताः॥
> सुदुष्करत्वात् धर्माणाम् अपारत्वात् विरोधिनाम्।
> सिद्धः फलविलम्बाच्च शोकोऽद्य विनिवार्यते॥

अभिमतफलार्थं दुष्करसाधनविलक्षणे सर्वविरोधिनिवर्तन-क्षमे फलविलम्बरहितेऽस्मिन्नुपाये उपदिष्टे जाते सति उपाय-दौष्कर्यादिनिबन्धनस्य तव शोचनस्य प्राप्तिर्नास्ति। अस्मिन्नुपाये अनुष्ठिते, त्वत्कार्ये मम भरत्वेनावस्थिते, मयि च फलित्वेनावस्थिते, त्वद्रक्षणे ममावद्यावहे च सति अस्यां दशायां धनादितुल्येन त्वया शोचनस्य किं प्राप्तिरस्तीत्यत्र तात्पर्यम्॥

इह निवर्त्यमानः **शोको यथावस्थितात्मोपदेशादिभिर्नि-वृत्तो बन्धुवधादिनिमित्तः** प्राचीनः शोको न ; किं तु **प्रकरणानुगुणं शोकान्तरम्** । कथम्भूतमिति चेत — यथा "दैवी संपत विमोक्षाय निबन्धायाऽऽसुरी मता" इति विभज्योक्तमात्र एव, 'वयमासुरप्रकृतय-श्चेत , किं कुर्याम' इति शोचन्तमर्जुनं प्रति, "मा शुचः संपदं दैवीम-भिजातोऽसि पाण्डव" इत्युपादेशि—तथाऽत्र श्लाघ्ये **फले तीव्रसङ्गे** प्रवर्तमाने सति, **चिरकालसेव्यम् अन्तरायबहुलम् अत्यन्ताव-हितानामपि कृच्छ्रसाध्यमुपायं** स्वयोग्यताञ्च दृष्ट्वा, 'अस्माकमेतदु-पायपरिसमाप्तिपूर्वकं कुत्र(कथं)**फलसिद्धिर्भ**विष्यति इति शोचतेऽ**र्जुनाय क्षणकालसाध्यं सर्वान्तरायरहितं सुकरमुपायं** प्रदर्श्य तन्मुखेन **फल-सिद्धिविषये निर्भरं निस्संशयं** चाऽऽपाद्य 'मा शुच.' इत्युक्ते, इदमु-**पायान्तरदौष्कर्यादिनिबन्धनजं** शोकं निवर्तयतीत्येतावद्धि[व्यक्तम् ]।

अस्यां **भगवद्गीतायामादौ प्रकृत्यात्मविवेक**मुत्पाद्य, ततः **परम्परया मोक्षकारणभूतौ कर्मयोगज्ञानयोगौ, साक्षान्मोक्ष-कारणत्वेन वेदान्तविहितं भक्तियोगं** च **सपरिकर**मुपदिश्य "इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया । विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥" इत्युपदिष्टमात्र एव अर्जुनस्य मुखे शोकचिह्ने दृष्टे सत्यपि, झटिति लघूपायमनुपदिश्य, "परीक्षां च जगन्नाथः करोत्यदृढचेतसाम्" इत्युक्त-नियममाहत्य, वयम् , 'तव साक्षान्मोक्षसाधनभूतं परमहितमिदम् , इदं प्रधानतयाऽभिप्रेत्यैतदनुरूपं वर्तस्व' इत्यनिगमय्य, "एष पन्था विदर्भाणा-मेष यास्यति कोसलान्" इतिवद् उपेक्षकत्वशङ्कास्पदरूपेण "यथेच्छसि

तथा कुरु" इत्युक्त्वा उपदेशं समापयामेत्येतद् व्याजी(निमित्ती)कृत्य शोकं कृतवानिति विभाव्य, इतः परमपि सकृत् **प्रधानं भक्तियोगं निष्कृष्योपदिश्य पश्येमेत्येवं कञ्चिद्विनोदमभिप्रेत्य पूर्वोपदिष्टं भक्तियोगमेव** "सर्वगुह्यतमं भूयः" इत्यारभ्य द्वाभ्यां श्लोकाभ्याम्, **अत्यादरो** यथा प्रतीयेत तथा सप्रत्यभिज्ञं निष्कृष्य निगमय्य, तावता त्वेतस्य शोकस्य द्वैगुण्येन प्रादुर्भूततामेवावलोकितवान् **सारथिरूपः सर्वेश्वरः**, 'इतः परमयं **परमरहस्यातिलघुमोक्षोपायोपदेशस्य पूर्णपात्रं** समभूत्' इत्यभिप्रेत्य उपदेक्ष्यमाणस्य श्रेष्ठस्य लघूपायस्य प्रशंसनरूपे **कालक्षेपं** कमप्यकृत्वा झटिति **सकलफलसाधनं स्वविषयशरणागतिमुपदिश्यैतदीयमनोरथस्यापि सारथीभूय सर्वमपि शोकं** यतो निवर्तयति, अतोऽत्र निवार्यमाण शोकः प्राचीनशोकेभ्यो विलक्षण इत्ययमर्थः **प्रकरणपरामर्शात् सुव्यक्तः** ॥

(निर्भरत्वनिर्भयत्वनिस्संशयत्वसिद्धिः)

**उपायान्तररहितत्वेनावस्थितमुद्दिश्य** 'मामेकं शरणं व्रज'" इति विधानात्, एतदनुसृत्य **अशक्तेन शक्तस्य** हस्ते **भरसमर्पणस्य** क्रियमाणत्वात् **स्वतन्त्रकारुणिकेन शेषिणा भरस्वीकारस्य** क्रियमाणत्वाच्चास्य **प्रपन्नस्यास्मिन्** श्लोके **पूर्वार्धे निर्भरत्वम्, सर्वशक्तिना स्वीकृतभरेणाऽऽश्रितविषये सत्यवादिना शेषिणा** "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि" इत्यनुगृहीतत्वात् **न्यस्तभरस्यास्येतः परमागामिनरकादिप्रत्यवायशङ्काप्रसंगाभावात् निर्भयत्वम्**, अस्य

श्लोकस्य [5]"आर्त्तत्रवता श्रीरङ्गनाथेन स्वयं समुपदिष्टसत्यमहावार्ता" इत्येवं-रूपत्वान्निःसंशयत्वं च फलितम् ॥ अतोऽत्रोपायविशेषश्रवणानुष्ठानयोः संपत्तावुपायानुबन्धितया(फलानुबन्धितया च)जायमाने शोके प्राप्तिर्नास्तीति प्रोच्यते ।

(शोकाविष्टत्वस्येव भयाविष्टत्वस्यापि प्रपत्त्यधिकारत्वम्)

अनेन शोकविशेषाविष्टः प्रपत्तेरधिकारीति प्रतीयमाने सति, "अहं भीतोऽस्मि" इति, [6]"पापिन् परिरभस्वेति वचनाद्भीतो हे विश्वसनीय ! एत्य त्वच्चरणावाश्रितोऽस्मि" इति च भीतः प्रपत्तेरधि-कारीति कथनं कथमिति चेत—प्राक्तनीमभिमतसिद्धिराहित्येनावस्थितां दशां वीक्ष्य शोकस्य अग्रेऽभिमतप्रतिबन्धकानां प्रबलविरोधिनां दर्शनेन भयस्य चानुवर्तमानतया, मुमुक्षोरनिष्टनिवृत्तीष्टप्राप्त्योरन्यतराभिधाने-ऽप्युभयोः प्राप्तिवत्, अधिकारेऽपि भयशोकयोरन्यतरस्याभिधाने-ऽप्युभयं सिध्येत् । अत्यन्ताकिञ्चनस्येमौ भयशोकावुभावपि अति-शयितौ भवतः । अतोऽत्रातिशयितशोकाविष्टस्याधिकारिविशेषस्य अनुगुणमुपायविशेषं प्रदर्श्य एतं निस्संशयं निर्भरं निर्भयं हृष्टमनसं चाऽऽपाद्य समाप्यते । इदमतिशयितभयमभिप्रेत्य, "[7]भीतस्त्वं मामश्रयेत्यूचिवान् आययौ" इत्यवोचाम ।

---

5 शेम्मैयुडैय तिरुवरङ्गरताम् पणित्त मेय्मैप्पेरुवार्त्तै—नाच्चियार् तिरुमोड़ि-11-10

6 पावि तड्वेन मोड़िवदर्कञ्जि नम्बने वन्दुन् तिरुवडि यडैन्देन्—पेरियतिरुमोड़ि-1-6-4

7 अञ्जिन नी एन्नैयडै एन्रार् वन्दार्—तिरुच्चिन्नमालै-8

(प्रपन्नस्य हृष्टमनस्त्वसमर्थनम्)

इत्थं कृतकृत्यस्यास्य "तत्तु कर्म समाचरेत्" इति विहितं कर्तव्यान्तरं कैङ्कर्यानुप्रविष्टसदाचारविशेष इत्येतत् पूर्वापर-ग्रन्थाभ्याम्, अस्मिन् श्लोक एव "अक्रियावदनर्थाय" इत्युक्त्या च सिद्धम्। अतोऽग्रे फलसिद्धौ संशयाभावान्मोक्षोपायत्वेन कस्य चित् कर्त-व्यशेषस्याभावात् अस्येहत्यकर्तव्यस्याऽऽज्ञानुपालनस्वयंप्रयोजनभावात् अपराधे प्रसक्तेऽधिकारान्तरोक्तरीत्याऽनुतापादिभिः सुपरिहरत्वाच्च अस्य हृष्टमनस्त्वसंपत्तेर्न कापि क्षतिः ॥ अयं हर्षो विवेकिनो हेयशरीरादिसंबद्धस्यास्य निर्वेदमिश्र एव यद्यपि, तथाऽपि अस्य निर्वेदस्यास्याः शोकनिवृत्तेश्च भिन्नविषयत्वान्नास्ति विरोधः ॥

(आर्तदृप्तयोः प्रपन्नयोः फलसिद्धिप्रकारः)

शोकनिमित्तस्य सर्वस्य मोचनीयत्वे "मा शुचः" इत्येतस्यैव नियामकत्वात् प्रारब्धकर्मण्यपि शोकनिमित्तांशस्य सर्वस्य निवृत्तेः आर्त्यतिशयवतस्तदैव मोक्षः सिध्यति। "[8]मरणे जाते वैकुण्ठपद उप-कारकः" इत्याद्युक्तरीत्या प्रारब्धकर्मण्यप्यग्रिमस्य सर्वस्य निवृत्तावेत-च्छरीरावसाने मोक्ष इत्यभ्युपगन्तव्यतया अस्मिन् शरीरेऽप्यायुः—शेषस्यानिष्टत्वे अयमपि प्रपत्तिवशीकृतसर्वशक्तिसंकल्पेन निवर्ततेत्यत्र नास्ति हि दोषः।

प्रायश्चित्तविशेषेषु सर्वस्वारादिकेषु च।
नात्महिंसनदोषोऽस्ति तथाऽऽर्तशरणागतौ ॥

8 मरणमानाल् वैकुन्दं कोडुक्कुं पिरान्—तिरुवाय्मोऴि-9-10-5

दृप्तस्य तु यथाशास्त्रं चिरं जीवितुमिच्छतः ।
प्राणरक्षणशास्त्रार्थलङ्घनं त्वपराधनम् ॥

योगिभिर्योगविशेषेण देहन्यासकरणवत् आर्त्यतिशयवता प्रपत्त्या देहन्यासकरणस्य तीर्थप्रवेशादिष्विव युगविशेषनियमो नास्ति । अयमार्तप्रपन्न एव सर्वेभ्योऽपि झटिति आत्मरक्षणकारी । इत्थमार्तो दृप्त इति विभागोऽपि एतस्य जाते शोके वैषम्यं निमित्तीकृत्योच्यत इत्येतावदेव ; न त्वेकस्य शोकाभावम् (निमित्तीकृत्योच्यते) । जन्मान्तरादिमात्रे शोकनिमित्ततयाऽवस्थिते सति, यस्मिन् कस्मिश्चिद्दिने मोक्षं प्राप्स्यामीति समाश्वस्ततया वर्तमानोऽत्र दृप्तः ; न तूत्कृष्टजनावमानादिहेतुभूतगर्वरूपानात्मगुणवान् । अस्मिन् शरीरे चतुर्मुखैश्वर्ये लब्धेऽप्यस्य परिपूर्णभगवदनुभवविरोधित्वादस्मिन् वर्तमानदेहसंबन्धेऽपि महाग्निवद् दुस्सहे सति, "[9]देहप्राणयोर्नाशमनुमन्यस्व" इति यथोच्येत तथा प्रपत्त्यनुष्ठानानन्तरं क्षणमात्रविलम्बस्याप्यक्षमः आर्तप्रपन्नः ; न तु "आर्तो जिज्ञासुरर्थार्थी" इत्यत्रोक्तो यः । "आर्तो वा यदि वा दृप्तः" इत्ययमतिवाद इति वदद्भिरप्यत्रास्यामर्थस्थितौ विवादः कर्तुं न युज्यते । उपायानुष्ठानोत्तरकाल एव फलसिद्धेः, अस्योपदेशवेलात्वाच्चास्याऽऽर्तस्य विषयेऽपि "मोक्षयिष्यामि" इति भविष्यन्निर्देशस्य न क्षतिः । इमे आर्तदृप्तादिविभागाः सर्वेऽपि सुकृततारतम्यमूलकभगवदनुग्रहतारतम्यात् जायन्ते । "प्रारब्धमात्रभुक् तत्र तत्त्ववित् सुखमाप्नुयात्" इत्यादिवचनानि आर्तप्रपन्नविषये

---

9 उडलुमुयिरुं मङ्गवोट्टु—तिरुवाय्मोऴि-10-7-9

निरवकाशानि । दृप्तप्रपन्नविषये उत्तरकृत्यांशगोचरं "मा शुचः" इति वाक्यस्य भावम् "आध्यात्मिकाधिभौतिक" इत्यारभ्य "अतस्त्वं तव तत्त्वतो मज्ज्ञानदर्शनप्राप्तिषु निस्संशयः सुखमास्स्व" इत्यनुजग्राह । अत्रोच्यमानायाः शोकनिवृत्तेः कयाऽपि विधया संकोचकस्याभावात् एतदुपायविशेषज्ञानेनानुष्ठानेन च सर्वप्रकारशोकहेतूनां निवृत्तिरुक्ता भवति । अनुष्ठानपर्यन्तताहीनस्य ज्ञानमात्रस्यानेनोपदेशेन जातत्वेऽपि, "न गाथा गाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥" इत्युक्तन्यायेन निष्प्रयोजनत्वात् ज्ञानानुष्ठानयोरुभयोरपि फलभूता शोकनिवृत्तिः सर्वाऽप्यत्र विवक्ष्यते ।

(अत्र दशविधशोकनिवृत्तेः प्रतिपाद्यत्वम्)

अत उपायानुष्ठाने पूर्वापरमध्यदशा आश्रित्य संभाविताः शोकाः सर्वेऽप्यत्र निवर्त्यन्ते । कथमिति चेत् — अधिकारविशेषमुत्तरकृत्यविशेषं परिपूर्णकैङ्कर्यपर्यन्तफलसिद्धिं चाऽऽश्रित्य बहुधा शोकः संभावितः । तत्र—

(1) अनुष्ठास्यमानस्य शरणागतिधर्मस्य जातिवर्णाश्रयादिविशेषनियतत्वाभावात् प्राप्यरुचौ, प्रापकविश्वासे, आकिञ्चन्यज्ञानादिषु च सत्सु 'वयमस्य नाधिकारिणः' इति न कैश्चिदपि शोचितव्यम् ।

(2) अयमुपायविशेषः परिकरैः सह क्षणकालसाध्यः सुकरः आवृत्तिनिरपेक्षः उपायान्तरव्यवधान-दुष्करपरिकरान्तराभ्यां शून्यः उद्दिष्टकालेऽपेक्षितसर्वफलप्रदानसमर्थश्चास्तीत्यतः, आकिञ्चन्यं

फलविलम्बभयं च विश्रद्धिरस्माभिः सपरिकरं चिरकालानुवर्तनीये अत्यन्तावहितैरपि कृच्छ्रसाध्ये तथाविधपरिकरान्तरसापेक्षे फलविलम्बवति उपायान्तरे किं श्रमितव्यमिति न शोचितव्यम् ।

(3) इत्थं लघूपायमात्रेण वशीकार्यस्य फलं प्रदास्यतः शरण्यस्य सर्वसुलभतया विश्वसनीयतमतया परमकारुणिकतया निरङ्कुशस्वातन्त्र्यतया चावस्थितत्वात् सिद्धोपायविषये न शोचितव्यम्।

(4) एतदुपायानुष्ठानानन्तरमाज्ञानुज्ञाभिः क्रियमाणानां सत्कर्मणां सर्वेषामेतत्प्रपत्त्यङ्गत्वाभावात् तेषां देशकालादिवैगुण्येन केषाञ्चित् वैकल्यानां संभवेऽपि, उपासनस्येवास्यापि किं परिकरवैकल्यं भवतीति न शोचितव्यम् ।

(5) भगवत्कैङ्कर्याद्यनर्हताऽऽपादकबुद्धिपूर्वमहाभागवतापचारोत्पादनपूर्वकं दग्धपटवद्भावापादनसमर्थात् प्रारब्धफलात् पापविशेषाद्भयेन प्रथमप्रपत्तिकाले वा पश्चात् सकृत् तदर्थं प्रपत्तिं कृत्वा वा निरपराधस्योत्तरकृत्यस्यापेक्षणे, पाश्चात्यापराधप्रसङ्गमुद्दिश्य न शोचितव्यम् ।

(6) इत्थं निरपराधमुत्तरकृत्यमनपेक्षितवतां पश्चादबुद्धिपूर्वापराधस्योपनतावपि "न त्यजेयं कथञ्चन" इत्यवस्थित्यर्हेण[अशरण्य] शरण्येनास्यानुतापमुपजनय्य पुनःप्रपत्तिरूपे प्रायश्चित्तविशेषे प्रवर्तनेन, तस्यापि त्यजनार्हकठिनप्रकृतीनां शिक्षारूपोपक्लेशमात्रप्रदर्शनपूर्वकम्, अग्रेऽपराधो यथा न क्रियेत तथा निवारणेन च उद्दिष्टात्

फलप्राप्तिकालात्प्रागेवानघत्वापादनात् प्रपन्नस्य विद्युद्द्योतवदाविर्भूय स्थायितां विजहद्भिर्बुद्धिपूर्वापराधलेशैः, नरकादिमहाक्लेशा उपनमेयुश्चेत् किं क्रियतामित्याशङ्क्य न शोचितव्यम् ।

(7) **आर्तप्रपन्नविषये** तदैव फलसिद्धेः संभवात्, "देहे चेत् प्रीतिमान् मूढो भविता नरकेऽपि सः" इत्युक्तरीत्या नरकतुल्यमिदं शरीरं किमनुवर्ततेति न शोचितव्यम् ।

(8) दृप्तप्रपन्नस्यापि उद्दिष्टकालपर्यन्तं विलम्बेऽपि, **कर्मयोगप्रभृतीनां निवृत्तिधर्माणां** सर्वेषाम्, "नेहाभिक्रमनाशोऽस्ति" इत्याद्युक्तरीत्या कृतायाः चितेः शिलाचितिरूपत्वात्, एतं शरणागतमुद्दिश्य विशिष्य, "न त्यजेयं कथंचन" इत्युक्तत्वाच्च फलसिद्धौ संशयाभावात्, "यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् । आयुर्विप्रपरीवादात् दानं च परिकीर्तनात् ॥" इत्याद्युक्तरीत्या सुकृतनाशकतयाऽवस्थितैः कैश्चिद्दुष्कृतैरस्य प्रपत्तिरूपस्य सुकृतस्य नाशे फलालाभे किं क्रियतामिति न शोचितव्यम् ।

(9) **एतच्छरीरानन्तरं** मोक्षः प्राप्तव्य इति कालस्य निर्दिष्टत्वात्, जन्मान्तरादिहेतुभूतप्रारब्धकर्मविशेषैरस्माकं जन्मान्तरोपनतौ किं क्रियतामिति न शोचितव्यम् ।

(10) **अनन्यप्रयोजन**तया प्रपन्नस्यास्य **प्रतिबन्धकानां सर्वेषां पापानां** निवृत्तेः, **केवलात्मानुभवादिभिरन्तरायैः परमफलस्य विलम्बः** किं भविष्यतीति न शोचितव्यम् ॥

इत्थं **सर्वप्रकाराः शोकहेतवो** यथा निवृत्ता भवेयुस्तथा **ममानुग्रह-विषयभूतेन** त्वया इतः परं शोचनं तावत्, पूर्वं निग्रहविषयभूततया स्थितिदशायामशोचनवत् अनिपुणकृत्यं सत् **अस्योपायविशेष-वैलक्षण्यस्य**, रक्षणभरं स्वस्मिन् आरोप्य वहतः **सिद्धोपायभूतस्य** मम **प्रभावस्य**, मत्सन्निधौ **सर्वभरन्यासं** कृत्वा **कृतकृत्य**तयाऽवस्थितस्य तव दशायाश्च नानुरूपमिति तात्पर्यम् ॥ इत्थं **चरमश्लोके सारतमस्य** "मा शुचः" इति **चरमवाक्यस्य तात्पर्यं स्वचरमदशायामाचार्याः सच्छिष्येभ्य** उपदिशेयुः ।

(चरमश्लोके पदक्रमेणानुसन्धेया अर्थाः)

अस्मिन् श्लोके पदेषु क्रमेण—अधिकारविशेषः, आकिञ्चन्य-पुरस्कारः, दुष्करपरिकरान्तरनैरपेक्ष्यम्, अशक्यप्रवृत्त्यनौचित्यम्, दुष्कराभिनिवेशवैयर्थ्यम्, उपायविशेषस्य परसंसर्गासहत्वम्, मुमुक्षोः शरण्यविशेषः शरण्यस्य सुलभत्वसुशीलत्वादिगुणपूर्णत्वं हिततमोपदेशित्वं प्राप्यस्यैव प्रापकत्वं निरपेक्षसर्वविषयनिष्प्रत्यूहकर्तृत्वं व्याजमात्रप्रतीक्षत्वम् उपायान्तरव्यवधाननिरपेक्षत्वं परिकरान्तरनिरपेक्षप्रसाद्यत्वं सर्वफलार्थि-शरण्यत्वं शरण्यान्तरपरिग्रहासहत्वं शरण्यवैशिष्ट्यम्, उपायान्तरस्थान-निवेश्यत्वं भरस्वीकर्तृत्वं भरन्यासरूपसाध्योपायविशेषः, तस्य परिकराः, सर्वाधिकारत्वं सकृत्कर्तव्यत्वं सुकरत्वम् अविलम्बितफलप्रदत्वं प्रारब्ध-कर्मनिवर्तनक्षमत्वम्, अधिकारिणः पराधीनकर्तृत्वं शास्त्रवश्यत्वम् रक्षकस्य परमकारुणिकत्वं सुप्रसन्नत्वं निरङ्कुशस्वातन्त्र्यं दुर्निवारत्वं परानपेक्षत्वम्, अवसरप्रतीक्षत्वम्, शरणागतस्य कृतकृत्यत्वं परिगृहीतोपायतत्फलविषये

कर्तव्यान्तरे प्राप्तिराहित्यं भगवदत्यर्थप्रियत्वं त्रैकालिकविरोधिभूयस्त्वं विरोधिवर्गवैचित्र्यम् , तेषामीश्वरसंकल्पमात्रनिवर्त्यत्वं प्रपन्नेच्छानिवृत्तौ विरोधिनिवृत्तिकालः, विरोधिनिवृत्तिस्वरूपम् , आत्मकैवल्यव्यावृत्तयथावस्थितस्वरूपाविर्भावः, परिपूर्णभगवदनुभवः, सर्वविधकैङ्कर्यम् , अपुनरावृत्तिः, प्राक्तनं शोकहेतुप्राचुर्यम् , पश्चात् शोकप्राप्तिराहित्यम्, सर्वस्मिन्नपि विमर्शकाले निस्संशयत्वं शोकनिवृत्तिः निर्भयत्वं हर्षविशेषः शरीरपातकालप्रतीक्षत्वं निरपराधकैङ्कर्यरसिकत्वम्—इत्येतेऽर्थाः प्रधानरूपेण अन्ये चैतदपेक्षिताः सर्वेऽपि शब्दशक्त्याऽर्थस्वभावेन चानुशिष्टाः ॥

(चरमश्लोकस्य सम्पिण्डितार्थः)

**अल्पज्ञोऽल्पशक्तिः परिमितकालवर्ती विलम्बक्षमता**राहित्येन चावस्थितस्त्वं स्वेन ज्ञातुमनुष्ठातुं चाशक्येषु **फलविलम्बवत्सु उपायान्तरे**ष्वपरिभ्रमन् **सर्वसुलभं सर्वलोकशरण्यं शरण्यत्वोपयुक्तसर्वाकारविशिष्टं** मामेकमेवोपायत्वेनाध्यवस्यन् **अङ्गपञ्चकसंपन्नमात्मरक्षाभरसमर्पणं** कुरु । एवमनुष्ठितोपायं **कृतकृत्यं** मद्रक्ष्यवस्तुभूतमत्यर्थप्रियं[यतमं] त्वां **परमकारुणिकः सुप्रसन्नो निरङ्कुशस्वातन्त्र्यः स्वार्थप्रवृत्तो**ऽहमेव मत्संकल्पमात्रमेव सहायं कृत्वा बहुप्रकाराणामनन्तानां दुरत्ययानां **सर्वविधविरोधिवर्गा**णामपुनस्संबन्धसंभावनं यथा तथा संबन्धं विच्छिद्य मन्निर्विशेषं मदीयानाम् अस्मास्मीयानां सर्वेषामनुभवात् **तुल्यभोगं** कृत्वा **परिपूर्णानुभवपरीवाहरूपं सर्वदेशसर्वकालसर्वावस्थोचितं सर्वविधकैङ्कर्यमपि** दत्त्वा प्रीयेय । त्वया **कस्यापि कृते न शोचितव्यम् इति चरमश्लोके समुदितो**ऽर्थः ॥

एकं सर्वप्रदं धर्मं श्रिया जुष्टं समाश्रितैः ।
अपेतशोकैराचार्यैरयं पन्थाः प्रदर्शितः ॥

(अधिकारार्थसंग्राहिका गाथा)

[1]सावधानमनुष्ठेयैर्धर्मैः रहिताः तस्य गोपालस्य सुगन्धितुलसीयुक्तौ चरणौ परमार्थोपाय इति त्वरया समाश्रित्य—वियोजितः पापसमूहो यथा पश्चान्नानुवर्तेत तथा अभिपद्य प्रतिरुध्य वशीकारे व्यापृतेन तेषां महतां सुदृढकृपावचनेन निवृत्ताज्ञानाः स्मः ॥

व्यासाम्नायपयोधिकौस्तुभनिभं हृद्यं हरेरुत्तमं
श्लोकं केचन लोकवेदपदवीविश्वासितार्थं विदुः ।
येषामुक्तिषु मुक्तिसौधविशिखासोपानपङ्क्तिष्वमी
वैशम्पायनशौनकप्रभृतयः श्रेष्ठाः शिरःकम्पिनः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे
चरमश्लोकाधिकारः

—०—०—

इति—पदवाक्ययोजनाभागस्तृतीयः

श्रीमते निगमान्तमहादेशिकाय नमः

---

1 कुरिप्पुडन् मेवुं तरुमङ्गलिन्रि यक्कोवलनार्
वेरित्तुलव ककड्ल् मेय्यरणेन्रु विरैन्दडैन्दु
पिरित्त विनैत्तिरल् पिन्नोडरावगै यप्पेरियोर्
मरिप्पुडै मन्नरुल् वाचकत्ताल् मरुलर्रोनमे.

श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

अथ संप्रदायप्रक्रियाभागश्चतुर्थः । तत्र

—०—०—

## आचार्यकृत्याधिकारः

**अधिजिगमिषुराद्यं धाम दिव्यं त्रिधाम्नः**
**श्रुतविविधपरीक्षाशोधिते क्वापि पात्रे ।**
**अनघगुणदशायामाहितस्नेहमार्यः**
**प्रदिशति निरपायं संप्रदायप्रदीपम् ॥**

इत्थम्, "गुरुर्गरीयान्" इति, "तमिमं सर्वसंपन्नमाचार्यं पितरं गुरुम्" इति चोक्तरीत्या **परमाचार्यात् सर्वेश्वरादारभ्य सदाचार्यसंप्रदायसमागतान् सिंहीस्तन्यवत्** विजातीयाविज्ञातरसान् **रहस्यत्रयार्थान् संग्रहेण समुच्चित्य स्वयमनुसन्धाय,** "यो गोपायत्ययोग्यानां योग्यानां संप्रयच्छति । इममर्थं स मान्यो मे स्वस्ति वोऽस्तु व्रजाम्यहम् ॥", "इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयम् ॥", "नावेदनिष्ठस्य जनस्य राजन् प्रदेयमेतत् परमं त्वया भवेत् । विवित्समानस्य विबोधकारकं प्रबोधहेतोः प्रणतस्य शासनम् ॥ न देयमेतच्च तथाऽनृतात्मने शठाय क्लीबाय न

जिह्मबुद्धये । न पण्डितज्ञाय परोपतापिने देयं त्वयेदं विनिबोध यादृशे ॥ श्रद्धान्विताथाथ गुणान्विताय परापवादाद्विरताय नित्यम् । विशुद्धयोगाय बुधाय चैव क्रियावतेऽथ क्षमिणे हिताय ॥ विविक्तशीलाय विधिप्रियाय विवादभीताय बहुश्रुताय । विजानते चैव तथा हितक्षमादमाय नित्यात्मसमाय देहिनाम् ॥ एतैर्गुणैर्हीनतमे न देयमेतत् परं ब्रह्म विशुद्धमाहुः । न श्रेयसा योक्ष्यति तादृशे कृतं धर्मप्रवक्तारमपात्रदानात् ॥ पृथ्वीमिमां यद्यपि रत्नपूर्णां दद्यात् न देयं त्विदमव्रताय । जितेन्द्रियायैतदसंशयं ते भवेत् प्रदेयं परमं नरेन्द्र ॥ कराल मा ते भयमस्तु किञ्चिदेतत्परं ब्रह्म श्रुतं त्वयाऽद्य । यथावदुक्तं परमं पवित्रं विशोकमत्यन्तमनादिमध्यम् ॥", "विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना । आपद्यपि च घोरायां न त्वेनामिरिणे वपेत् ॥" "मूर्खाश्च पण्डितम्मन्या अधर्मा धार्मिका इव । धर्मयुक्तान् प्रबाधन्ते साधूनां लिङ्गमास्थिताः ॥ एकतस्त्वपवर्गार्थमनुष्ठानादिकौशलम् । लोकानुसारस्त्वेकत्र गुरुः पश्चादुदीरितः ॥ भवन्ति बहवो मूर्खाः क्वचिदेको विशुद्धधीः । त्रासितोऽपि सदा मूर्खैरचलो यः स बुद्धिमान् ॥ न विश्वासः क्वचित् कार्यो विशेषात् तु कलौ युगे । पापिष्ठा वादवर्षेण मोहयन्त्यविचक्षणान् ॥ गोपयन् आचरेद्धर्मं नापृष्टः किञ्चिदुच्चरेत् । पृष्टोऽपि न वदेदर्थं गुह्यं सिद्धान्तमेव च ॥ आश्रितायातिभक्ताय शास्त्रश्रद्धापराय च । न्यायेन पृच्छते सर्वं वक्तव्यं शौचयोगिने ॥ आत्मपूजार्थमर्थार्थं दम्भार्थमपि खिन्नधीः । अयोग्येषु वदन् शास्त्रं सन्मार्गात् प्रच्युतो भवेत् ॥ ऊषरे निवपेत् बीजं षण्डे कन्यां प्रयोजवेत् । सृजेद्वा वानरे मालां नापात्रे शास्त्रमुत्सृजेत् ॥"

"न नास्तिकायानृजवे नाभक्ताय कदाचन। नैव हिंसाभिरुचये न लुब्धाय विशेषतः ॥ दातव्यो मन्त्रराजोऽयं मन्त्रोऽयं हि न तादृशः। ऋजवे गुरुभक्ताय वैष्णवाय विशेषतः। सर्वप्राण्यनुकूलाय दातव्यो देशिकेन तु ॥" [1]"दासानाममृतभोजनाय वाङ्माला अवदम्", [2]"अन्तादिरूपेण (गाथाः) निवेश्यावेदयं गभीरार्थान्, यथा (अस्थले) न श्रश्येयुः तथा निर्धार्य धारयत" इति **श्रीसात्त्वत-भगवद्गीता-वसिष्ठकरालसंवाद-शाण्डिल्यस्मृति-सात्यकितन्त्राद्युक्त**रीत्या शरण्यानुमत्यर्हेभ्यः **सात्त्विकताऽऽस्तिक्यादिगुण**शालिभ्यः, "अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ तेजः क्षमा धृतिः शौचं सन्तोषो नातिमानिता। भवन्ति संपदं दैवीमभिजातस्य भारत ॥" इति, द्विविधो भूतसर्गोऽयं दैव आसुर एव च। विष्णुभक्तिपरो दैवः" इत्युक्त**दैवप्रकृतिभ्यः**, "संवत्सरं तदर्धं वा मासत्रयमथापि वा। परीक्ष्य विविधोपायैः कृपया निस्स्पृहो वदेत् ॥ यदृच्छयोपसन्नानां देशान्तरनिवासिनाम्। इष्टोपदेशः कर्तव्यो नारायणरतात्मनाम् ॥" इत्याद्युक्त**परीक्षादिमूलकगुणनिश्चयपूर्वकं** "श्रुतादन्यत्र संतुष्टस्तत्रैव च कुतूहली" इत्युक्तायाम**वस्थायामष्टकर्ण**मुपदिश्य, "दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च। अज्ञानं चाभि-

---

1 तोण्डर्कमुदुण्ण च्चोल्मालैकल् शोन्नन्—तिरुवाय्मोऴि-9-4-9

2 अन्तादिमेलिट्टरिवित्तेन् आऴ्पोरुलै शिन्दामर्कोलिमनीर्तेन्दु नान्मुकन् तिरुवन्तादि—1

जातस्य पार्थ संपदमासुरीम् ॥" इति, "विपरीतस्तथाऽऽसुरः" इति चोक्तेभ्य आसुरप्रकृतिभ्यो गोपयित्वा, श्रेष्ठधनाः यथा संरक्ष्य जीवन्ति तथा चरितार्था अवर्तन्त पूर्वाचार्याः ॥

(उपदेशसंग्रहः)

एते, 'देहेन्द्रियादिव्यतिरिक्ततया नित्यतया चावस्थितः कश्चिदात्माऽस्ति। एतच्चेतनाचेतनोभयव्यतिरिक्तः एतयोरन्तर्यामितया चावस्थितः कश्चित् परमात्माऽस्ति । एतं परमात्मानं विहायास्य जीवात्मनः स्वात्मा परे च रक्षका न भवन्ति' इति तत्त्वम्, 'अनादेः कालादन्तादिरूपेण संसरतो दासस्य ममेतः परं यथा कश्चिदपि गर्भवासादिक्लेशो न स्यात्—तथा श्रीचरणौ दत्त्वा रक्षा कार्येति आचार्यप्रसादितगुरुपरम्परापूर्वकद्वयेन श्रीमतो नारायणस्य श्रीचरणौ शरणत्वेनाऽऽश्रित्य, आत्मात्मीयानां तदनुबन्धिभराणां च तत्र समर्पणं कार्यम्' इति हितम्, 'सदाचार्येण प्रदर्श्य प्रत्तं गृहीतवान् श्रीभगवान् इतः परमस्मान् न कथंचिदपि त्यजेदिति समाश्वासेन सह इह जीवनकालेऽपवर्गपूर्वरङ्गभूतनिरपराधानुकूलवृत्त्या सह वर्तितव्यम्' इत्युत्तरकृत्यं च संग्रहरुचिभ्यः संग्रहेणोपादिशन् ॥

प्रत्येयस्तु (प्रत्यग्वस्तु) विलक्षणः (णं) प्रकृतितस्त्राता पतिस्तत्परः<br>
तस्मिन्नात्मभरार्पणं हिततमं तच्छेषवृत्तिः फलम् ।<br>
इत्थं तत्त्वहिते पुमर्थ इति नस्त्रेधा विभक्तं धनं<br>
दायत्वेन दयाधनाः स्वयमदुर्दत्तात्मनां देशिकाः ॥

(एतद्ग्रन्थयाथात्म्यम्)

इत्थं रहस्यत्रयविषयकाणि पूर्वाणि पराणि च वचांसि सर्वाणि वेदान्तोदयनसंप्रदायभूतां महानसवार्तामाचार्यसन्निधौ स्वयं श्रुत्वा श्रीवादिहंसाम्बुदाचार्येषु तथैव दासस्य मम शुकस्याभ्यासतुल्यमभ्यासं कारितवत्सु सत्सु तदन्तःकरणस्थं कारुण्यं निमित्तीकृत्य भगवता सुविशदं प्रकाश्य विस्मरणानास्पदतया संरक्ष्य निर्दोषं प्रवाचितानि वाक्यानि ॥

[1]गानाधिकृतानां पूर्वेषां त्रयाणां पूर्वं कदाचित् स्वविभूतिषु कृपां कुर्वताऽऽश्चर्यचेष्टितेनाधिकं पीडनात्——लोकस्यान्धकारो यथा नश्येत् यथा च चतुर्वेदान्तमार्गः प्रकाशेत——तथा गृहदेहलीस्थः स [सदर्थं] प्रकाशयति सत्यदीपः ॥

[2]अज्ञानरहिताः देशिकाः परमव्योमजिगमिषया, एते लोकाः सर्वेऽपि निवृत्ताज्ञानाः स्वामिनश्चरणद्वन्द्वमाश्रयन्त्विती च्छया ज्ञानयुक्त-समीचीनानुष्ठानसंपद्धाः श्लाध्येषु [शिष्येषु] कृपायुक्तया चिन्तया अविनश्वरं दीपमारोपयन्ति स्म ॥

---

1 पाट्टुक्कुरिय पडैयवर् मूवरैप्पण्डोरुकाल्
माट्टुक्करुल् तरुमायन् मलिन्दुवरुत्ततलाल्
नाट्टुक्किरुल् शेक नान्मरैयन्दिनडैविलङ्ग
वीट्टुक्किडैकड़िक्के वेलिकाट्टुमम् मेय्विलक्के.

2 मरुलर्ट्रदेशिकर् वानुकप्पालिन्दवैयमेल्लाम्
इरुलर्ट्रिरै वनिणैयडि पूण्डुय वेण्णुदलाल्
तेरुलर्ट्र शेन्तोड़िर् शेल्वं पेरुकि च्चिरन्दवर्पाल्
अरुलुर्ट्र शिन्दैयिनालँड़िया विलक्केर्ट्रिनरे.

निरवधिदयादिव्योदन्वत्तरङ्गनिरङ्कुशै-
र्नियमयति यः शिष्यान् शिक्षाक्रमैर्गुणसंक्रमैः ।
अचरमगुरोराज्ञापारम्परीपरवानसौ
न परमिह तांस्तल्लक्षेण स्वमप्यभिरक्षति ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीरहस्यत्रयसारे
आचार्यकृत्याधिकारस्त्रिंशः

श्रीमते निगमान्तमहादेशिकाय नमः

——o—o

श्रीः

## शिष्यकृत्याधिकारः

अशिथिलगुरुभक्तिस्तत्प्रशंसादिशीलः
प्रचुरबहुमतिस्तद्वस्तुवास्त्वादिकेऽपि ।
गुणवति विनियोक्तुं गोपयन् संप्रदायं
कृतविदनघवृत्तिः किं न विन्देन्निधानम् ॥

(प्रत्युपकारस्याशक्यत्वम्)

एषामर्थानां सर्वेषाम्, परमदरिद्रस्य गृहाभ्यन्तर एव महानिधेः प्रदर्शनवत् प्रकाशनात् परमोपकारकभूतस्याचार्यस्य विषये शिष्येण कृतज्ञेन भाव्यमिति, द्रोहमकुर्वता भाव्यमिति च शास्त्रोक्तमपि,

विभूतिद्वयेन विभूतिमता च, मा भूदयं छी छी इति वचनीयः, मा च हितवादिप्रह्लादविभीषणादिप्रतिकूलहिरण्यरावणादितुल्यः, "विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः । त एते बहुपाप्मानः सद्यो दण्ड्या इति श्रुतिः ॥" इत्युक्तरीत्या दण्ड्यश्च मा भूत् इत्येतावत्परमेव ; न तु प्रत्युपकारप्रतिपादनपरम् ।

"शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत्" इति, "सर्वस्वं वा तदर्धं वा तदर्धार्धार्धमेव वा । गुरवे दक्षिणां दद्यात् यथाशक्त्यपि वा पुनः ॥" इत्येवंरीत्योच्यमानमपि प्रणिपाताभिवादनादिवत् अस्य केषाञ्चित् कर्तव्यानां प्रतिपादनपरमित्येतावदेव ; न तु "कृपया निस्स्पृहो वदेत्" इत्येवंवर्तमानस्यानन्यप्रयोजनस्याचार्यस्य विषये प्रत्युपकारप्रतिपादनपरम् ।

भगवत्सकाश इव आचार्यसकाशेऽपि वर्तेत, तस्य यथा प्रियो भवति तथाऽऽचार्यस्यापि प्रियो भवेदिति वेदान्तेषूक्तमपि, "न प्रमाद्येत् गुरौ शिष्यो वाङ्मनःकायकर्मभिः । अविभज्याऽऽत्मनाऽऽचार्यं वर्तेतास्मिन् यथाऽच्युते ॥", "देवमिवाचार्यमुपासीत" इति शाण्डिल्यापस्तम्बाद्युक्तमपि नाचार्यस्य विषये प्रत्युपकारप्रतिपादनपरम् ; किन्तु शास्त्रचक्षुषोऽस्योन्मीलितचक्षुरन्धभावानापत्त्यर्थं भगवदनुभववद्विलक्षणस्यास्यानुभवस्य हानिर्जन्मभिक्षोरस्य मा भूदित्येतावत्परम् ।

इत्थमेतद्विषये प्रत्युपकारो नास्तीत्येतमर्थम्, "ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते । प्रतिप्रदानमथवा दद्यात् शक्तित आदरात् ॥" इति शाण्डिल्यभगवान् अनुजग्राह । अत्र यथाशक्तिप्रदानवचनमपि

तदादरपरीवाहरूपेण तत्प्रतिपादनमात्रम् । एतावन्मात्रमाश्रित्यायं प्रत्युपकारकर्तृत्वेन स्वं मन्तुमार्हन्तीं न बिभर्ति ।

(शिष्यकृत्यम्)

एवं प्रत्युपकाररहितेनानेन किं कर्तुमुचितमिति चेत्— **उपदिष्टानामर्थानाम्**, "कपालस्थं यथा तोयं श्वदृतौ च यथा पयः । दुष्टं स्यात् स्थानदोषेण वृत्तहीने तथा श्रुतम् ॥" इत्युक्तरीत्या **विपरीतानुष्ठानैः कपालस्थतोयादी**नामिवानुपजीव्यत्वानापादनम्, "यच्छ्रुतं न विरागाय न धर्माय न शान्तये । सुबद्धमपि शब्देन काकवाशितमेव तत् ॥" इत्युक्तरीत्या अध्ययनमात्रस्य प्रयोजनत्वानापादनम्, **एतैर्वान्ताशित्वानापत्तिः**, एषां सर्वेषाम्, "पण्डितैरर्थकार्पण्यात् पण्यस्त्रीभिरिव स्वयम् । आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥" इत्यादिषु **परिहसितरीत्या गणिकालङ्कारत्वापत्तेः** क्रय्यचन्दनभावापत्तेः **चत्वरधानाराशिभावापत्तेः वानरकरगतमालात्वापत्तेश्चाकरणम्**, आदौ **विद्यया** "शेवधिस्तेऽस्मि रक्ष माम्" इति ब्राह्मणं प्रति स्वयं कृतामपेक्षामनुसृत्य, पूर्वमेव(प्रथममेव) **असूयादीन्** **करस्थीकृतवतां** करयोरप्रदर्शनपूर्वं संरक्षणम्, जनुषान्धं स्वं विस्मृतिशून्यामरपरिषदर्हतया परिष्कृतवतः परमोपकारकस्य कर्तुमर्हः **प्रत्युपकारो** नास्तीति विज्ञाय, "एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः । विष्णुना व्यपदेष्टव्यस्तस्य सर्वं स एव हि ॥" **इत्युक्तदशाधिका**, "वसिष्ठव्यपदेशिनः" इत्युक्तरीत्या **शरण्येन** भगवता जनित्वा, **वंशक्रमागतेति**

दायवत् गृहीता दशा इयमिति परिगृह्य, [1]"मम दुर्मनो न्यवर्तयः, तव किं करवाणि" इत्यवस्थानञ्च अस्य प्राप्तानि (समुचितानि)।

(गुरुपरम्परानुसन्धानपूर्वकमुपदेशस्य कर्तव्यता)

स्वेनेत्थं लब्धस्य रहस्यत्रयसारार्थरूपस्य महाधनस्य पूर्वाधिकारोक्तरीत्योचितस्थानज्ञानपूर्वकं **समर्पणकाले**, "कथयामि यथापूर्वं दक्षाद्यैर्मुनिसत्तमैः। पृष्टः प्रोवाच भगवान् अब्जयोनिः पितामहः॥ तैश्चोक्तं पुरुकुत्साय भूभुजे नर्मदातटे। सारस्वताय तेनापि मह्यं (मम) सारस्वतेन च॥" इति श्रीपराशरब्रह्मर्षिणा भगवते मैत्रेयाय यथोपदिष्टम्, तथा गुरुपरम्परां प्रकाशयता सता—स्वस्य **कृतज्ञता** अर्थस्य **श्रैष्ठ्यं** च यथा संप्रतीयेत तथा उपदेष्टव्यम्। अध्यात्मरहस्यानां प्रवक्त्रा संप्रदाये असत्येव पत्राणि दृष्ट्वा वा भित्तिव्यवधानपूर्वं श्रुत्वा वा प्रवचने क्रियमाणे चोरिताभरणधारण इव द्रष्टृभ्यः सर्वेभ्यः स्वस्य भेतव्यता स्यात्। "यदृच्छया श्रुतो मन्त्रश्छन्नेनाथ छलेन वा। पत्रेक्षितो वा व्यर्थः स्यात् प्रत्युतानर्थदो भवेत्॥" इत्याद्युक्तरीत्या प्रत्यवायपर्यन्तता च स्यात्। श्रवणपूर्वकप्रवचनस्थलेऽपि, "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया", "प्रणिपत्याभिवाद्य च" इत्याद्युक्तनियमत्यागपूर्वकं श्रुत्वा प्रवचने क्रियमाणे कालपुरुषदानप्रसङ्गगृहीताभरणधारणे इव सर्वद्रष्टृजुगुप्सनीयता स्यात्। "यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति। तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति॥" इत्युक्तरीत्याऽनर्थावहं च स्यात्। **यथान्यायं**

---

1 एन्नैत्तीमनम् केडुत्ताय् उनक्केन् शेय्हेन्—तिरुवाय्-2-7-8

श्रुत्वा प्रवचने क्रियमाणेऽपि प्रवचनकाले **गुरोरप्रकाशने**, अनेनोच्यमाना अर्था निर्मूलवल्लीवत् आधार(मूल)हीनाः स्युरिति शिष्यस्यातिशङ्कावहतयाऽनादरविषयाः स्युः। "स्वगुरूणां स्वशिष्येभ्यः ख्यापनं चाकृतं तथा" इति **द्वात्रिंशदपचारवर्गे गुरोरप्रकाशनमपि पठितम्**। तदा, "गुरुं प्रकाशयेत् धीमान् मन्त्रं यत्नेन गोपयेत्। अप्रकाशप्रकाशाभ्यां क्षीयेते संपदायुषी॥" इत्युक्तरीत्या **ज्ञानवैशद्यपूर्विका भगवदनुभवसंपद् आत्मसत्तानुवृत्तिहेतुः शेषत्वानुसंधानपूर्वकस्वनिष्ठा च** नश्येताम्। गुरुं प्रकाशयता सताऽपि तत्कृत**शास्त्रीयोपदेशविरुद्धे** प्रवचने क्रियमाणे, **विप्रलम्भक** इति प्राप्तनामा, "ज्यौतिषं व्यवहारं च प्रायश्चित्तं चिकित्सितम् (त्सनम्)। विना शास्त्रेण यो ब्रूयात् तमाहुर्ब्रह्मघातकम्॥" इत्युक्तरीत्या **पापिष्ठश्च** स्यात्।

**सच्छिष्याय** प्राप्तदशायामुपदेशस्याकरणे **लुब्ध** इति प्राप्तनामा, "पात्रस्थमात्मज्ञानं च कृत्वा पिण्डं समुत्सृजेत्। नान्तर्धाय स्वयं याति जगद्बीजमबीजकृत्॥" इति भगवन्नियोगमतिलङ्घितवांश्च स्यात्।

अतः—दीपधरेण स्वं राज्ञि कार्यविशेषार्थं गमनायाऽऽज्ञापितवति सति, यथा दीपं तदर्हस्य हस्ते दत्त्वा गम्यते तथा—सत्पात्रभूतेभ्यः स्वेन प्रवचने क्रियमाणे स्वस्योपदेष्टारमाचार्यं प्रथमतः प्रकाश्य, पश्चात् स्वस्योपदिष्टा अर्थाः प्रोच्यन्ते चेत्—तथा, कैश्चित् कारणैर्दिव्यचक्षुःश्रोत्रे लब्ध्वा स्वेन ताभ्यां विदित्वा प्रोच्यमाना अर्था अपि, "व्यासप्रसादात् श्रुतवान् एतद्गुह्यमहं परम्। योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः

स्वयम् ॥" इत्युक्तरीत्या सदाचार्यप्रसादात् इमान् अर्थान् अज्ञासिषम्, मत्सामर्थ्येन ज्ञात्वा न वदामि' इतीदं तत्त्वं प्रकाश्य प्रतिपादने क्रियमाणे, अनेनोच्यमानाः सर्वेऽप्यर्थाः सर्वेषामादरणीयाः स्युः । अयं कृतज्ञोऽभूदिति सात्त्विकैरनुगृह्यमाणः, सत्यवादी अभूदित्युपनिषद्भिः औपनिषदपरमपुरुषेण च स्वनिर्विशेषं प्रमाणभूतत्वेनाऽऽद्रियमाणश्च स्यात् । एवं कृतज्ञावहितशिष्यविषये स्वेन कृता कृषिः फलितेति आचार्योऽपि कृतार्थः स्यात् ॥

साक्षान्मुक्तेरुपायान् यो विद्याभेदान् उपादिशत् ।
कथ्यते मोक्षशास्त्रेषु स तु श्रेष्ठतमो गुरुः ॥
आचार्यवत्तया मोक्षमामनन्ति स्मरन्ति च ।
इहामुत्र च तत्पादौ शरणं देशिका विदुः ॥

(अधिकारार्थसंग्राहिका गाथा)

[1]आरोप्य मनसि प्रदीप्तं ज्ञानदीपम्, अन्धकारं सर्वमपि निवर्तितवतां कमपि प्रत्युपकारमाश्चर्यचेष्टितः परमात्माऽपि न पश्यति । स्तवनेन संप्रीणनं बुद्धौ स्वीकरणं जृम्भमाणायाः कीर्तिघोषणेन वर्धनं च अत्यल्पानि हि भवन्ति पूर्वं प्राप्तानामर्थानां गौरवे भाविते (पूर्वं प्राप्तेभ्योऽर्थेभ्यः?) ॥

---

पर्ट्रिमनत्तेड्रिन् ज्ञानविलक्कै यिरुलनैत्तुम्
मार्ट्रिनवर्कोरु कैम्मारु मायनुङ्काणकिल्लान्
पोर्ट्रियुहप्पदुम् पुन्दियिर्कोल्वदुम् पोङ्गुपुगऴ्
शार्ट्रिवलर्प्पदुं शर्ट्रल्लवो मुन्न पेर्ट्रतर्के.

अध्यासीनतुरङ्गवक्त्रविलसज्जिह्वाग्रसिंहासनात्
आचार्यादिह देवतां समधिकामन्यां न मन्यामहे ।
यस्यासौ भजते कदाचिदजहद्भूमा स्वयं भूमिकां
मग्नानां भविनां भवार्णवसमुत्ताराय नारायणः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीरहस्यत्रयसारे
शिष्यकृत्याधिकार एकत्रिंशः ।

श्रीमते निगमान्तमहादेशिकाय नमः

—०—०—

श्रीः

## निगमनाधिकारः ३२

करबदरितविश्वः कश्चिदाचार्यदृष्ट्या
मुषितनिखिलमोहो मूलमन्त्रादिभोगः ।
सगुणविषयसिद्धौ संप्रदायं प्रयच्छन्
सुचरितसिलहारी सूरिबृन्दाभिनन्द्यः ॥

---

(सर्वपूर्वाधिकारार्थसंग्रहः)

इत्थम् (1) अस्य जीवात्मनः नित्यसूरिनिर्विशेषं भगवदनुभवरसास्वदनस्वरूपयोग्यस्यापि सतः अनादिकालात् तद्रहितस्य कस्मिंश्चिदवसरे विचारपूर्वं सदाचार्यसंबन्धे जाते तत्त्वहितज्ञानाय प्रवृत्तिम्, (2) एतत्प्रतिपादकप्रमाणेषु रहस्यत्रयस्य सारतमत्वम्, (३) एते-

ज्ञायमानेष्वर्थेषु ईशेशितव्ययोः शरीरात्मभावसंबन्धादीनां प्रधानप्रतितन्त्ररूपेण ज्ञातव्यत्वम्, (4) अनेन सम्बन्धेन सह ज्ञातव्यत्वेन पूर्वाचार्यसंगृहीतस्यार्थपञ्चकस्य रहस्यत्रयेऽन्तर्भावप्रकारम्, (5) अस्मिन्नर्थपञ्चके तत्त्वत्रयादिविभागचिन्तां कुर्वतां तात्पर्यम्, (6) अस्मिन् तत्त्वत्रये ईश्वरत्वेन सात्त्विकशास्त्रेषूक्तः श्रियः पतिरित्येतमर्थम्, (7) इमान् अर्थान् प्रबुद्धवतो मुमुक्षुभूतस्य मोक्षोपायोन्मुखत्वम्, (8) अधिकारिविभागम्, (9) एषामधिकारिणामनुरूपमुपायविभागम्, (10) एषूपायेषु स्वतन्त्रप्रपत्तिनिष्ठस्याधिकारविशेषव्यवस्थाम्, (11) सकृत्कर्तव्यस्यास्योपायस्य अनुरूपतया विहितं परिकरविभागम्, (12) मुमुक्षोः सपरिकरभरन्यासरूपप्रधानकर्तव्यस्य सन्निवेशप्रकारम्, (13) इत्थं साङ्गप्रपदनानुष्ठानं कृतवतः सर्वरक्षणाधिकृतस्वामिसन्निधौ न्यस्तभरतया कृतकृत्यताम्, (14) इमां निष्ठां स्वस्य संपन्नामवलोक्य स्वयं समाश्वस्ततयाऽवस्थितेरभिज्ञानानि, (15) अस्याऽऽर्तिमान्द्यात् शरीरेऽनुवृत्ते सति इह जीवनकाले स्वयंप्रयोजनस्य स्वरूपप्राप्तशेषवृत्तिरूपस्य कैङ्कर्यस्य स्थितिप्रकारम्, (16) भागवतकैङ्कर्यस्य भगवत्कैङ्कर्यकाष्ठाभूतताम् (17) शासितुः स्वामिनो ऽनभिमतस्य कैङ्कर्यत्वाभावात् यथाशास्त्रं कैङ्कर्यस्यानुष्ठेयताम्, (18) अस्मिन् शास्त्रीयकैङ्कर्ये प्रवृत्तस्यापराधानुपनतेः, उपनतानां निवृत्तेश्चोपायान्, (19) अस्य निरपराधकैङ्कर्यस्य स्थानत्वेन अनापदि स्वीकर्तुमुचितं भागवताश्रितं भगवत्क्षेत्रमित्येतमर्थम्, (20) एवमवस्थितस्याधिकारिणः शरण्यसंकल्पविशेषेण प्रशस्तदेशकालादि-

नियतिनैरपेक्ष्येण स्थूलशरीरान्निर्याणस्य प्रकारम्, (21) एवं निर्गमने पित्रा यौवराज्याभिषेकाय आहूतो राजकुमारो यथा गच्छेत्, तथा महतोत्कर्षेण सह परमपदपर्यन्तमर्चिरादिमार्गेण गमनम्, (22) एवं गते सति तत्र जायमानस्य स्वच्छन्दकैङ्कर्यपर्यन्तपरिपूर्णानुभवरूप-मुक्तैश्वर्यस्य प्रकारम्, (23) एवमुक्तेषु ज्ञातव्येषु प्रधानभूत सिद्धोपाय-विषयकस्य (24) कर्तव्येषु प्रधानभूतसाध्योपायविषयकस्य (25-26) एत-दुपायनिष्ठस्य प्रभावे शास्त्राननुमतं यत् आधिक्यं यच्चन्यूनत्वं तत्तद्विषयकस्य च आहारदोष-हैतुकसंसर्ग-युगस्वभावादिभिर्जायमानस्य व्यामोहस्य कर्तुमर्हान् परिहारप्रकारान्, (27, 28, 29) एषां सर्वेषामनुसन्धानस्य मुखभूते रहस्यत्रये पदवाक्ययोजनाः, (30) एषामर्थानां सर्वेषां यथाशास्त्रं संप्रदायप्रवर्तनं कुर्वत आचार्यस्योपदेशादिप्रवृत्ति-निवृत्तिविषयव्यवस्थाम्, (31) एवं परमोपकारकस्याचार्यस्य विषयेऽनु-रूपस्य प्रत्युपकारस्याभावान्नित्यऋणिना शिष्येण यत् कर्तुं युक्तम्, तच्च, सर्वान् एतान् अर्थान् श्रुतिस्मृतिसूत्रसंप्रदायैरेतदनुकूलसमीचीन-न्यायैश्च—अज्ञानसंशयविपर्यया यथा निवर्तेरन् तथा—यथाश्रुतं यथाहृदयं चोपापीपदाम ।

(एतच्छास्त्रावलम्बनप्रयोजनम्)

इमे सर्वेऽप्यर्थाः प्रथमतः सत्संप्रदायवतः सदाचार्यस्य सन्निधौ सम्यगुपसन्नेन, "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इति विज्ञाप्य सादरेण विशदं श्रुत्वा, एतदुपयुक्ताः सद्वार्ताश्च "सुव्याहृतानि महतां सुकृतानि ततस्ततः । संचिन्वन् धीर आसीत सिलहारी सिलं यथा ॥" इत्युक्तरीत्या विशोध्योपादाय अभ्यासभूयस्तया ज्ञातव्याः ।

"सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम" इति, "धर्मस्य तत्त्वं निहितं गुहायाम्" इति, "अणीयान् क्षुरधारायाः को धर्मं वक्तुमर्हति" इति च **ऋषिभिरपि** क्लेशेन **पदविन्यसन**स्यार्हेषु स्थलेषु, "महाजनो येन गतः स पन्थाः" इति, "धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः । क्रीडार्थमपि यद् ब्रूयुः स धर्मः परमो मतः ॥" इति चोक्तरीत्या **श्रुतिस्मृतिशरणैः पूर्वाचार्यैः कण्टकशोधनं** कृत्वा गते मार्गे गमनाद-स्मास्वापतन् कश्चित् प्रत्यवायो नास्ति ।

अस्मिन् मार्गे गतवद्भिः, "अविश्रान्तमनालम्बमपाथेयमदेशिकम् । तमःकान्तारमध्वानं कथमेको गमिष्यसि ॥" इति, "निष्पानीये निरालम्बे निश्छाये निरपाश्रये । द्राघीयस्यशुभे मार्गे यमस्य सदनं प्रति ॥" इति च **महर्षीणां** हृदयशोकविषयाः पन्थानो न द्रष्टव्या भवन्ति । **पञ्चाग्नि-विद्यो**क्तरीत्या कार्पासानुभूतान् द्वादशापि (शेव)क्लेशान् अनुभूय, घटीयन्त्र-कुण्डिकावद् आरोहणावरोहणरूपेण **धूमादिमार्गेण** न परिभ्रमितव्यम् ।

"त्वं न्यञ्चद्भिरुदञ्चद्भिः कर्मसूत्रोपपादितैः । हरे विहरसि क्रीडा-कन्दुकैरिव जन्तुभिः" इत्युक्तायां **भगवल्लीलोपकरणदशायां** निवृत्तायाम् अन्यान्यानि अतिशयितफलानि प्राप्नुवतामधिकारिणां मार्गापेक्षया **पुरुषार्थभूयस्तया पुनरावृत्ति**राहित्येन च, "तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम्", "उत्क्रामति च मार्गस्थः शीतीभूतो निरामयः", "देवयानः परः पन्था योगिनां क्लेशसंक्षये" इत्याद्युक्तरीत्या **अत्यन्त-**विलक्षणेन, "आत्मा केवलतां प्राप्तो यत्र गत्वा न शोचति", "अत्यर्का-नलदीप्तं तत् स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं

